अधिकारिणः, कालविशेषाः सविस्तरं प्रतिपादिताः षोडशभिरध्यायैः। तेषां प्रपञ्चने ग्रन्थविस्तरः स्यादिति मत्वा अत्र विरम्यते।

द्वितीयाव्रतानि बहूनि विधीयन्ते। तत्र, यमद्वितीया कार्तिकशुक्लद्वितीया, सेव यमद्वितीया - यमुना, यमं स्वगृहे संभोज्य, पुरस्कृतवती, तत्र सोदरीहस्तेन भोजनं कार्यं, तस्या अभावे पितृव्यपुत्र्या अपि गृहे भोजनं कर्तव्यं, अथवा मातुलपुत्र्या गृहे - साऽपि सोपचारं पूजनं कुर्यात्। किंच तस्मिन् दिवे सोदर्यै वस्त्राभरणादि मंगलद्रव्याणि हरिद्राकुंकुमादीनि च दद्यात्। एवं कृते भ्रातृसोदर्योः आयुरैश्वर्याद्यभिवृद्धिः॥

तृतीयाव्रतानि अनेकानि प्रतिपादितानि – तत्र वैशाखशुक्लतृतीया अक्षयतृतीया - तस्यां कृतयुगारम्भः अतः कृतयुगादिः इत्यपिप्रथा। तस्यां लक्ष्मीनारायणं संपूज्य ब्राह्मणपूजनं कर्तव्यम्। दध्योदनं वासः-छत्रं पादुके व्यजनं, तक्रोदकगुडोदकानि, यथा संभवं देयानि - तत्र पितृनुद्दिश्य श्राद्धतर्पणादिकर्तव्यम्। तत्र दत्तंसर्वं अक्षय्य पुण्यप्रदं, तस्मात् अक्षय्य तृतीयेतिप्रसिद्धिः। यत्किंचित् करणेन अशून्यं कुर्यात्। यत्किंचिद्दानेन महाफलावाप्तिः॥

चतुर्थी — गणेशपूजनं मातृपूजनं चन्द्रपूजनमधिकृत्य-विस्तरशः प्रतिपादितम्। तत्र भाद्रपदशुक्लचतुर्थी प्रायशः गणेशपूजनपुण्यकालत्वेन प्रसिद्धा। तस्यां भक्ष्यविशेषैः विशिष्य मोदकापूपपायसादिभि, रक्तपुष्पैः, दुर्वायुग्मैः, सविधमं गणेशपूज-

वमवश्यं कर्तव्यम्। शक्तौ सत्यां - अष्टद्रव्यसाध्यगणपति-होमः प्रशस्तः। एवं कृते निष्प्रत्यूहकार्यसिद्धिर्भवति॥

पंचमी व्रतानि नैकविधानि उक्तानि। तत्र - स्त्रीणां रजोदर्शनसमये संभावितसर्वदोषनिवृत्तये ऋषिपंचमीव्रतं सप्तर्षीनुद्दिश्य सनियमं कर्तव्यम्। उद्यापनमपि स्वीयवित्तानुसारं कर्तव्यम्। नागपूजा श्रावणशुक्लपंचम्यां विहिता, सर्पभयनिवृत्तये॥

षष्ठीव्रतानि बहुशः प्रतिपाद्य - कार्तिकशुक्लषष्ठयां शूरोनिहतः, अतः अप्रतिभटशत्रुसंहरणेन विजयंप्राप्तस्य गुहदेवस्य आराधनं देवैःकृतं, मनुजैरपि यथासंभवं कर्तव्यम्। षष्ठीव्रतानुष्ठानेन सत्पुत्रप्राप्तिः, बालारिष्टनिवृत्तिः, इत्यादिकं प्रतिपादितम्। मार्गशीर्षशुक्लषष्ठी,—चंपाषष्ठीति प्रथिता तस्यामपि स्कन्दाराधनं कर्तव्यम्, इत्यादि प्रतिपादितम्॥

सप्तमीव्रतानि नैकविधानि - तत्र माघशुक्लसप्तमी रथसप्तमी सूर्यरथस्यपरिवर्तनात्। तत्र वैवस्वतमनोः स्वाधिकारप्राप्तिः, अतः वैवस्वतमन्वादिः इति पुण्यकालत्वेन प्रथिता॥

तस्मिन् दिने सप्तार्कपत्राणि शिरसिनिक्षिप्य सविधि स्नानं आवश्यकं, मन्वादिपुण्यकालत्वात् पितृतर्पणमपिकर्तव्यम्। भूमौ रथं विलिख्य, तत्र सूर्यबिंबंस्थापयित्वा सूर्यपूजाकर्तव्या, शर्करान्नदानं प्रशस्तम्॥

अष्टमी—जन्माष्टमी, श्रावणबहुलाष्टमी, भूभारावतरणाय भगवतोवासुदेवस्यावतारदिनम्। अत्र उपवासः पूजनं रात्रौ-

जागरणम् इत्यादिकं अनुष्ठेयम् । इदं जन्माष्टमीव्रतं नित्यम् रोहिणीयोगश्चेत् जयन्ती, तदपि अनुष्ठेयम् । अत्र भोजने महान्दोषः । यथाशक्ति उपवास पूजनभजनादिना व्रतानुष्ठानं कर्तव्यम् ॥

नवमी—चैत्रशुद्धनवम्यां श्रीरामावतारः, तस्मिन् दिने उपवासः श्रीरामपूजा रामभजनादिकं कर्तव्यम् । इदमपि व्रतं नित्यं, अकरणेदोषः । तत्र भोजनं निषिद्धम् । यथाशक्ति न हापनीयम् ॥

नवरात्रमहोत्सवः वसन्तकाले, शरत्काले च कर्तव्यः । तत्र शक्तिपूजनं, नवसुदिनेषु कन्यापूजनं, द्विवयस्का कन्या प्रथमदिने पूजयेत्, ततः प्रतिदिनं एकोत्तरवयस्कां पूजयेत् । "द्विवर्षाद्याः दशान्ताब्दाः कुमारीः प्रतिपूजयेत्" इति । एवमाराध्य नवमीदिने दुर्गालक्ष्मीसरस्वतीपूजनं विभवानुसारेण कर्तव्यम् । अत्रैव मध्ये अष्टम्यां रात्रौ सिंहारूढादुर्गा आविर्भवति तत्र दुर्गाराधनम् कर्तव्यम् । इयमेव महानवमीत्युच्यते ॥

दशमी—तत्र विजयदशमी - नवरात्रपूजानन्तरं विजयदशम्यां विजयापूजा तत्र प्रस्थानं विजयावहम्, अन्यानि च कार्याणि तत्र प्रशस्तानि ॥

एकादशी—उपवासपूर्वकं देवपूजा । विशेषतः महाविष्णु पूजनं प्रशस्तं एकादशीव्रतं वर्षसाध्यं कृत्वा उद्यापनमपि कर्तव्यम् कृष्णैकादश्यपि गृहस्थैः उपोषितव्या । तत्र उपवास निषेधः काम्यैकादशीविषयः । पञ्चवर्षप्रभृति अशीति वयः पर्यन्तं, एकादश्यां

उपवासपूजादिकं कर्तव्यम्, एकादशीव्रतं नित्यम्। उपवासा-शक्तौ प्रतिनिधिर्वाऽनुष्ठेयः आषाढशुक्लैकादश्यां विष्णुस्वापा-रंभः, तत्प्रभृतिशुभकार्यमप्रशस्तम् ॥

द्वादशी—तत्र भगवदाराधनपुरस्सरं ब्राह्मणान् भोज-यित्वा स्वयमश्नीयात्। अल्पद्वादश्यां द्वादशीसमय एव सर्वंकृत्वा भुञ्जीत। श्रवणनक्षत्रयोगे महाफलं उपवासतः। श्रावणशुक्ल-द्वादश्यां वामनावतारः। कार्तिक्यां शुक्लद्वादश्यां विष्णुप्रबोधः। तत्र प्रबोधोत्सवः कार्यः। तुलसीपूजनं तुलसीविवाहश्च कार्यः। द्वादशीव्रतं महाफलदम्। द्वादशी व्रतेनैव अदितिः भगवन्तं पुत्रं प्राप।

इति व्रतखण्डे प्रथमो भागः

—*—

## द्वितीयो भागः

चतुर्वर्गचिन्तामणिः।

व्रतखण्डम् द्वितीयभागात्मकम्।

अथ सप्तदशोऽध्यायः। अथ त्रयोदशीव्रतानि।

धर्मादपेतं न कदाचिदेव, यदीयवाचोविषयत्वमेति।
स एव हेमाद्रिरनुक्रमेण त्रयोदशीषु व्रतवृन्दमाह ॥

युधिष्ठिर उवाच।

भगवन् भूतभव्येश संसारार्णवतारक।
व्रतं कथय किञ्चिन्मे रूपसौभाग्यदायकम् ॥

अनङ्गः प्रीणितो येन फलं यच्छति केशव ।
आत्मवद्रूपसौभाग्यं तन्मे विस्तरतो वद ॥

कृष्ण उवाच ।

अनङ्गः श्रूयते देवः शूलपाणिः पिनाकभृत् ।
तस्मिन् सम्पूजिते पार्थ किन्नाप्नोति नरो भुवि ॥
तेन ते कथयिष्यामि शूलपाणिव्रतेष्विदम् ।
यन्नकस्यचिदाख्यातं व्रतानामुत्तमं व्रतम् ॥
तीर्त्वा भक्त्या नरो मर्त्यो यद्यदिच्छति पाण्डव ।
तत्तदाप्नोत्यसन्दिग्धमनङ्गाख्या त्रयोदशीम् ॥
पुरा दग्धेन कामेन त्रिनेत्रनयनाग्निना ।
भस्मीभूतेन लोकेऽस्मिन् सङ्कल्पस्थेन पाण्डव ॥
अनङ्गेन कृता ह्येषा तेनानङ्गत्रयोदशी ।
अपरं श्रुयते यस्या पुराणेनेति विश्रुतम् ॥
नामविर्वचनं पार्थं कथयामि शृणुष्व तत् ।
अनङ्गो भगवान् शम्भुः तेजोमूर्तिरगोचरः ॥
स एव देवो येनास्या तेनानङ्गत्रयोदशी ॥
प्रसिद्धा समनुप्राप्ता नित्या सर्वफलप्रदा ।
मार्गशीर्षेऽमले पक्षे त्रयोदश्या समाहितः ॥
लिङ्गं स्वयम्भुवं भूतमभावे यत्प्रतिष्ठितम् ।
तदनङ्गमिति प्रोक्तं पूजयेत् भक्तितो व्रती ॥
दधि-दुग्ध-घृत-क्षौद्र-शर्कराद्यमृतैः शुभैः ।
[1]स्थाप्य एवामृतैः पश्चात् स्नापयेद्गन्धवारिणा ॥

1. स्नापयित्वाऽमृतैः - पा. भे.

धूपदीपादिनैवेद्यैः पुष्पैः तत्कालसम्भवैः ।
फलैर्नानाविधैः भक्ष्यैः गीतवादित्रनिस्वनैः ॥
श्रुतनामान्यथोच्चार्य होमः कार्यः तिलाक्षतैः ।
अश्वत्थ-जाति-नारङ्ग-पायसैर्मधुनापिबेत् ॥
अश्वत्थादि क्रमात् काष्ठ-पुष्प-फल-नैवेद्यप्राशनानि ।
एवमुत्तरेष्वपि मासेषु ।

व्यास उवाच ।

मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी ।
तस्यामुपोष्य विधिवत् सम्पूज्य गिरिजापतिम् ।
ब्रह्महत्यादिभिः पापैः मुक्तो भवति मानवः[1] ॥

ब्रह्मोवाच—

कामं पूज्य त्रयोदश्यां सुरूपो जायते ध्रुवम् ।
इष्टां रूपवतीं भार्यां लभेत् कामांश्च पुष्कलान् ॥

इति चतुर्वर्गचिन्तामणौ व्रतखण्डे त्रयोदशीव्रतानि ।

अथाष्टादशोऽध्यायः ।

अथ चतुर्दशीव्रतानि ।

श्रीकृष्ण उवाच—

अनन्तव्रतमप्यन्यत् तिथावस्यामनुत्तमम् ।
सर्वपापहरं नृणां स्त्रीणां चैव युधिष्ठिर ॥

---

1. मन्दवारे प्रदोषोऽयं दुर्लभः सर्वदेहिनाम् ।
तत्रापि दुर्लभस्तस्मिन् कृष्णपक्षसमागमः ॥
प्रथमारम्भश्च मन्दवारयोग एव कार्यः । यदा त्रयोदशी शुक्ला मन्दवारेण-संयुता । आरभेत्तद्व्रतं तत्र सन्तानफलसिद्धये ॥ निर्णयसिन्धुः ॥

शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत् ।
तस्यानुष्ठानमात्रेण सर्वपापात् विमुच्यते ॥

युधिष्ठिर उवाच —

कृष्ण! कोऽयमनन्तेति प्रोच्यते यस्त्वया विभो ।
किं शेषनागः अहोस्विदनन्तः तक्षकः स्मृतः ॥
परमात्मा तथाऽनन्त उताहो ब्रह्म उच्यते ।
क एषोऽनन्तसंज्ञो वै तथ्यं मे ब्रूहि केशव ॥

श्रीकृष्ण उवाच—

अनन्त इत्यहं पार्थ मम रूपं निबोध वै ।
आदित्यादिग्रहा वारा यः काल उपपद्यते ॥
कला-काष्ठा-मुहूर्तादि दिनरात्रि शरीरवान् ।
पक्ष-मासर्तु-वर्षाणि युगकल्पव्यवस्थया ॥
योऽयं कालो मयाख्यातः सोऽनन्त इति कीर्त्यते ।
सोऽहं कलावतीर्णोऽत्र भुवो भारावतारणात् ॥
दानवानां विनाशाय साधूनां पालनाय च ।
अनादि मध्य पर्यन्तं कृष्णं विष्णुं हरिं शिवम् ॥
ब्रह्माणं भास्करं सोमं सर्वव्यापकमीश्वरम् ।
विश्वरूपं महाकालं सृष्टिसंहारकारकम् ॥
प्रत्ययार्थं मया रूपं फाल्गुनाय प्रदर्शितम् ।
सर्वमेव महाबाहो योगिध्येयमनुत्तमम् ॥
विश्वरूपमनन्तञ्च यस्मिन्निन्द्राश्चतुर्दश ।
वसवोऽष्टौ द्वादशार्का रुद्रा एकादशामलाः ॥

सप्तर्षयः समुद्राश्च पर्वताः सरितो द्रुमाः ।
नक्षत्राणि दिशो भूमिः पातालं भूर्भुवः सुवः ॥
मा कुरुष्वात्र सन्देहं सोऽहं पार्थ न संशयः ।

सनत्कुमार उवाच—

अथोत्तमं परं ब्रह्मन् अपरं शृणु भद्रदम् ।
चतुर्दश्यां महाभाग सर्वरोगार्तिशान्तये ॥
ज्वर-गुल्म-प्लीह-शूल-कुष्ठा-पस्मारसंयुतैः ।
मर्त्यैः नित्यमिदं कार्यं तदार्तिव्यपनुत्तये ।
स्नात्वा तु धृतसङ्कल्पः सर्वकामविवर्जितः ॥
आदित्यमुपतिष्ठेत गायत्रीश्च जपन्मुहुः ।
उदयात्पूर्वमारभ्य यावदस्तगतो रविः ॥
निराहारी जितक्रोधो तावत्तिष्ठेत् समाहितः ॥
रवावस्तङ्गते देवमर्चयेत् पुरुषोत्तमम् ।
उपोष्य विधिवत् स्नात्वा तथा पर्वणि सुव्रत ॥
पर्वणि = पौर्णमास्याम् ।

एतच्च शुक्लचतुर्दशीव्रतं; पुराणे शुक्लपक्षस्य व्रतप्रकरणे पठितत्वात् ।

अर्चयित्वा यथा योग्यं परमात्मानमच्युतम् ।
गायत्रीमभ्यसेत्तत्र देवदेवस्य सन्निधौ ॥
सहस्रं दशसाहस्रं शतञ्चापि स्वशक्तितः ।
अथ ताम्रमयं पात्रं मृण्मयं वा समानयेत् ॥

घृतेन पूर्णं तत्कृत्वा पञ्चप्रस्थमितेन च ।
सुवर्णं रजतं मुक्ता रत्नान्यानि तिलास्तथा ॥
अन्तर्निधाय तत्कुर्यात् नववस्त्रद्वयान्वितम् ।
स्थापयित्वा च तस्याग्रे पूजनान्ते महामतिः ॥
तत्र मार्त्तण्डमारभ्य सम्पूज्य च यथाविधि ।
प्रदक्षिणनमस्कारस्तोत्रालापैर्मुदा युतः ॥
स्थितः प्ररूढतिमिरनिर्भेदचतुरप्रभः ।
नानाव्याधिसमुत्थार्तिं मम संशमयत्वितः ॥
पुरुषः पुष्कराक्षश्च सर्वान्तरसमास्थितः ।
परमात्मा स्वयं क्लेशं व्यपोहतु ममाच्युतः ॥
इत्यनेनैव मन्त्रेण स तत्रासो विवृत्य च ।
आत्मानं दर्शयेत्तत्र यथा सुस्पष्ट लक्षितम् ।
विप्राय वेदविदुषे दरिद्राय च दापयेत् ॥
एवं कुर्वन्नरो लोके सर्वरोगविवर्जितः ।
सौम्यगात्रः प्रवृद्धश्रीः चिरमायुश्च विन्दति ॥
यथाऽऽपः शमयन्त्यग्निं समिद्धमति कामतः ।
तथा व्रतमिदं ब्रह्मन् रोगाग्निं शमयेदिह ॥
नानाव्याधिभृशार्त्तानां नाराणामिह सुव्रत ।
तत् प्रतापशमोपायो व्रतादन्यन्न विद्यते ॥

इति गारुडपुराणोक्तं गायत्रीव्रतम् ।

देव्युवाच—

कथं यमपुरीं देव वर्जयित्वा शिवं व्रजेत् ।
एतदेव महाश्चर्यं प्रत्ययं कुरु मे प्रभो ॥

शिव उवाच—

शृणु देवि प्रवक्ष्यामि कथां पौराणिकीं शुभाम् ।
यमशासनहन्त्री च शिवलोकप्रदायिनी ॥
न ते यमपुरं यान्ति यैः कृतेयं शिवप्रदा ।
शृणुदेवि महाश्चर्यं यज्जातं शिववल्लभे ॥
आसीद्राजा विदेहाना प्रजापालन तत्परः ।
सुधर्मा नामविख्यातः सदा परमधार्मिकः ॥
पृथिव्यां सर्वे राजानो वर्तन्ते वशवर्तिनः ।
तस्य राज्ये न वै कश्चित् व्याधितो दुःखितोऽभवत् ॥
साधून् पालयते राजा पुत्रवत् सुरसुन्दरि ।
एवं गुणविशिष्टस्य तस्य राज्ञः प्रिया शुभा ॥
भार्या तिलोत्तमा नाम सर्वैः समुदिता गुणैः ।
रूपलावण्य संयुक्ता स्थिरयौवन संस्थिता ॥
एवं गच्छति काले तु कस्मिंश्चित् सुरसुन्दरि ।
आगच्छन्तं ततो दृष्ट्वा राजानं रिपुमर्दनम् ॥
ततश्च स्वयमुत्थाय ददौ राजासनं तदा ॥
वन्दत्येवं ततो राज्ञी शिवेति च पुनः पुनः ।
उपविष्टा ततो राज्ञः समीपे वशवर्तिनी ॥
सच राजा तदा राज्ञया शिवेति समुदीरितम् ।

श्रुत्वेति शेषः ।

सस्मार प्राक्तनं कर्म अन्यजन्मनि यत् कृतम् ।
ब्रह्याजासौ तत स्मृत्वा ताम्बूलं करसंस्थितम् ॥

चकार मनसा राजा सङ्कल्पं शिवपूजने ।
ततः प्रपच्छ सा देवी किमिदं त्यागकारणम् ॥
यदि वक्ष्यसि मे नत्वं मरिष्यामि तवाग्रतः ।
सोऽपि राजा तदा देवीं मरणे कृत निश्चयाम् ॥
विज्ञाय कथयामास पूर्वजन्मनि चेष्टितम् ।
शृणुष्वावहिता भूत्वा वचनं सुरसुन्दरि ॥
श्रुत्वा त्वयेरितं वाक्यं शिवनामसमन्वितम् ।
स्मृतं मे सर्वचरितं पूर्वं जन्मनि यत् कृतम् ॥
श्रूयतामभिधास्यामि सावधाना भव प्रिये ।
अहमासं पुरा वैश्यः स्वधर्मनिरतः शुचिः ॥
कालेन गच्छता देवि पूर्वजन्मवशेन च ।
स्वकर्मनिरतस्यापि चौर्ये मतिरजायत ॥
निशानिष्क्रमणं कृत्वा चौर्यं कर्तुमहं गतः ।
तस्मिन् काले शुभे देवि माघमासोऽभवत्तदा ॥
चतुर्दशी तिथिश्चासीत् शिवरात्रिस्तु सा स्मृता ।
मम वै भ्रममाणस्य अर्धरात्रमभूत्तदा ॥
भ्रमता हि मया दृष्टः समवायो जनस्य वै ।
जागरं तु प्रकुर्वाणः शिवस्यायतने शुभे ॥
अन्तरन्तु समासाद्य उपविष्टस्ततः क्षणम् ।
कस्याश्चित् गृहमेधिन्याः कर्णसंस्थञ्च कुण्डलम् ॥
हृत्वा पलायमानस्तु दृष्टोनगरपालकैः ।
ततस्तैर्न्नर्हिताः सर्वे खड्गपाणिधनुर्धराः ॥

ततस्त्वेकेन क्रुद्धेन शिरश्छिन्नं महासिना ।
तद्भयाच्च मया तत्र मुखेक्षिप्तन्तु कुण्डलम् ।
ततश्च कर्मणा तेन रात्रौ जागरणेन च ।
चौर्येण च कृतेनापि राजाहं स बभूव ह ॥
ततश्च जातिस्मरणं जातं मम तिलोत्तमे ।
शिवयोगस्तु चाद्यैव माघमासस्तु शोभने ॥
चतुर्दशी तिथिश्चाद्य ताम्बूलं तन्मयोज्झितम् ।
एतत् श्रुत्वा च सा देवी साश्चर्यं परमं महत् ॥
उवाचैनं तदा राज्ञी विस्मयं परमं गता ।
यदि मे प्रत्ययं किञ्चत् उत्पादयसि भूमिप ॥
तदा जीवामि नृपते नान्यथेयं प्रतारणा ।
एतत् श्रुत्वा तदा राजा उवाच सुरसुन्दरि ॥
एतदेव शिरो मेऽत्र पश्येदं कूपसंस्थितम् ।
कालेन कूप पूर्णोऽयं लोष्टैश्च तृणसञ्चयैः ॥
उत्थाय च गतौ तत्र दम्पती विस्मयान्वितौ ।
खनयित्वा ततो देव्यै दर्शयामास तच्छिरः ॥
कुण्डलन्तु मुखे दृष्ट्वा विस्मयं परमं गतौ ।
ततस्तु दम्पती तत्र चक्रतुर्नियमं परम् ॥
उपवासस्य नियमं तथा जागरणस्य च ।

शिव उवाच ।

एवं हि माघमासे तु संप्राप्ते सुरसुन्दरि ॥
तद्व्रतं जागरं चैव कुर्यात्पूजनमेव च ॥

ततश्च भगवानीशः तुष्टो भवति तत् क्षणात् ।
कालेन गच्छता तौ तु पुत्रपौत्रसमन्वितौ ॥

सम्पूर्णेच तयोः काले मरणं समुपागतौ ।
जग्मतुः परमं लोकं शिवभक्ति समन्वितौ ॥

शिवरात्रिप्रभावेन दम्पती शिवसन्निधौ ।
शिवरात्रिमिमां देवि यः करोति नरो भुवि ॥

सर्वपापविनिर्मुक्तः शिवलोके महीयते ।
इत्येषा कथिता देवि शिवरात्रिस्तवाग्रतः ॥
सर्वपापहरा पुण्या सर्वतीर्थफलप्रदा ।

ऋषय ऊचुः ।

शिवरात्रिरिति ख्याता कस्मिन् काले तु सा भवेत् ।
किंफला किंविधाना सा वद नो विस्तरादिह ॥

सूत उवाच ।

माघस्य कृष्णपक्षीय तिथिश्चैव चतुर्दशी ।
तस्या रात्रिः समाख्याता शिवरात्रिरिति द्विजाः ॥

तस्यां सर्वेषु लिङ्गेषु सदा सङ्क्रमते हरः ।
विशेषादमरैः सर्वैः ख्याता सेयं कणेश्वरे ॥ [ऋषीश्वराः]

ऋषय ऊचुः ।

शिवरात्रिः कथं जाता केन वाऽपि विनिर्मिता ।
कस्माद्बहुफला सेति सर्वं वै विस्तरात् वद ॥

सूत उवाच ।

आनर्ताधिपतिः पूर्वमश्वसेन इति स्मृतः ।
आसीद्धर्मपरो नित्यं वेदवेदाङ्ग पारगः ॥

[1]भर्तृयज्ञः पुरा तेन इदं पृष्टः कुतूहलात् ।
कलिकालं समुद्वीक्ष्य वर्धमानं दिने दिने ॥

भर्तृसेन उवाच ।

कलिकाल कृते किञ्चिद्व्रतं मे वद सन्मुखे ।
साधूनां सङ्गजं पुण्यं सर्वपापप्रणाशनम् ॥
अत्यायुषः सदा मर्त्याः पूताः कृतयुगे पुरा ।
त्रेतायां द्वापरे चैव किन्तु प्राप्ते कलौ युगे ।
क्षीणायुषो जनास्सर्वे गतसत्वास्तदा हि ते
तस्मात् वर्षव्रतं त्यक्त्वा किञ्चिदेकाह्निकं वद ।
श्वः कार्यमद्यकुर्वीत पूर्वाह्णे चाऽऽपराह्णिकम् ॥
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ।
तस्य तद्वचनं श्रुत्वा भर्तृयज्ञः उदारधीः ॥
अब्रवीत् सुचिरं ध्यात्वा ज्ञात्वा दिव्येन चक्षुषा ।
अस्ति राजन् व्रतं पुण्यं शिवरात्रीति संज्ञितम् ॥
ऐकाह्णिकं महाराज सर्वपातक नाशनम् ।
तस्यां यद्दीयते दानं हुतं जप्तं तथैव च ॥
सर्वमक्षय्यतां याति रात्रिजागरणे कृते ।
अपुत्रो लभते पुत्रान् अधनो धनमाप्नुयात् ॥

---

1. भर्तृयज्ञीमानमहर्षिः—भर्तृसेनः

स्वल्पायुर्दीर्घमायुष्यं शत्रूणाञ्चैव संक्षयम् ।
यं यं काममभिध्याय व्रतमेतत् समाचरेत् ॥

तं तं समाप्नुयान्मर्त्यो निष्कामो मुक्तिमाप्नुयात् ।
तथा वर्षकृतात् पापात् मुच्यते नात्र संशयः ॥

श्रीभगवानुवाच ।

माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर ।
अहं यास्यामि भूमिष्ठो रात्रौ नैव दिवा कलौ ॥

लिङ्गेषु च समस्तेषु चलेषु स्थावरेषु च ।
प्रपूजयेत् सम्पदिच्छुः सर्वपापविशुद्धये ॥

तस्यां रात्रौ हि मे पूजां यः करिष्यति मानवः ।
मन्त्रैरेतैः सुरश्रेष्ठ विपाप्मा स भविष्यति ॥

ॐ सद्याय नमः । ॐ वामाय नमः । ॐ अघोराय नमः ।
ॐ तत्पुरुषाय नमः । ॐ ईशानाय नमः ।

पञ्चवक्त्राणि सम्पूज्य गन्धपुष्पानुलेपनैः ।
वस्त्रैः दीपेन नैवेद्यैः ततोऽर्घ्यञ्च प्रदापयेत् ॥

मन्त्रेणानेन मद्भक्तो मां ध्यात्वा मनसि स्थितम् ।
गौरीवल्लभ देवेश शर्वाद्य शशिशेखर ॥

वर्षपापविशुद्ध्यर्थमर्घ्यो मे प्रतिगृह्यताम् ।
ततः सम्पूजयेद्विप्रं भोजनाच्छादनादिभिः ॥

दत्त्वा प्रदक्षिणां तस्मै वित्तशाठ्यं विवर्जयेत् ।
ततो जागरणं कुर्यात् गीतवादित्रनिस्वनैः ॥

धर्माख्यानकथाभिश्च तथालास्यैश्च ताण्डवैः ।
एवं करिष्यते योऽत्र व्रतमेतत्सुरेश्वर ॥
सर्वपापविशुध्यर्थं प्रायश्चित्तं भविष्यति ।
तच्छ्रुत्वा त्रिदशाः सर्वे प्रणम्य शशिशेखरम् ॥
सम्प्रहृष्टा नृपश्रेष्ठ स्वानि स्थानानि भेजिरे ।
शिवरात्र्यास्तु माहात्म्यं यदुक्तं शूलपाणिना ।
ततः प्रभृति संजाता शिवरात्रिर्धरातले ॥
सर्वकामप्रदा पुण्या सर्वपातक नाशिनी ।
तत्र ते कीर्तयिष्यामि पुरा वृत्ता कथा वराम् ॥
यद्वृत्तं नैमिशारण्ये लुब्धकस्यात्र कस्यचित् ।
तत्रासील्लुब्धकः कश्चित् जातिमात्रो न कर्मतः ॥
व्यसनेनाभि भूतोऽयं परवित्तापहारकः ।
न कदाचित् व्रतं तेन दत्तं न जपः कृतः ॥
केवलन्तु हृतं वित्तं लोकानां छद्मसंश्रयात् ।
कस्यचित्त्वथ कालस्य शिवरात्रिः समागता ॥
माघमासे सिते पक्षे सर्वपातक नाशिनी ।
तत्रास्त्यायतनं पुण्यं देवदेवस्य शूलिनः ॥
ततो जागरणं रात्रौ प्रारब्धमभितो जनैः ।
नारीभिर्नरशार्दूल भूषिताभिः सुभूषणैः ॥
अथासौ चिन्तयामास चोरो वित्तेन जागरः ।
गच्छन्ती यदि काचित् स्त्री भूषणैः परिभूषिता ॥
निद्रितावा, हृतंचास्याः प्रवासादुपयाम्यहम् ।
ततो हत्वा समादाय भूषणानि व्रजाम्यहम् ॥

एवं विश्चित्य मनसा गतस्तस्य समीपतः ।
कर्णिकारं समारुह्य स्थितो गुप्तस्ततो हि सः ॥
वीक्षमाणो दिश. सर्वा नारी निष्क्रमणोद्भवाः ।
चौर्यकर्मप्रवृत्तस्य शीतार्तस्य विशेषतः ॥
स्वल्पाऽपि निद्रासंजाता न च नारीति निर्गता ।
तस्याऽधस्तात्ततोलिङ्गमवधूतं हरोद्भवम् ॥
एतस्मिन्नेव कालेतु प्रोद्गतस्तीक्ष्ण दीधितिः ।
असतां चैव चोराणां कामिनां विमुखावहः ॥
ततो नराश्च नार्यश्च जग्मुः स्वं स्वं निकेतनम् ।
उमया तं परं शान्तं प्रणिपत्य महेश्वरम् ॥
सोऽपि चौरो निराशश्च क्षुत्क्षामः शीतविह्वलः ।
अवतीर्य द्रुमात्तस्मात् धर्माग्निः क्वचिदासते ॥
ततः कालेन महता पञ्चत्वं समपद्यत ।
जातो जातिस्मरो भूत्वा[1]दर्पणाधिपतेर्गृहे ॥
उपवास प्रभावेन तस्या रात्रौ प्रजागरात् ।
शिवरात्रौ तथा तस्य लिङ्गस्यापि प्रपूजनात् ॥
ततो राज्यं समासाद्य पितृपैतामहं महत् ।
कारयामास लिङ्गस्य प्रासादं तस्य शोभनम् ॥
वर्षे वर्षे समागत्य शिवरात्र्यां प्रजागरात् ।
उपवास परोभूत्वा गीतवादित्र निस्वनैः ॥
धर्माख्यान कथाभिश्च सामध्वनिभिरेव च ।

---

1. वेश्मः ।

भर्तृयज्ञ उवाच ।

नास्ति गङ्गासमं तोयं नास्ति देवो हरोपमः ।
शिवरात्रि समं नास्ति व्रतं सत्यं मयोदितम् ॥
सर्वरत्नमयो मेरुः सर्वाश्चर्यसमं नभः ।
सर्वधर्ममयी राजन् शिवरात्रिः प्रकीर्तिता ॥
गरुडः पक्षिणां यद्वत् नदीनां सागरो यथा ।
प्रधाना सर्वधर्माणां शिवरात्रिस्तथोत्तमा ॥

यमव्रतम् । मार्कण्डेय उवाच ।

यत्र क्वचन नद्यां च यत्र कृष्णा चतुर्दशी ।
अवर्काभ्युदिते काले देवं सम्पूजयेद्यमम् ॥
धूम्रवर्णं चित्रगुप्तं कालपाशं च यादव ।
मृत्युं स्वर्गश्च धर्मज्ञं गन्धमाल्यान्नसम्पदा ॥
'यमोदाधर' इत्युक्त्वा तिलांश्च जुहुयात् ततः ।
नमो यमायेति तथा स्त्रीशूद्रस्य विधीयते ॥
कृसरम्भोजयेद्विप्रान् यथाशक्ति नरोत्तमम् ।
दद्यात् व्रतान्ते विप्राय तथैव च पयस्विनीम् ॥

कृत्वा व्रतं वत्सरमेतदिष्टं
न याति राजन् नरकं मनुष्यः ।
पापक्षयं प्राप्य स याति नाकं
मानुष्यमासाद्य स धर्मवान् स्यात् ॥

इति यमव्रतम् ।

एकोनविंशोऽध्यायः—अथ पूर्णिमा व्रतानि।

विविधविबुधबृन्दानन्दसन्दोहकन्दो
यदि गुणितगुणौघः सोऽद्य हेमाद्रि सूरिः।
अभिमतफलसम्पत् सिद्धये बुद्धिभाजां
व्रतनिवहमिदानीं पौर्णमासीं ब्रवीमि॥

कृष्ण उवाच।

पौर्णमासी महाराज सोमस्य दयिता तिथिः।
पूर्णोमासो भवेद्यस्यां पौर्णमासी ततः स्मृता॥

तस्यां तु स्रोतसि स्नात्वा सन्तर्प्य पितृदेवतान्।
आलिख्य मण्डले सोमं नक्षत्रैः सहितं विभुम्॥

पूजयेत् कुसुमैः हृद्यैः नैवेद्यैः घृतपाचितैः।
शुक्लवस्त्रैः दक्षिणाभिः पूजयित्वा क्षमापयेत्॥

शाकाहारेण मुन्यन्नैः नक्तं भुञ्जीतवाग्यतः।
(मुनीनामन्नं मुन्यन्नम् नीवारादि।)
गगनार्णवमाणिक्य चन्द्र दाक्षायणीपते।
वसन्तबान्धव विधो शीतांशो स्वस्तिनः कुरु॥

पक्षे पक्षे पञ्चदश्यां विधिरेष प्रकीर्तितः।
शुक्लपक्षेऽपि यः कश्चित् श्रद्धावान्वै व्रती भवेत्॥

तत्राप्येष विधिः प्रोक्तः सर्वकामफलप्रदः।
अमावस्या तिथिरियं पितृणामक्षया भवेत्॥
(अमावास्येयं पौर्णमासी, तद्व्रतम्॥)

अमावास्या महाराज गयेन समुपोषिता ।
तेनाक्षयवटेदत्तं पितृभ्यस्तीर्थमुत्तमम् ॥
यः कश्चित् कुरुते तस्मिन् पितृपिण्डोदकक्रियाम् ।
तस्मिन्—अक्षयवटे ।
स तारयति राजेन्द्र पुरुषानेकविंशतिम् ॥
भवेयुः अक्षयास्तस्य लोकाः पितृनिषेविताः ।
यदा तु इह लोकान्ते तस्य चागमनं भवेत् ॥
ब्राह्मणः पितृभक्तश्च सर्वविद्याविशारदः ।
पञ्चजन्मनि राजेन्द्र भवेत् लक्ष्म्या समन्वितः ।
एवं संवत्सरस्यान्ते हैमं कृत्वा सुशोभनम् ।
सोमं नक्षत्रसहितं सर्वावयव संयुतम् ॥
सप्तधान्यसमायुक्तं रौप्यपात्रोपरि न्यसेत् ।
सर्वाभरणसंयुक्तां गां च दद्यात् पयस्विनीम् ॥
सम्पूज्य वस्त्राभरणैर्मन्त्रेणार्घ्यं निवेदयेत् ।
नवो नवोऽसि मासान्ते जायमानः पुनः पुनः ॥
चन्द्रसान्द्रसुधासौध गृहाणार्घ्यं नमोऽस्तु ते ॥
दद्याद्द्विजेन्द्रमुख्याय भक्त्या परमया युतः ॥
मासे मासे विधिरयं व्रतस्यास्य नराधिप ॥
येन शक्नोति वा कर्तुं वर्षमेकं निरन्तरम् ।
एकापि समुपोष्यैव दद्यादुद्यापनं सुधीः ॥
अभ्यर्चयन्ति सितपञ्चदशीषु सोमं
कृष्णासु ये पितृगणाञ्जलपिण्डदानैः ।

तेषां गृहाणि धनधान्य सुतादिसम्पत्
पूर्णानि पार्थिव भवन्ति विधौ विधानात् ॥

विंशोऽध्यायः—अमावास्या व्रतानि । अगस्त्य उवाच ।

भगवन् त्वत्प्रसादेन श्रुतोऽयं व्रतविस्तरः ।
अर्धोदयन्तु मे ब्रूहि दुर्लभं स चराचरे ॥

जीवितं प्राणिनां पुण्यं यदिचेत् वदसि प्रभो ।
कथं कार्यं कृते किं स्यात् फलं कथय षण्मुख ॥

श्रूयतां पुण्ययोगोऽयं दुर्लभोऽर्धोदयाह्वयः ।
तिर्यङ्मनुष्यदेवानां दुष्प्राप्यं सर्वकामदम् ॥

माघामायां व्यतीपात आदित्ये विष्णुदैवते ।
अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समम् ॥

पुरा कृतं वसिष्ठेन जामदग्न्येन सुव्रत ।
सनकाद्यैर्मनुष्यैश्च बहुभिर्बहुभिः श्रुतः ॥

अन्यैः शतसहस्रैश्च दृष्टं भवति कुम्भज ।
दानानां यज्ञतीर्थानां फलं येन कृतं भवेत् ॥

ससागरा धरा तेन सप्तद्वीपसमन्विता ।
दत्तास्यात् सर्वभावेन येन ह्यर्धोदयं कृतम् ॥

मानसादिषु तीर्थेषु यत् पुण्यं स्नानदानतः ।
गङ्गागया-प्रयागे च पुष्कराणां त्रये तथा ॥

तत्सर्वं मानवा, विप्र व्रतेनानेन कुम्भज ।
अश्वमेधायुतं श्रेष्ठमिष्टापूर्तञ्च यत् भवेत् ॥

अर्घोदयं कृतं यैस्तु विधिदृष्टेन कर्मणा ।
वाजि सर्वं गृहे लक्ष्मीः सन्ततिश्चानपायिनी ॥
आयुर्यशो हि विपुलं व्रतकर्ताफलं लभेत् ।

एकविंशोऽध्यायः— अथ नानातिथिव्रतानि । युधिष्ठिर उवाच ।

स्मारयामि हृषीकेश यन्नोक्तं भवता मम ।
तत्सावित्रीव्रतं ब्रूहि प्रसादसुमुखो भव ॥

श्रीकृष्णः ।

कथयामि कुलस्त्रीणां महिम्नो वर्धनं परम् ।
यथा चीर्णं व्रतं पूर्वं सावित्र्या राजकन्यया ॥

आसीन्महीन्द्रो धर्मात्मा सर्वभूतहितेरतः ।
पार्थिवोऽश्वपतिर्नाम्ना पौरजानपदप्रियः ॥

सर्वेश्वरोऽनपत्यश्च सत्यवाक् संयतेन्द्रियः ।
स सभार्यो व्रतमिदं चकारापत्यकाम्यया ॥

सावित्रीति प्रसिद्धं यत् सर्वकामप्रदायकम् ।
तस्य तुष्टा तु सा देवी सावित्री ब्रह्मणः प्रिया ॥

भूर्भुवः स्वरितीत्यस्याः साक्षान्मूर्तिरिहस्थिता ।
कमण्डलुकरा देवी वरदा स्मितभाषिणी ॥

उवाच दुहिता ह्येका तव राजन् भविष्यति ।
तस्याः प्रसादादप्येतत् सर्वं तव समागतम् ॥

मन्नाम्ना सा च वक्तव्या महाकीर्तिमती तु सा ।
भविष्यति महाराज माशोकं कर्तुमर्हसि ॥

एवमुक्त्वा तु सा देवी जगामादर्शनं तदा ।
कालेन बहुना जाता दुहिता देवरूपिणी ॥
सावित्री प्रोक्तया वृत्या सावित्र्याः पूजया तथा ।
आदिष्टा चैव सावित्र्या सावित्रीसदृशी यतः ॥
सावित्रीत्येव नामास्याः चक्रुः विप्रास्तथैव सा ।
सावित्रीविग्रहवती व्यवर्धत पितुर्गृहे ॥

अनन्तरं सत्यवन्तं पतिं लब्ध्वा संवत्सरं यावत्, भर्त्रासह उवास अनन्तरं गतायुषं पतिं यमवशंगतं अनुगच्छन्ती साश्चर्येण यमेन पृष्टा वरंवव्रे, तदनुरोधेन निजं पतिं राज्यं च प्राप्य पुत्रपौत्र-संपत्या मुमोद बहून् वर्षान् । एवं भाद्रपदपूर्णिमायां सनियमं सरस्वत्यासहितं ब्रह्माणं संपूज्य गोहिरण्यादि दत्वा विप्रान् संभोज्य, तुष्टैस्तैः आशिषो लब्ध्वा स्वयं अश्नीयात् । एवं याकरोति सा—

"एवं करोति या नारी व्रतमेतदनुत्तमम् । भ्रातरः पितरः पुत्राः श्वशुरः स्वजनास्तथा ॥ चिरायुषस्तथाऽरोगाः स्वंच जन्मशतत्रयम् । भर्त्रा च सहिता साध्वी ब्रह्म लोके महीयते" ॥

इति बहुविस्तृतं वर्णितं, तस्य सारांशो गृहीतः ॥

इति द्वाविंशोऽध्यायः (वारव्रतखण्डः)

## अथ त्रयोविंशोऽध्यायः

ब्रह्मोवाच—

इत्येते कथिताः कृष्ण तिथियोगा मया तव ।
नक्षत्रदेवताः सर्वाः नक्षत्रेषु व्यवस्थिताः ॥

इष्टान् कामान् प्रयच्छन्ति यथाख्यानं सुरेश्वर ।
चन्द्रमा यत्र नक्षत्रे यदा समधितिष्ठति ॥
उक्तस्तु देवयज्ञस्तु तदा स सफलो भवेत् ॥
देवताश्च प्रवक्ष्यामि नक्षत्राणां यथा तथम् ।
नक्षत्राणि च सर्वाणि यज्ञञ्चैव पृथक् पृथक् ॥
अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः ।
व्याधिभिर्मुच्यतेक्षिप्रं योऽत्यर्थं व्याधिपीडितः ॥
भरण्यां यमराडिष्टः कुसुमैरसितैः शुभैः ।
तथा गन्धादिभिः शुभ्रैः अपमृत्युं विमोचयेत् ॥
अनलःकृत्तिकायान्तु ऋद्धिं सम्पूजितः पराम् ।
रक्तमाल्यादिभिर्दद्यात् घृतहोमेन च ध्रुवम् ॥
प्रजाः प्रजापतिः प्रीत इष्टो दद्यात् पशूंस्तथा ।
रोहिण्यां देवशार्दूल गोजन्मेह जगत्पते ॥
मृगशीर्षे तथा सोमं जातिमारोग्यमेव च ।
आर्द्रायान्तु शिवं पूज्य पशून् विजयमेव च ॥
सितैः पद्मादिभिः दिव्यैः देवत्वं पयसा च वै ।
पुत्रान् पुनर्वसो दद्यात् चरुणा तर्पिताऽदितिः ॥
तिष्ये बृहस्पतिः बुद्धिं विपुलं सुखमेव तु ।
भोगान् गन्धादिभिर्नागा आश्लेषायां प्रपूजिताः ॥
तर्पिताश्च प्रयच्छन्ति भक्षाद्यैः मधुरैः शुभैः ।
मघासु पितरः पुष्टिं घृतपायस तर्पिताः ।
पूर्वायां विजयं दद्यात् भगो देवः सुतर्पितः ।
भक्त्या प्रपूजितो दद्यात् उत्तरायां तथाऽर्यमा ॥

भर्तारमीप्सितं नार्यः पुंसश्च वरयोषितम् ।
नीरोगत्वं तथाऽऽयुष्यं सम्पदं चारुरूपताम् ॥
पुष्पवस्त्रार्चितो हस्ते दद्यात्तेजोनिधिस्तथा ।
चित्रासु पूजितस्त्वष्टा दद्यादारोग्यमेव च ।
स्वात्यां सम्पूजितो वायुः पुत्रानिष्टान् प्रयच्छति ॥
इन्द्राग्नी तु विशाखायां पीतरक्तैः प्रपूज्य च ।
धनं राज्यं च लब्ध्वेह तेजस्वी निवसेत् तदा ॥
रत्नैः मित्रमनूराधास्वेवं सम्पूज्य भक्तितः ।
प्रियो जनानां सर्वेषां चिरञ्जीवति सर्वदा ॥
ज्येष्ठायां पूर्ववत्विन्द्रमिष्ट्वा पुष्टिमवाप्नुयात् ।
गुणैः सर्वैस्तु सम्पूर्णः कर्मणा वचनेन च ॥
मूले निर्ऋतिमिष्ट्वा च भक्षैस्तु पललादिभिः ।
पूर्ववत् फलमाप्नोति स्वस्थाने च ध्रुवो भवेत् ॥
अपइष्ट्वा जलैरेतैः हुत्वा तत्रैव पूर्ववत् ।
सन्तापात् मुच्यते क्षिप्रं शरीरान्मानसात्तथा ॥
अषाढासु तथा विश्वविरिञ्चिऋतु योगतः ।
सम्पूज्यश्रियमाप्नोति परं विजयमेव च ॥
श्रवणे पूजितो विष्णुः सर्वान् कामान् प्रयच्छति ।
धनिष्ठासु वसूनिष्ट्वा न भयं प्राप्नुयात् क्वचित् ॥
महतोऽपि भयात्तीर्णो गन्धपुष्पादिभिः शुभैः ।
वरुणं शतभिषज्यर्च्य व्याधिभिर्मुच्यते नरः ॥
अजं भाद्रपदायान्तु शुद्धस्फटिकसन्निभम् ।
सम्पूज्य मुक्तिमाप्नोति नात्र कार्या विचारणा ॥

उत्तरायामहिर्बुध्न्यं परां शान्तिमवाप्नुयात् ।
रेवत्यां पूजितः पूषा ददाति विविधान् पशून् ॥

सितैः पुष्पैः तथा दीपैः धूपैः विजयवर्धनैः ।
य एते वै समाख्याता यज्ञाः संक्षेपतोमया ॥

नक्षत्रदेवतानां हि साधकानां हिताय वै ।
तस्माद्वित्तानुसारेण भवन्ति फलदायकाः ॥

गन्तुमिच्छेत् यदाऽन्यत्र क्रियाप्रारम्भ एव च ।
नक्षत्रदेवतायज्ञं कृत्वा तं सर्वमाचरेत् ॥

एवं कृते हि तत्सर्वं यात्राफलमवाप्नुयात् ।
क्रियाफलन्तु सम्पूर्णमित्युक्तं भानुना स्वयम् ॥

इति भविष्यत्पुराणोक्तनक्षत्रपूजाविधिः ॥

अथ चतुर्विंशोऽध्यायः ॥ योगव्रतानि—कृष्ण उवाच ।

विष्कम्भादिषु योगेषु भवेदेकाशनो नरः ।
यो ददाति क्रमात् पार्थ घृततैल फलेक्षवम् ॥

यवगोधूमवरणं निष्पावान् शालितण्डुलान् ।
लवणं दधि दुग्धञ्च वस्त्रं कनकमेव च ॥

कम्बलं गोवृषं छत्रमुपानद्युगलं तथा ।
कर्पूरं कुङ्कुमं चैव चन्दनं कुसुमानि च ॥

लोहं ताम्रञ्च कांस्यञ्च रौप्यञ्चेति युधिष्ठिर ।
स्नातः स्वशक्त्या विधिवत् सर्वपापैः प्रमुच्यते ॥
न वियोगमवाप्नोति योगव्रतमिदं स्मृतम् ॥

वराहउवाच ।

उभयोः दृष्टिसम्पाते क्रुद्धयोः सोमसूर्ययोः ।
उद्यतास्यो भवेद्वीरः पुरुषः पिङ्गलेक्षणः ।।
दष्टौष्ठदीर्घदशनो भ्रुकुटीकुटिलाननः ।
कपिलश्मश्रुकेशान्तो लम्बभ्रूः सुकृशोदरः ।।
करालो दीर्घजिह्वश्च सूर्याग्नियमसन्निभः ।
सम्भोक्तुकामः त्रैलोक्यं रवीन्दुभ्यां निवारितः ॥
क्रोधक्षुधौ यौ बाधेते पात्ये वै कुत्र ते मया ।

सूर्यसोमावूचतुः—

कोपदृष्टाग्नो विविधादतिपातात् भवानभूत् ।
व्यतीपातस्ततो नाम भवान् भुवि भविष्यति ।।
यस्मिन् काले त्वदुत्पत्तिः तदा कल्याणकारिणः ।
व्यतीपाताय भद्रं ते त्वयि यः पापकारकः ॥
तदन्नं क्षुधितो भुङ्क्ष्व तत्र कोपो निपात्यताम् ।

व्यतीपात उवाच—

नमो वां पितरौ मे स्वः कोपपातः सभोजनः ।
दत्तो भवद्भ्यामधुना प्रसादः क्रियते क्षमा ।।

रवीन्दू ऊचतुः—

स्नानदानजपहोम पूर्वकं
यस्त्वदीय समये समाचरेत् ।
तस्य पुण्यमिह ते प्रसादतोऽ-
नन्तमस्तु सुतनोरनुग्रहात् ॥

तत्काले तव विदधाति पूजनं यः
तस्येष्टं भवतु भवेत्सभद्रभूयः ।
पुत्रायुर्धनसुखकीर्तिपुष्टिरूपा-
रोग्यादीन्यभिजनवल्लभत्वपूर्वम् ॥

अथ पञ्चविंशोऽध्यायः ॥ करणव्रतानि ।

सनत्कुमार उवाच ।

शृणु राजन् प्रवक्ष्यामि करणव्रतमुत्तमम् ।
ववाख्यं बालवञ्चैव कौलवन्तैतिलङ्गरम् ॥
वाणिजं विष्टिरित्याहु करणानि पुराविदः ।
माघमासे तु सम्प्राप्ते शुक्लपक्षे यदा भवेत् ॥
ववाभिधानकरण-मुपवासस्तदा भवेत् ॥
पूजयेत् चाच्युतं देवं गन्धमाल्यविलेपनैः ।
सौवर्णी प्रतिमाकार्या विष्णोः कर्षमिता शुभा ॥
जपेदहर्निशं तत्र मन्त्रमष्टाक्षरं बुधः ।
कलशञ्च समानीय ताम्रपात्रं तथोपरि ॥
विन्यस्य पूजयेत् देवं सुवर्णकमलेन च ।
वितानं चामरं घण्टां देवाय प्रतिपादयेत् ॥
एवं सप्त विधेयानि ववाख्यान्यथ सप्तमे ।
ववे तु करणे प्राप्ते पूर्वं पूर्वं समाचरेत् ॥
ब्राह्मणान् भोजयेत् चात्र सप्तसंख्यान् सदक्षिणम् ।
अथैवं बालवादीनि विष्टयन्तानि यथाक्रमम् ॥
उषित्वा सप्त सप्तैव पूर्वोक्तविधिना नृप ।
समापयेत् व्रतं भूरि गो-भूहेमवितानतः ॥

एवं कृतेव्रते राजन् राजसूयाश्वमेधयोः ।
समस्तं फलमाप्नोति सुखं कीर्ति महच्छ्रियम् ॥

अथ षट्विंशोऽध्यायः ॥ सङ्क्रान्ति व्रतानि—वज्र उवाच ।

भगवन् कर्मणा केन तिर्यग्योनौ न जायते ।
म्लेच्छदेशे च पुरुषः तन्ममाचक्ष्व पृच्छतः ॥

मार्कण्डेय उवाच—

मेषसङ्क्रमणे भानोः सोपवासो नरोत्तम ।
पूजयेत् भार्गवं देवं रामं शक्त्या यथाविधि ॥
वृषसङ्क्रमणे प्राप्ते तथा कृष्णञ्च पूजयेत् ।
तथा मिथुनसङ्क्रान्तौ पूजयेत् भोगशायिनम् ॥
तथा कुलीरसङ्क्रान्तौ वराहमपराजितम् ।
नरसिंहं तथा देवं सिंहसङ्क्रमणे विभुम् ॥
[1]कन्यासङ्क्रमणे देवं तथाऽश्वशिरसं यजेत् ।
तथा मकरसङ्क्रान्तौ रामं दशरथात्मजम् ॥
कुम्भसङ्क्रमणे राजन् रामं यादव नन्दनम् ।
मीनसङ्क्रमणे मत्स्यं वासुदेवं तु पुजयेत् ॥
पटे वा यदिवाऽर्चायां गन्धमाल्यान्नसम्पदा ।
प्रादुर्भावस्य नाम्ना च होमं कुर्वीत पार्थिव ॥
व्रतान्ते [2]जलधेनुन्तु छत्रोपानत्समन्विताम् ।
वस्त्रयुग्मयुतां दद्यात् प्रतिमासं सकाञ्चनाम् ।
रात्रौ तु दीपमालाभिः देवदेवं प्रपूजयेत् ॥

---

1. तुलादि मासत्रयपूजा लुप्तिता । 2. जलधेनुलक्षणं दानप्रकरणे वक्ष्यते ।

कृत्वा व्रतं वत्सरमेतदिष्टं
म्लेच्छेषु तिर्यक्षु न चापि जन्म ।
प्राप्नोत्यवाप्नोति चिरञ्च नाकं
कामन्तथाऽऽप्नोति मनोऽभिरामम् ॥

अथ सप्तविंशोऽध्यायः ॥ मासव्रतानि । वज्र उवाच ।

भगवन् कर्मणा केन रूपवान् जायते नरः ।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यते ॥

मार्कण्डेय उवाच—

फाल्गुन्यां समतीतायां प्रतिपत् प्रभृति क्रमात् ।
यावच्चैत्री महाराज तावत् स्नातो दिने दिने ॥
बहिः संपूजयेत् देवं केशवं भोगशायिनम् ।
एक भक्ताशनो नित्यं अधश्शायी तथा भवेत् ॥
त्रिरात्रोपोषितः पूजां चैत्र्यां कुर्यात्तथैव च ।
स्वशक्त्या रजतं दद्यात् वस्त्रयुग्मं तथैव च ॥

रूपार्थिनो मासमिदं मयोक्तं
व्रतोत्तमं नित्यमदीनसत्त्वम् ।
कृत्वा तु नाकं मनुजस्त्ववाप
मानुष्यमासाद्य च रूपवान् स्यात् ॥

अष्टाविंशोऽध्यायः ॥ अथ नानामासव्रतानि । तत्र चातुर्मासी व्रतानि ।
विष्णुधर्मोत्तरे मार्कण्डेय उवाच—

अथ स्वपिति धर्मास्मिन् देवदेवो जनार्दनः ।
लक्ष्मीसहायः सततं शेषपर्यङ्कमास्थितः ॥

एकादश्यामषाढस्य शुक्लपक्षे जनार्दनम् ।
देवाश्च ऋषयश्चैव स्तुवन्ति दिनपञ्चकम् ॥

ततश्च चतुरो मासान् योगनिद्रामुपस्थितम् ।
सप्त च तमुपासते ऋषयो ब्रह्मसम्मिताः ॥

कार्तिकस्य सिते पक्षे तदेव दिनपञ्चकम् ।
विबोधयन्ति देवेशं गत्वा सेन्द्रा दिवौकसः ॥
तस्मादेताः चतुर्मासीः नरः कुर्यात् महोत्सवम् ॥

भविष्यत्पुराणे ।

कार्तिके शुक्लपक्षस्य एकादश्यां समाहितः ।
मन्त्रेण चैव राजेन्द्र देवमुत्थापयेत् द्विजः ॥

मन्त्रास्तु वराहपुराणोक्ताः ।

ॐ ब्रह्मेन्द्ररुद्राग्नि कुबेरसूर्य-
सोमादिभिर्वन्दितवन्दनीय ।
बुध्यस्वदेवेश जगन्निवास
मन्त्रप्रभावेण सुखेन देव ॥

इयं तु द्वादशी देव प्रबोधार्थन्तु निर्मिता ।
त्वयैव सर्वलोकानां हितार्थं शेषशायिना ॥

त्वयिसुप्ते जगन्नाथ जगत् सुप्तं भवेदिदम् ।
उत्थिते चेष्टितं सर्वं मुत्तिष्ठोत्तिष्ठ माधव ॥

गतामेघा वियच्चैव निर्मलं निर्मलादिशः ।
शारदानि च पुष्पाणि गृहाण मम केशव ॥

इदं विष्णुरितिप्रोक्तं मन्त्रमुत्थापने हरेः ।
समुत्थिते ततो विष्णौ प्रवर्तन्ते शुभाः क्रियाः ॥

अथ पद्मपुराणोक्तं स्नेहव्रतम् ।

आषाढादि चतुर्मासान् अभ्यङ्गं वर्जयेन्नरः ।
चरितेच पुनर्दद्यात् तिलतैलयुतं घटम् ॥

भोजनं पायसाज्यञ्च स याति भवनं विभोः ।
लोकप्रीतिकरं ह्येतत् स्नेहव्रतमिहोच्यते ॥

अथ वेदव्रतम् । मार्कण्डेय उवाच ।

इदमन्यत्प्रवक्ष्यामि चतुर्मूर्तिव्रतं तव ।
विद्याकामेन यत्कार्यं नरेण सुविपश्चिता ॥

बहिः स्नानं वरः कृत्वा कृतऋग्वेद पूजवः ।
ऋग्वेदं श्रृणुयान्नित्यं मासद्वयमतन्द्रितः ॥

चैत्रादारभ्य धर्मज्ञो नित्यं नक्ताशनी भवेत् ।
ततो नृपवर प्राप्ते ज्येष्ठस्य चरमेऽहनि ॥

वासोयुगं हिरण्यञ्च तथा धेनुं पयस्विनीम् ।
घृतपूर्णं कांस्यपात्रं सहिरण्यन्तु दक्षिणाम् ॥ दद्यात् ।

आषाढादिषु मासेषु यजुर्वेदव्रतं चरेत् ।
आश्विनादिषु मासेषु सामवेदव्रतं चरेत् ॥

तथाऽथर्वव्रतं नाम पौषादिषु विधीयते ।
सर्वेषु सर्वं कर्तव्यं ऋग्वेदव्रतकीर्तितम् ॥

वेदात्मनो वासुदेवस्य पूजां
कृत्वा नरो द्वादशवत्सराणि ।
विष्णोर्लोकं याति लोकं विशिष्टं
यस्मिन् प्राप्ते सर्वदुःखं जहाति ॥

पौर्णमास्यां तथाऽऽषाढ्यां शिवं सम्पूज्य यत्नतः
उपवीतं शिवे दद्यात् शिवभक्तांश्च भोजयेत् ॥

पुनरेव च कार्तिक्यां पूज्य शम्भुं क्षमापयेत् ।
यतीनां दक्षिणां दत्वा सूत्रवस्त्रादि पूर्विकाम् ॥

यः कुर्यात्सकृदप्येवं चातुर्मास्यां पवित्रकम् ।
कल्पकोटिसहस्राणि रुद्रलोके महीयते ॥

पुण्यक्षयात् परिभ्रष्टः चतुर्वेदः प्रजायते ।
इच्छया तु भवेद्राजा गुरुरूपसमन्वितः ॥

अथ एकोनविंशोऽध्यायः । ऋतुव्रतानि ।

उपक्रियायै सुहृदामिदानीं
हेमाद्रिसूरिः प्रकटीकरोति ।
ऋतुव्रतश्रेणिमकम्पसम्पत्-
सम्पादयित्रीं दुरितापहन्त्रीम् ॥

मार्कण्डेय उवाच ।

अथातः सम्प्रवक्ष्यामि षण्मूर्तेरर्चनं परम् ।
वसन्तं पूजयेन्नित्यं द्वौ मासौ मुनि पुङ्गव ॥

फलैः पुष्पैः कषायैश्च ग्रीष्मे ग्रीष्मञ्च पूजयेत् ।
मधुरेण महाराज प्रावृट्काले ऋतुश्चरेत् ॥

अनेन पूजयेन्नित्यं शरदं लवणेन च ।
कट्वम्लेन च हेमन्तं तिक्तेन शिशिरं तथा ॥

नक्ताशनस्तथा तिष्ठेत्पञ्चकं वर्जयेद्रसम् ।
ब्राह्मणान् भोजयेच्चापि प्रभूतवसनादिभिः ॥

संवत्सरमिदं कृत्वा व्रतं परमपावनम् ।
अश्वमेधमवाप्नोति राजसूयञ्च विन्दति ॥

सर्वान् कामानवाप्नोति नात्र कार्या विचारणा ।
फलमक्षयमाप्नोति व्रतस्यास्य कृदुत्तमम् ॥

चैत्रे समारभ्य सिते तु षष्ठीं
सम्पूजयेद्यस्त्वृतु-षट्कमेकम् ।
कृतोपवासः स नरो यथोक्तं
लभेत् फलं शाश्वतमेव शीघ्रम् ॥

अथ त्रिंशोऽध्यायः । संवत्सरव्रतानि । पुलस्त्य उवाच ।

नक्तमिष्टं चरित्वा तु गवा सार्द्धं कुटुम्बिने ।
हैमञ्चक्रं त्रिशूलं च दद्यात् विप्राय वाससी ॥

प्रणम्य भक्त्या भक्तं च प्रीयेतां शिवकेशवौ ।
एतदेव व्रतं नाम महापातक नाशनम् ॥

अथ एकत्रिंशोऽध्यायः । प्रकीर्णव्रतानि ।

श्वेतद्वीपे सुखासीनं देवदेवं जगद्गुरुम् ।
वासुदेवं जगन्नाथं स्थितिसंहारकारकम् ॥

प्रणिपत्य महादेवं चराचरगुरुं हरिम् ।
लक्ष्मीः प्रोवाच शनकैर्भर्तारमसितेक्षणा ।
भगवन् देवदेवेश लोकानामनुकम्पया ॥

प्रष्टुं त्वां किञ्चिदिच्छामि दयां कुरु ममोपरि ।
व्रतं कथय मे किञ्चित् रूपसौभाग्यदायकम् ॥
कृतेन येन देवेश सर्वतीर्थं फलं लभेत् ॥

येन पुत्राश्च पौत्राश्च गृहं सर्वसमृद्धिमत् ।
शरीरारोग्य मैश्वर्यं कामदेव समः पतिः ॥

सुखावलोकनोनित्यमवियोगश्च तेन वै ।
तद्दानं वा व्रतं वापि तीर्थमाहात्म्यमेव च ॥

येनानुष्ठितमात्रेण सर्वसिद्धिर्भवेत् ध्रुवम् ।
कथयस्व सुरश्रेष्ठ गुह्याद्गुह्यतरं मम ॥

विष्णुः ।

कथयामि न सन्देहो व्रतानामुत्तमं व्रतम् ।
प्रद्युम्नायाति नाख्यातं पुत्रप्रीत्या व्रतं त्विदम् ॥

तेजस्विनां यथाऽऽदित्यः पक्षिणां गरुडो यथा ।
यथा नदीनां गङ्गाच वर्णानां ब्राह्मणो यथा ॥
तथा व्रतमिदं श्रेष्ठं कथ्यते तव भामिनि ।

न गङ्गा न कुरुक्षेत्रं न काशी न च पुष्करम् ।
पावनानि महाभागे यथेष्टं व्रतमुत्तमम् ॥

गौर्यादेव्या कृतं पूर्वं शङ्करेण महात्मना ।
रामेण सीतया सार्धं दमयन्त्या नलेन च ॥

कृष्णेन पाण्डवैः सर्वैः कृतं व्रतमनुत्तमम् ।
अगम्यागमनोयस्तु मांसाशीवृषलीपतिः ॥
भूमिहर्ता कूटसाक्षी कन्यादूषयिता च यः ।
एभिः सर्वैः महापापैः मुच्यते नात्र संशयः ॥

तस्मात्सर्वप्रयत्नेन कर्तव्यं व्रतमुत्तमम् ।
काञ्चनाख्या पुरी नाम व्रतं त्रैलोक्य पावनम् ॥

शुक्लतृतीया कृष्णा च एकादश्यथ पूर्णिमा ।
सङ्क्रान्तिर्वा महाभागे कुहूर्वाचाष्टमीतिथिः ।
पर्वस्वेतेषु दातव्या काञ्चनाख्या पुरी शुभा ॥

मण्डलस्य तु मध्ये तु भद्रपीठं सुशोभनम् ।
आसनं तत्र विन्यस्य कमलं तत्र विन्यसेत् ॥

तस्योपरिन्यसेद्देवं लक्ष्म्या युक्तं जनार्दनम् ।
अग्रेतु स्थापयेत् कुम्भं जलपूर्णं सुशोभनम् ॥

क्षीरसागरनामास्य कल्पितव्यं प्रयत्नतः ।
सामान्यैकपला कार्या आत्मवित्तानुसारतः ॥

रौप्याह्वस्या अधोभूमिः शिखरं काञ्चनं तथा ।
मोदकान् स्थापयेत् विद्वान् प्रासादशिखरेषु च ॥

समन्तात् वेष्टयेत् तां तु पुरीं वस्त्रैः सुशोभनैः ।
तदग्रे कदलीस्तम्भैः तोरणं परिकल्पयेत् ।
पुष्पशोभानुकर्तव्या विभवात् विस्तरेण च ॥

चतुश्चरणिकैः विप्रैः प्रतिष्ठाप्या पुरी शुभा ।
तस्या मध्ये न्यसेत् विष्णुं हेमलक्ष्म्या समन्वितम् ॥

ब्राह्मणो वैदिकैः मन्त्रैः पुराणोक्तैः तथोत्तरैः ।
वासुदेवाय पादौ तु गुल्फौ सङ्कर्षणाय च ।।
त्रैलोक्यजननायेति जानुनी पूजयेत् हरेः ।
जानुं त्रैलोक्यनाथाय गुह्यं ज्ञानमयाय च ।।
कटिं दामोदरायेति उदरं विष्णुरूपिणे ।
पद्मनाभाय नाभिन्तु उरः श्रीवत्सधारिणे ।।
कण्ठं कौस्तुभनाभाय आस्यं यज्ञमुखाय च ।
दैत्यान्तकारिणे बाहू स्वनाम्ने चायुधानि च ।
शिखाञ्चैशान मन्त्रेण देवदेवस्य पूजयेत् ।।
श्रियं स्वमन्त्रैः सम्पूज्य लोकपालान् ततोऽर्चयेत् ।
नवग्रहाश्च पूज्या वै होमं तेषां तु कारयेत् ।
दुर्गा गणपतीपूज्यौ तयोः होमं प्रकल्पयेत् ।।
अग्रे नैवेद्यमतुलं दापयेत् घृतपाचितम् ।
ब्राह्मणान् भूषयेत् तैस्तैरलङ्कारैः यथाविधि ।
सपत्नीकान् प्रयत्नेन जपं कुर्यात्तु षोडश ।।
सहस्रशीर्षा इत्यादि कुञ्चिकाभिस्तु मन्त्रयेत् ।
विष्णुं मत्वा ब्राह्मणास्तु लक्ष्मीरूपा स्त्रियोऽर्चयेत् ।।
छत्रं चोपानहौ चैव वस्त्राण्याभरणानि च ।
फलानि सप्तधान्यं च भोजनं च यथेप्सितम् ।।
दातव्यंतु सभार्याणां विष्णुर्मे प्रीयतामिति ।
एवं कृते तु यत्पुण्यं अशक्यं कथितुं मया ।
कल्पकोटिसहस्राणि कल्पकोटि शतानि च ।।

ब्रह्मलोकं समासाद्य व्रती मोदति ब्रह्मवत् ।
ब्रह्मलोकाद् रुद्रलोकं इन्द्रलोकमतः परम् ॥

क्षीणलोकः ततो देवि मदीयं लोकमाप्नुयात् ।
तत्र भुक्त्वा तु विस्तीर्णान् भोगान् त्रैलोक्यसुन्दरि ॥

मद्देहे लीयते चैव पुमानमृततां व्रजेत् ।
सार्वभौमस्तु राजा वै जायते विपुले कुले ॥

य इदं श्रुणुयान्नित्यं वाच्यमानं व्रतं त्विदम् ।
सहस्रकुलमुद्धृत्य विष्णुलोके महीयते ॥

त्वया काञ्चनपुर्याख्यं व्रतमेतत् कृतं पुरा ।
व्रतप्रसादात् भर्तायं लब्धः त्रैलोक्यपूजितः ॥

इति काञ्चनपूरीव्रतम्

अथ द्वात्रिंशोऽध्यायः । वृषोत्सर्गः ।

कार्तिक्यामाश्वयुज्यां वा । तत्रादौ वृषभं परीक्षेत । जीववत्सायाः पुत्रं सर्वलक्षणोपेतं नीललोहितोपेतं वा पुच्छ-पादेषु सर्वशुक्लं, यूथस्याच्छादकम् ।

ततो गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं श्रपयित्वा पूषागा अन्वेतु न इह रादिति च हुत्वा । वृषभमय-स्कारमाह्वयेत् । एकस्मिन् पार्श्वे चक्रेण अपरस्मिन् शूलेन चाङ्कितं च हिरण्यवर्णेति चतसृभिः शन्नोदेवीरिति च स्वाप-येत् । स्नातालंकृतं स्नातालंकृताभिः चतसृभिः वत्सतरीभिः सार्धमानीय रुद्रान् पुरुषसूक्तं कूश्माण्डीश्च जपेत् ।

पितावत्सेति मन्त्रेण वृषस्य दक्षिणे कर्णे ।
वृषो हि भगवान् धर्मः चतुष्पादः प्रकीर्तितः ॥
वृणोभि तमहं भक्त्या समो रक्षतु सर्वतः ।

**मन्त्राः** ।

"एतं युवानं परिवो ददामि तेन क्रीडन्तीः चरतप्रियेण मानः शाप्तजनुषेति ।

माहास्महि प्रजया मातनूभिर्मारधाम द्विषते सोमराजन् ।
वृषं वत्सतरीयुक्तम् ऐशान्यां कारयेत् दिशि ।
होतुर्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च ।
अयस्कारस्य दातव्यं वेतनं मनसेप्सितम् ॥
भोजनं बहुसर्पिष्यं ब्राह्मणांश्चात्र भोजयेत् ।
उत्सृष्टो वृषभो यस्मिन् पिबत्यथ जलाशये ॥
शृङ्गेणोल्लिखिते भूमिं यत्र क्वचन दर्पितः ।
पितृणामन्नपानादि प्रभूतमुपतिष्ठते ॥

**ब्रह्मपुराणे** ।

अन्यच्चैत्र्यां वृषोत्सर्गः कार्तिक्यां वा प्रयत्नतः ।
कर्तव्यः श्लक्ष्णशश्चेतः त्रिभिर्वर्णैः द्विजातिभिः ॥
वृषोत्सर्गादृते नान्यत् पुण्यमस्ति महीतले ।

**॥ अथाद्भुतशान्तिप्रकरणम् ॥**

[1]गृहमध्ये स्थूणाविरोहेत् कपोतो वाऽगारमध्ये निपतेत् । वायसो वा गृहं प्रविशेत् । गौर्गृहमारोहेत् । गौरात्मानं प्रति-

---

1, सामवेदे अष्टौ ब्राह्मणानि सन्ति तत्र षड्विंशब्राह्मणं द्वितीयं तत्र षष्ठाध्याये अद्भुतशान्तिः वर्णिता साच एवम्—

धावेत् । अनड्वान् वा मुदित उल्लिखेत् । अनग्नौ वा धूमो जायते । वल्मीकञ्चोपजायते । छत्राकनिर्यासञ्चोपजायते । मण्डूकोऽवृष्टौ वाशयेत् । स्वप्ने अस्थिदन्तपतने गृहपतिजायां सहोपपतिर्विन्देत अन्येषु वा गृहोत्पातेषु देवयजनोल्लेखन प्रभृत्यग्निमुखान्तं कृत्वा, स्थालीपाकं जुहोति । यत इन्द्र भयामह इति पुरोऽनूच्य स्वस्तिदा विशस्पतिरिति याज्यया आज्याहुतीरुपजुहोति व्यस्ते व्याख्याते ।

---

"अथातोऽद्भुतानां कर्मणां शान्तिं व्याख्यास्यामः" । इत्यारभ्य ऐन्द्र, याम्य वारुण, धानद, आग्नेय, वायव्य, सौम्य, वैष्णव्येत्यष्टौ इत्यादिना । अथ यदास्य मणिमणिककुम्भस्थालीवरणमायासो राजकुलविवादो वा .... तान्येतानि सर्वाणि इन्द्रदैवत्यानि अद्भुतानि प्रायश्चित्तानि भवन्ति । अथ यदास्यप्रजायां पशुषु शरीरे वाऽरिष्टानि प्रादुर्भवन्ति व्याधयो वा अनेकविधाः, अतिस्वप्नमस्वप्नं अतिभोजनमभोजनं .... तान्येतानि यमदैवत्यान्यद्भुतानि इति, अनन्तरं वरुणदैवत्यानि, क्षेत्रगृहसंस्थेषु धान्येषु ईतय. प्रादुर्भवन्ति इति, एवमादिना अरिष्टान्युक्त्वा तत्तद्दैवत्यस्थालीपाकं सामजपं च विदधाति ।

अत्र पृथिवी तटति स्फुटति कूजति, कम्पति, ज्वलति, रूदति धूमायति, गौर्गृहमारोहेत् - एतानि अग्निदैवत्यानि, इति उक्त्वा यदा देवतायतनानि कम्पन्ते दैवतप्रतिमा हसन्ति रुदन्ति गायन्ति, नृत्यन्ति स्फुटन्ति स्विद्यन्ति उन्मीलन्ति निमीलन्ति प्रतिप्रयान्तिनद्यः एतानि विष्णुदैवत्यान्यद्भुतानि, इति उत्पातप्रकारः तच्छान्तिश्च वर्ण्यते । तत्र देवतानां स्थालीपाकहोमानन्तरं उपहोमो विधीयते । तत्र-इन्द्राय स्वाहा, शचीपतये स्वाहा, वज्रपाणये, ईश्वराय इति, देवतानां विग्रहवत्त्वे श्रौतं प्रमाणमिदं इति प्रसंगतः ज्ञाप्यते । तथा यमाय स्वाहा - प्रेताधिपतये स्वाहा, दण्डपाणयेस्वाहा । वरुणाय, पाशपाणये । वैश्रवणाय यक्षाधिपतये, हिरण्यपाणये । विष्णवे स्वाहा, चक्रपाणये स्वाहा । रुद्राय, पशुपतये, शूलपाणये इत्यादि, मूलग्रन्थे समग्रं द्रष्टव्यम् ।

शन्न इन्द्राग्नीभवतामवोभिः, शन्न इन्द्रावरुणा रातहव्या। शमिन्तासोमासुविताय शंयोः, शन्नइन्द्रापूषणा वाजसातौ॥ कयानश्चित्र आभुवत्, को अद्य युङ्क्ते, भवतंनःसमनसाविति। स्विष्टकृत् प्रभृति आधेनुवरप्रदानम्।

अथाग्रेण शमीपत्रेषु हुतशेषं निदधाति। शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तुनः। इति स्थालीसंक्षालनमाज्यशेषमुदकशेषञ्च पात्र्यां समानीय एतेषूत्पातेषु उत्पन्नेषु निनयेत्। प्रोक्षेद्वा तच्छंयोरावृणीमह इति।

गर्ग उवाच।

अनग्निर्दीप्यते यत्र राष्ट्रे भृशमतिस्वरः।
न दीप्यते चेन्धनवान् तद्राष्ट्रं पीड्यते नृप॥
प्रज्वलेदद्रुमं यत्र तथार्द्रम्वा कथञ्चन।
प्रसादतोरणद्वारं नृपवेश्म सुरालयम्॥
एतानि यत्र दह्यन्ते तत्र राजभयं भवेत्।
विद्युता वा प्रदह्यन्ते तत्रापि नृपतेर्भयम्॥

---

अत्र सायणभाष्यम् — अथ इष्टप्राप्तिसाधनकर्मनिरूपणानन्तरं अतः— अनिष्टपरिहारसाधनकर्मनिरूपणस्य प्रस्तुतत्वात् अद्भुतानां दैविकानां अनिष्टप्राप्तिसूचकानां कर्मणां तत्सूचितदोषनिर्हरण साधनात्मिकां शान्तिं व्याख्यास्यामः विशेषेण अनुवर्णयामः - इत्यादिना प्रतिमन्त्रं व्याख्यां कृत्वा अन्ते। एवं साङ्गहोमानन्तरं अद्भुतसूचितः दोषः शाम्यत्येव इत्युपसंहारः कृतः॥

इति षड्विंशब्राह्मणे षष्ठाध्याये १—१२ खण्डाः। अत्र अद्भुतशान्तिविषये श्रौतप्रमाणं विद्यत इति ज्ञापितम्।

अनेकशानि तमांसि स्युः विशालमुपपद्यते ।
धूमश्चानग्निजो यत्र तत्र विद्यान्महद्भयम् ॥
तडिद्विनाऽभ्रे गगने भयं स्यात् वृष्टिवर्जिते ।
दिवा सतारे गगने तथैव भयमादिशेत् ॥
विकारश्चायुधानां स्यात् तत्र संग्राममादिशेत् ।
त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः ।
समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च ॥
दद्यात् सुवर्णं च तथा द्विजेभ्यो
गाञ्चैव वस्त्राणि तथा भुवश्च ।
एवं कृते पापमुपैति नाशं
यदग्निवैकृत्यभयं द्विजेन्द्र ॥

गर्ग उवाच ।

अतिवृष्टिरनावृष्टिः दुर्भिक्षादिभयं मतम् ।
अनृतौ तु दिनादूर्ध्वं वृष्टिर्ज्ञेया भयाय तु ॥
अनल्पे विकृता चैव विज्ञेया राजमृत्यवे ।
शीतोष्णता विपर्यासे ऋतूनां रिपुजं भयम् ।
शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत् ॥
अङ्गारपांसुवर्षेषु नगरं संविनश्यति ।
मज्जास्थिस्नेहमांसानां जनसारभयं भवेत् ॥
प्रविशन्ति यदा ग्राममारण्यमृग-पक्षिणः ।
अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति जलोद्भवाः ॥
स्थलजा वा जले यान्ति घोरं वा वान्ति निर्भयाः ।
राजद्वारे पुरद्वारे शिवा वात्यशिवप्रदा ॥

दिवा रात्रिचरा वाऽपि रात्रौ वाऽपि दिवाचराः ।
ग्राम्यास्त्यजन्ति ग्रामं वा तं चोत्पातं विनिर्दिशेत् ॥
दीप्ता वा सन्ति सन्ध्यास्तु मण्डलानि च कुर्वते ।
रसन्ते विप्रियं यत्र तदा प्रेतफलं लभेत् ॥
प्रदोषे कुक्कुटावाचो हेमन्ते वाऽपि कोकिलः ।
अर्कोदयेऽर्काभिमुखी शिवा यमभयं वदेत् ॥
गृहं कपोतः प्रविशेत् क्रव्याद्वा मूर्ध्नि लीयते ।
मधु वाऽमक्षिका कुर्यात् मृत्युः गृहपतेः भवेत् ॥
प्राकारद्वारगेहेषु तोरणाऽपण वीथिषु ।
केतुच्छत्रायुधाख्येषु क्रव्यात् सम्पतते यदि ॥
जायन्ते वाऽथ वल्मीका मधु वा स्यन्दने यदि ।
प्रदेशो नाशमायाति राजा च म्रियते तदा ॥
मूषिकान् शलभान् दृष्ट्वा प्रभूतं क्षुद्भयं भवेत् ।
काष्ठोल्मूकास्थिशृङ्गास्याः श्वानो मारकवेदिनः[1] ॥
दुर्भिक्षवेदना ज्ञेया काका धान्यमुषो यदि ।
जना अभिभवन्ति स्म निर्भया रणवेदिनः ॥
काको मैथुन युक्तश्च श्वेतः स यदि दृश्यते ।
राजा वा म्रियते तत्र तदा देशो विनश्यति ॥
उलूको वसते यत्र निपतेद्वा तथा गृहे ।
ज्ञेयो गृहपतेः मृत्युः धननाशस्तथैव च ॥
मृग-पक्षिविकारेषु कुर्याद्धोमं सदक्षिणम् ।
देवाः कपोत इति च जप्तव्यं पञ्चभिः द्विजैः ॥

---

1, श्वानः उल्मुकाद्विमुखाः मरणज्ञापकाः इति विद्यात् ।

सुदेव इति च केन देया गावः सदक्षिणाः ।
जपेत् शाकुनसूक्तञ्च मनो वेदशिरांसि च ॥
देवाः कपोता,दयो मन्त्राः ऋग्वेदे प्रसिद्धाः ।

गावश्च देया विधिवत् द्विजानां
सकाञ्चना वस्त्रयुगोत्तरीयाः ।
एवं कृते शान्तिमुपैति पापं
[1]मृगैः द्विजैर्वा विनिवेदितं यत् ।

गर्ग उवाच ।

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा ॥

अमानुषाश्च षण्डाश्च सञ्जाताऽव्यञ्जनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा त्रयः ॥

पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥

निर्वासयेत् तान्नृपतिश्च राष्ट्रात्
स्त्रियश्च पूज्याश्च ततोद्विजेन्द्राः ।
यादृच्छिकैः ब्राह्मण तर्पणञ्च
लोके ततः शान्तिमुपैति पापम् ॥

ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् ।
स्त्रियश्च कलहायन्ते वाचा निघ्नन्ति बालकान् ॥

---

1. मृगपक्षिभिः पूर्वोक्तविकारिभिः सूचितं भयं शान्तं भवति ।

क्रियाणामुदितानाञ्च विस्थितिर्यत्र दृश्यते ।
अग्निर्यत्र न दीप्येत हूयमानासु शान्तिषु ॥
पिपीलिकाश्च क्रव्यादा यान्ति वान्तरितास्ततः ।
ब्राह्मणान् सुहृदो मान्यान् जनो यत्रावमन्यते ॥
शान्तिमङ्गलहोमेषु नास्तिको यत्र जायते ।
राजा वा म्रियते यत्र सर्वदेशो विनश्यति ॥
राज्ञो विनाशे सम्प्राते निमित्तानि निबोध मे ।
ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणांश्च विनिन्दति ॥
ब्राह्मणानवमन्येत ब्राह्मणांश्च जिघांसति ।
न तान् स्मरति कृत्येषु याचितश्चावसीदते ॥
नमनश्च नचाशीश्च प्रशंसा नाभिनन्दति ।
अपूर्वं तु करं लोभात्तथा सम्पीडिते जने ॥
एतांश्चाभ्यर्चयेत् सम्यक् सपत्नीकान् द्विजोत्तमान् ।
भोज्यानि चैव कार्याणि सुराणां बलयस्तथा ॥
गावश्च देया द्विजपुङ्गवेभ्यो
भुवन्तथा काञ्चनमम्बरञ्च ।
होमश्च कार्यो द्विजपूजनञ्च
एवं कृते शान्तिमुपैति पापम् ॥

इति मत्स्यपुराणोक्तान्यद्भुतशान्तिकानि समाप्तानि ।

इति श्रीमहाराजाधिराज श्रीमहादेवस्य समस्तकरणाधीश्वर सकलविद्याविशारद - श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ व्रतखण्डे अद्भुतशान्तिकानि समाप्तानि ॥

॥ श्रीः ॥

# ॥ चतुर्वर्गचिन्तामणिः ॥

हेमाद्रि विरचितः

## तत्र दानखण्डम्

### प्रथमप्रकरणम्

कल्याणानि ददातु वो गणपतिर्यस्मिन्न तुष्टे सति
क्षोदीयस्यपि कर्मणि प्रभवितुं ब्रह्माऽपि जिह्माहृते ।
जाते तच्चरणप्रणामसुलभे सौभाग्यभाग्योदये
रङ्कस्याङ्कमनङ्कुशा निविशते देवेन्द्रलक्ष्मीरपि ॥

अस्ति शस्तगुणस्तोम सोमवंशविभूषणम् ।
महादेव इति ख्यातः राजराजेव भूतले ॥

षोडशक्रतवो येन चक्रिरे चक्रवर्तिना ।
अपूर्णपञ्चयज्ञानां नृपाणां तेन का तुला ॥

अनेन चिन्तामणिकामधेनुकल्पद्रुमानर्थिजनाय दत्तान् ।
विलोक्यशङ्के किममुष्य सर्वं गीर्वाणनाथोऽपि करप्रदोऽभूत् ॥

तस्यास्ति नाम हेमाद्रिः सर्वश्रीकरणप्रभुः ।
निजोदारतया यश्च सर्वश्रीकरणप्रभुः ॥

शूराणामवधिर्निधिश्च यशसामेकाश्रयः सम्पदां
दातॄणां प्रथमः कलाकुलगृहे वैदग्ध्यभाजां गुरुः ।
धौरेयश्च विपश्चितां सुकृतिनामद्वैतवादास्पदं
नैवासीन्न च वर्तते न भविता हेमाद्रि सूरेः परः ॥

बिभर्ति नूनं द्विजवेषमेव स एव हेमाद्रिरिति प्रतीमः ।
उदारसन्तानवतो यदस्य, कल्पद्रुमं दक्षिण बाहुमाहुः ॥
अथामुना धर्मकथादरिद्रं त्रैलोक्यमालोक्यक लेर्बलेन ।
तस्योपकारे दधताऽनुचिन्तां चिन्तामणिः प्रादुरकारि चारुः ॥

पञ्चखण्डात्मके शास्त्रे व्रतखण्डादनन्तरम् ।
दानखण्डमिदं तत्र द्वितीयमथ कथ्यते ॥
अस्मिन्ननेकदानौघरत्नरत्नाकरायिते ।
महाप्रकरणानां च विज्ञेयोऽयमनुक्रमः ॥
दानस्तुतिस्ततो दान-स्वरूपस्य निरूपणम् ।
अङ्गप्रसंगो दानानां परिभाषाभिभाषणम् ॥
श्रोतुः श्रद्धाभिवृद्धयर्थमथदानफलाऽवलिः ।
तुलापुरुशमुख्यानि महादानानि षोडश ॥
अखर्वपर्वतश्रेणि विश्राणनविधिस्ततः ।
परस्तादतिदानानां विधिर्विधुतपातकः ॥
ततो दशमहादान विधि-वैभववर्णनम् ।
कृष्णाजिनादि दानानि देवतादानसंग्रहः ॥
अथ कालविशेषेण बहुधा दानवर्णनम् ।
अनन्तफलदानानामनन्तरमुपक्रमः ॥
एवं प्रकरणान्यत्र त्रयोदश महामतिः ।
ब्रवीति प्राज्यराज्यादि साधनानि मनीषिणाम् ॥

तत्र व्यासः । अथ दानप्रशंसा तावदभिधीयते ।
वर्णानामाश्रमाणां च चातुर्वर्ण्यं युधिष्ठिर ।
दानधर्मं प्रवक्ष्यामि यथा वेदेन भाषितम् ॥

नन्दिपुराणे ।

दानं परं प्रशंसन्ति दानमेव परायणम् ।
दानं बन्धुर्मनुष्याणां दानं कोषोह्यनुत्तमम् ॥
दानं तत्त्वं परं द्रव्यं दानं माता पिता यथा ।
दानेन न विना किञ्चित् प्रार्थितं फलमाप्यते ॥
अपि बालाग्रमात्रस्य तुला तस्य न विद्यते ।
न दानशीलिनामापत् तस्माद्दानं समाश्रयेत् ॥
हारनूपुरसंघोष पूरितोत्तममन्दिरम् ।
लावण्यगुणसंपत्तिः दानादेव हि लभ्यते ॥

सौरपुराणे ।

[1]न दानादधिकं किञ्चिद् दृश्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवती जनः ॥
धर्मार्थकाममोक्षाणां साधनं परमं स्मृतम् ।

उशना ।

दानादृते नोपकारो विद्यते धनिनोऽपरः ।
दीयमानं हि यत्तस्य भूय एवाभिवर्धते ॥

आह वेदव्यासः ।

यद्ददाति विशिष्टेभ्यो यच्चाश्नाति दिने दिने ।
तत् ते वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥

---

1. दानेन सर्वान् कामानवाप्नोति चिरजीवित्वं, संहितोपनिषत्-ख-४-खा-१ ।

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि सुतैरपि ॥

बृहस्पतिः ।

तपोधर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ।
द्वापरे चाध्वरः प्रोक्तः कलौदानं दयादमः[1] ॥

अत्रार्थे शतपथश्रुतिः ।

तदेतत्त्रयं शिक्षेत दमं दानं दयामिति[2] ।
दानेन भोगी भवति मेधावी वृद्धसेवया ॥
अहिंसया च दीर्घायुरिति प्राहुः मनीषिणः ॥

यमः । यतीनां तु शमो धर्मं स्त्वनाहरो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥

पापकर्मसमायुक्तं पतन्तं नरके नरम् ।
त्रायते दानमेकं तु पात्रभूतेद्विजे कृतम् ॥

तथा । न्यायेनार्जनमर्थानां वर्धनं चाभिरक्षणम् ।
सत्पात्रप्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥

---

1. तपःपरं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमित्याहुः दानमेवकलौयुगे ॥ पराशरः

2. त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः देवा, मनुष्या, असुरा, उषित्वा, ब्रह्मचर्यं देवा ऊचुः ब्रवीतुनो भगवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुः दाम्यतेति न आत्थेति ओमिति होवाच व्यज्ञासिष्टेति ।

एवं मनुष्या गत्वा ऊचुः तेष्वपि द इत्येवा वोचत् दत्त इति अभिप्रायः । एवं असुराः पप्रच्छुः तेष्वपि द इत्येवा वोचत्, दयध्वमिति भावः । अनन्तरं तदेतत् त्रयं शिक्षेत दमं दानं दयामिति । बृहदारण्यके-अध्या-५ ब्रा. २

कूर्मपुराणे ।

दानधर्मात् परोधर्मो भूतनां नेह विद्यते ।
तस्माद्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः ।

द्विजातिभिरित्युपलक्षणं दानस्य सर्वसाधारणत्वात् ।

महाभारते ।

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्याविपत्तयः ॥

ब्राह्मणायाभिरूपाय योदद्यादर्थमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥

कूर्मपुराणे ।

नहि दानात् परतरमन्यदस्तीति मे मतिः ।
धनधान्यवतः किञ्चिदहार्यं राजतस्करैः ॥

वह्निपुराणे ।

तपःसु चैव तीर्थेषु व्रतेषु नियमेषु च ।
सम्यक् चीर्णेषु विप्रर्षे पश्चाद्दानं समाचरेत् ॥

व्यासः ।

अहन्यहनियाचन्तमहं मन्ये गुरुं यथा ।
मार्जनं दर्पणस्येव यः करोति दिने दिने ॥

किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः ।
यदर्थं धनमिच्छन्ति, तच्छरीरमशाश्वतम् ॥

यदि नाम न धर्माय, न कामाय न कीर्तये ।
यत् परित्यज्य गन्तव्यं, तद्धनं किं न दीयते ॥

इच्छानुरूपो विभवः कदा कस्य भविष्यति ।
अदाता पुरुषस्त्या[1]गी धनं संत्यज्य गच्छति ॥
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ।

**अगस्त्यः ।**

गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही ॥

येन भुक्तं न च हुतं न तीर्थे मरणं कृतम् ।
हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम् ॥
दीना विवसना रूक्षाः कपालाङ्कित पाणयः ।
दृश्यन्ते हि महाराज जायमानाः पुनः पुनः ॥

सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धि र्नरकायोपपद्यते ॥

**व्यासः ।**

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत् पुरा ।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥

**स्कन्दपुराणे ।**

बोधयन्ति न याचन्ते देहीति कृपणं जनाः ।
अवस्थेयमदानस्य माभूदेवं भवानपि ॥

---

1. कृपणेन समोदाता न भूतो न भविष्यति । अस्पृशन्नेव वित्तानि यःपरेभ्यः प्रयच्छति ।

देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः ।
यदिदं कष्टमर्थित्वं प्रागदानफलं हि तत् ॥
एकेन तिष्ठताऽधस्ता दन्येनो परितिष्ठता ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥
[1]दीयमानं तु यो मोहाद्गो विप्राग्नि सुरेषु च ।
निवारयति पापात्मा तिर्यग् योनिं व्रजेत्तु सः ॥
दीयमानम्, तदुद्देशेन त्यज्यमानम्

महाभारते ।

[2]दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्तिनाशम् ।
परोऽपिबन्धुत्वमुपैति दानाद्दानं हि सर्वंव्यसनानि हन्ति ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवस्य समस्तकरणाधीश्वर सकलविद्या-विशारद श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे दानप्रशंसा प्रकरणम् ॥

## अथ द्वितीयप्रकरणम्

दानस्वरूपमुपवर्ण्यते । तत्र देवलः ।

अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य कथ्यते ॥

उदिते - शास्त्रनिरूपिते । अर्थानां प्रतिपादनं नाम पात्रं प्रति स्वस्वामिभावापादनपर्यन्तः त्यागः ।

---

1. विप्राग्निगोषु द्रव्यत्यागसमये मास्तु इति योवारयति सः तिर्यग्योनिं व्रजति ॥
2. दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्वभूतान्युपजीवन्ति, दानेनारातीरपानुदन्त, दानेन द्विषन्तोमित्राभवन्ति, दाने सर्वं प्रतिष्ठितं, तस्माद्दानं परमं वदन्ति ॥ तैत्तिरीयोपनिषत्-४.५०

द्विहेतु षडधिष्ठानं षडङ्गं षड्विपाकयुक् ।
चतुष्प्रकारं द्विविधं त्रिनाशं दानमुच्यते ॥
अस्य विवरणं तेनैवोक्तम् ।

तत्र द्विहेत्विति ।

नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदावहम् ।
श्रद्धा भक्तिश्च दानानां वृद्धिक्षयकरे स्मृते ॥

श्रद्धा - आस्तिक्यबुद्धिः । स्नेहपूर्वकमभिध्यानं भक्तिः । शक्तिरितिपाठे, शक्तिः औदार्यम् ।

षडधिष्ठानमिति ।

षट्, अधिष्ठानानि - आश्रयाः निमित्तत्वेन यस्य तत् तथा । तान्याह—

धर्ममर्थं च कामं च व्रीडाहर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥

तानि विविनक्ति ।

पात्रेभ्यो दीयते नित्यमनपेक्ष्यप्रयोजनम् ।
केवलं त्यागबुद्ध्या यद्धर्मदानं तदुच्यते ॥

प्रयोजनमनपेक्ष्य - दृष्टफलाननुसन्धानेन इत्यर्थः ।

प्रयोजनमपेक्ष्यैव प्रसङ्गाद्यत् प्रदीयते ।
तदर्थदानमित्याहुः ऐहिकं फलहेतुकम् ॥

स्त्री-पान-मृगयाक्षाणां प्रसङ्गाद्यत् प्रदीयते ।
अनर्हेषु च रागेण कामदानं तदुच्यते ।

[1]अनुक्रोशः दया ।

चतुष्प्रकारमाह ।

ध्रुवमाजस्त्रिकं काम्यं नैमित्तिकमिति क्रमात् ।
वैदिकोदानमार्गोऽयं चतुर्धा वर्ण्यते द्विजैः ।
प्रपाऽऽराम-तडागादि सर्वकामफलं ध्रुवम् ।
तदाजस्त्रिकमित्याहुः दीयते यद्दिने दिने ॥

अपत्यविजयैश्वर्य-स्त्री-बालार्थं यदिष्यते ।
इच्छासंज्ञं तु तद्दानं काम्यमित्यभिधीयते ॥

कालापेक्षं क्रियापेक्ष मर्थापेक्षमिति स्मृतम् ।
त्रिधा नैमित्तिकं प्रोक्तं सहोमं होमवर्जितम् ॥
त्रैविध्यमाह ।

नवोत्तमानि चत्वारि मध्यमानि विधानतः ।
अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥

तदेव विविनक्ति ।
अन्नं दधि मधु त्राणं-गो-भू-रुक्मा-श्व-हस्तिनः ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥

विद्यादानादनावास परिभोगौषधानि च ।
दानानि मध्यमानीह मध्यमद्रव्यदानतः ॥

---

1. इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्तनात् । श्लाघानुशोचनाभ्यां च भग्न तेजो विपद्यते । इति दानदीपिकायामधिकः दृश्यते अंश । अयं श्लोकः उत्तरत्र विद्यते अत्र ग्रन्थे ॥

परिभोग इति, परिभोगसाधनं खट्वाऽऽसनादि ।

उपानत् प्रेङ्ख यानानि छत्र पानाऽऽसनानि च ।
दीप-काष्ठ-फलादीनि चरमं बहुवार्षिकम् ॥

बहुत्वादर्थजातानां सङ्ख्या शेषेषु नेष्यते ।
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः ॥

बहुवार्षिकं, बहूनि वर्षाणि प्राप्तं पुरातनमिति यावत् ।
एतेनोत्तममपि हस्त्यश्वादि जीर्णतां प्राप्तमधमं भवति ।
विनाशत्वमाह ।

इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्तनात् ।
श्लाघा-ऽनुशोचनाभ्यां च भग्नतेजोविपद्यते ॥

तस्मादात्मकृतं पुण्यं न वृथा परिकीर्तयेत् ।
भुक्तवानिति तत्प्राहु. तमेव कृतवादिनम्[1] ॥

श्लाघा प्रशंसा । वृथा रक्षादिप्रयोजनव्यतिरेकेण ।

कूर्मपुराणे ।

नित्यं नैमित्तिकं काम्यं विमलं चेति कथ्यते ।
अहन्यहनि यत् किञ्चिद्दीयतेऽनुपकारिणे ॥

अनुद्दिश्य फलं तत् स्याद् ब्राह्मणाय तु नित्यकम् ।
यत्तु पापोपशान्त्यर्थं दीयते विदुषां करे ॥

नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ।
पापोपशान्त्यर्थमिति नियतविमित्तोपलक्षणम् ॥

---

1. नः इति पाठः ।

अपत्य-विजयै-श्वर्य-स्त्री-बालार्थं प्रदीयते ।
यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ।
चेतसा भक्तियुक्तेन दानं तद्विमलं शिवम् ॥

मनुः । [1]येन येन तु भावेन यद्यद्दानं प्रयच्छति ।
तत्तत्तेनैव भावेन प्रति प्राप्नोति पूजितः ॥

तदुक्तं भगवद्गीतासु ।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥

विष्णुधर्मोत्तरे ।

कृतानि विधि हीनानि वञ्चनार्थं तु तामसम् ।
क्रोधलोभाभिभूतेन राजसं परिकीर्तितम् ॥

सात्त्विकानि भवन्तीह श्रद्धया परया द्विज ।
तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः सदा ॥

अतोऽन्यथातु मानुष्ये राजसानां फलं भवेत् ।
सात्त्विकानां फलं भुङ्क्ते देवत्वे नाऽत्र संशयः ॥

---

1. अवधारणे तु शब्दः - भावेन - अभिप्रायेण - फलाभिसन्धिकः स्वर्गो मे स्यादिति । मुमुक्षुः - मोक्षाभिप्रायेण - निष्कामः - यद्यद्दानं ददाति । तेनैव भावेन उपलक्षितः - तत्तद्दानफलद्वारेण जन्मान्तरे पूजितस्सन् प्राप्नोति । कुल्लूकभट्टः ॥ अ ४-श्लो २३४ ।

गारुडपुराणे ।

> कायिकं वाचिकं दानं मानसं च त्रिधा मतम् ।
> अर्हते यत् सुवर्णादि दानं तत्कायिकं मतम् ॥
>
> आर्तानामभयं दद्यीत्येतद्वै वाचिकं स्मृतम् ।
> विद्ययास्याद्यया योगी तद्दानं मानसं द्विजाः ॥

हारीतः ।

असद्द्रव्यदान - मस्वर्ग्यं[1] - यच्च दत्वा परितप्यते तदर्थं-दानमफलं, यच्चोपकारिणे ददाति तन्मात्रं परिक्लिष्टं, यच्च-सोपधं ददाति अभ्याचितमल्पफलं यच्चापात्राय ददाति अनिष्टदानं भवति । यच्च दत्वा परिकीर्त्यते, यच्च स्मयदानमासुरं यच्चाश्रद्धया ददाति क्रोधात् राक्षसं, यच्चाक्रुश्य ददाति दत्वा चाऽऽक्रोशति असत्कृतं पैशाचं, यच्चावज्ञातं ददाति दत्वा च अवज्ञानीते, मुमूर्षोः तामसं यच्चाप्राकृतो ददाति, एते दानोपसर्गा यैरुपसृष्टं दान मसिद्ध मधम्बद्ध-मस्वर्ग्य-मयशस्य-मध्रुव-मफलं वा ।

तद्धि अदानम् - तस्मिन्नेव सङ्कल्पकाले दीयमानद्रव्यासमर्पणम् । उपकारिणे - प्रत्युपकारसमीहयेत्यर्थः । तन्मात्रं - यावद्दत्तं तावन्मात्रम् । सोपधं स्नेहाद्युपाधि सहितम् । अभ्याचितम् - लोकप्रतिपत्त्यर्थं ख्यापितम् । अनिष्टदानं - वृथैव दानम् । स्मयदानं - मादृशोऽन्यो दाता नास्ति इत्येवंविधो भावविशेष. स्मयः तेन यद्दानम् । अप्राकृतः मत्वादि ।

---

1. असद्द्रव्यप्रदाने नस्वर्गं इति पाठः ।

भविष्यत्पुराणे ।

महादानानि वै विद्याद्दति दानानि सर्वदा ।
पुण्यमिष्टं च पूर्तञ्च वृथा दानं च यत्नतः ॥

महादानानि वक्ष्यमाणानि षोडश तुलापुरुषादीनि ।

कनकाश्व तिला नागा दासीरथ मही गृहाः ।
कन्या च कपिलाधेनु महादानानि वै दश ॥

[1]सामवेदोपनिषदि ।

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येते जपवापन दोहनात्, उपस्पर्शनात् ॥

शङ्खः । इष्टिभिः पशुबन्धैश्च चातुर्मास्यैर्यजेत्तुयः ।
अग्निष्टोमादिभिर्यज्ञैः यजेत च स इष्टवान् ॥

अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् ।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥

एकाग्निकादौ यत् कर्म त्रेतायां यच्च हूयते ।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते ॥

रोगिणां परिचर्याच पूर्तमित्यभि निर्दिशेत् ।

व्यासः ।

पुष्करिण्यस्तथा वाप्यो देवतायतनानि च ।
अन्नदानमथारामाः पूर्तमित्यभिधीयते ॥

---

1. फलतः, अधिकान्याहुः । आचार्याः । मातृपितृन् नरकादुद्धरन्ति । पुस्तकदानेन जपलक्षणफलं, भूमिदानेन, सकलप्राणिजीवनभूत बीजावापन रूपात् फलात् । धेनुदानेन सर्वं सेव्यरसदोहनात् । काण्डूयनाच्च नरकादुद्धरन्ति । संहितोपनिषत् - ख-४. वा-११-१२ सायणभाष्यम् ।

नारदः ।

ग्रहोपरागे यद्दानं सूर्यसङ्क्रमणेषु च ।
द्वादश्यादौ तु यद्दानं तदेतत् पूर्तमुच्यते ॥

इति श्रीमहाराजाधिराज श्रीमहादेवस्य समस्तकरणाधीश्वर-सकलविद्याविशारद-श्रीहेमाद्रि विरचिते चतुर्वर्गचिन्तामणौ दानखण्डे दानस्वरूपप्रकरणम् ॥ २ ॥

॥ अथ तृतीयप्रकरणम् ॥

अथ दानाङ्गनिरूपणम् ॥

तानि च द्रव्य-काल-श्रद्धा-संज्ञकानि ।

तदुक्तं भविष्यत्पुराणे ।

प्रतिग्रहीता द्रव्यं च कालो देशश्च पावनः ।
श्रद्धा च सात्विकी ज्ञेयं दानानामङ्गपञ्चकम् ॥

तत्र पात्रनिरूपणम् ।

स्कन्दपुराणे देवीं प्रति ईश्वरवचनम् ।

श्रुतीनामाकरा ह्येते रत्नानामिव सागराः ।
विप्रा विप्राधिपमुखि पूजनीयाः प्रयत्नतः ॥

विप्राधिपः चन्द्रः, तद्वन्मुखं यस्या सा तथा देवीसम्बोधनमेतत् ।

यत्र वेदविदो विप्रा न प्राश्नन्त्युत्तमं हविः ।
न तत्र देवा देवेशि हविरश्नन्ति कर्हिचित् ॥

तथा च तैत्तिरीयश्रुतिः । यावती वै देवताः ता स्सर्वा वेदविदि, ब्राह्मणे वसन्तीत्या[1]दि ।

---

1. तैत्तिरीयारण्यके प्र. २ आ. १५

त्रियदित्युच्यते व्योम प्रकारः प्रापणे स्मृतः ।
दिवं सम्प्रापयन्त्येते दातॄन् विप्रास्ततः स्मृताः

अपि नारायणोऽनन्तो ब्रह्मा स्कन्दोऽनिलः शिखी ।
तज्ज्ञानं नाभिनन्दन्ति यत्र विप्रा न पूजिताः ॥

येषां प्रसादसुलभ-मायुर्धर्मः सुखं धनम् ।
श्री-र्यशः स्वर्गवासश्च तान् विप्रानर्चयेद्बुधः ॥

**विष्णुधर्मोत्तरे श्रीभगवानुवाच ।**

ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ।
निर्भर्त्सितैश्च निर्भर्त्स्ये तैरहं सर्वकर्मसु ॥

विप्राः परा गतिर्मह्यं यस्मात्पूजयते नृप ।
तमहं स्वेन रूपेण प्रपश्यामि युधिष्ठिर ॥

काणाः कुण्ठाश्च षण्डाश्च दरिद्रा व्याधिताश्च ये ।
एवं रूपाश्च ये विप्रा. पश्य रूपं ममैव ते ॥

एतत्तु ब्राह्मण जातिमात्रस्तुतिपरम् ।

[1]**याज्ञवल्क्यः ।**

तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥

**मत्स्यः ।** नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात्परः शत्रुः नास्ति विप्रात्परो विधिः ॥

1. वेदरक्षणार्थं पितृणां देवानां च तृप्त्यर्थं अनुष्ठानोपदेशद्वारेण धर्मसंरक्षणार्थं च । अतः तेभ्यः दत्तं अक्षय्यफलं भवतीत्यभिप्रायः । विज्ञानेश्वरः ।

आचारकाण्डे-श्लो-११८

वह्निपुराणे ।

न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न च ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥

किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः ।
क्रिमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥

नैकमेकान्ततो ग्राह्यं पठनं हि विशाम्पते ।
वृत्तमन्विष्यतां तात रक्षोभिः किं न पठ्यते ॥

बहुना किमधीतेन नटस्येव दुरात्मनः ।
तेनाधीतं श्रुतं वाऽपि यः क्रियामनुतिष्ठति ॥

कपालस्थं यथा तोयं श्वदृतौ च यथा पयः ।
दुष्टं स्यात् स्थानदोषेण वृत्तहीने तथा श्रुतम् ॥

तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम् ।
चतुर्वेदोऽपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः ॥

सत्यं दम-स्तपो-दान-महिंसेन्द्रियनिग्रहः ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥

वसिष्ठः। यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः ॥

सन् वरिष्ठः । असन् तद्विपरीतः । अत्र च आत्मोत्कर्ष प्रकाशनं यो न करोति स पात्रमिति तात्पर्यम् ।

शंखः । अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।
स्वदारनिरतो दाता स वै ब्राह्मण उच्यते ॥

श्रुतं प्रज्ञानुगं यस्य प्रज्ञाचैव श्रुतानुगा ।
असम्भिन्नार्यमर्यादः स वै ब्राह्मण उच्यते ॥
आमिषोऽर्थार्थपूजा च प्रसङ्गान्न करोति यः ।
निवृत्तो लोभमोहाभ्यां तं देवा ब्राह्मणं विदुः ॥
यमशातातपौ ।
तपो धर्मो दया दानं सत्यं शौचं श्रुतं घृणा ।
विद्या विज्ञान-मास्तिक्य-मेतद्ब्राह्मण लक्षणम् ॥

वशिष्ठः ।

ये क्षान्तदान्ताः श्रुतिपूर्णकण्ठा जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणाः तारयितुं समर्थाः ॥

याज्ञवल्क्यः[1] ।

सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः ।
तेभ्यः क्रियापरा श्रेष्ठा स्तेभ्योऽप्यध्यात्मवित्तमाः ॥

पद्मपुराणे ।

यथा हि सर्वदेवानां ज्येष्ठः श्रेष्ठः पितामहः ।
तथा ज्ञानी सदा पूज्यो निर्ममो निष्प्ररिग्रहः ॥

मत्स्यपुराणे ।

शीलं संवसता ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा सङ्कथनात् ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

---

1. सर्वस्य क्षत्रियादेः प्रभवः - श्रेष्ठाः - जात्या-कर्मणाच - ब्राह्मणेष्वपि श्रुताध्ययन संपन्नाः, उत्कृष्टाः । तेभ्यः - विहितानुष्ठानपराः । तेभ्योऽपि, शमदमादि योगेन आत्मतत्त्वज्ञाननिरताः, श्रेष्ठाः - मिता-रः आचा श्लो॰ १९९ ।

वसिष्ठः । किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥

याज्ञवल्क्यः ।

न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम्[1] ॥

देवलः । मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परः ।
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥

इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं स्तुतौ ।
तेषां परः परः श्रेष्ठो विद्या-वृत्तविशेषतः ॥

ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ॥

अनुपेतः = उपनयनरहितः ।

एकदेशमतिक्रम्य वेदस्याचारवानृजुः ।
स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग् घृणी ॥

एकदेशातिक्रमः - वेदस्य किञ्चिन्न्यूनस्य अध्ययनम् । निभृतः शान्तः ।

---

1. विद्यया-श्रुताध्ययनसंपत्त्या - नापि केवलेन तपसा - शमदमादिना । अपि शब्दात्, केवलेनानुष्ठानेन केवलया जात्या वा - नैवसंपूर्णपात्रता । कथं तर्हि - यत्र-पुरुष-वृत्तं - अनुष्ठानं - इमेचोभे - विद्या - तपसी - च शब्दात् ब्राह्मणजातिश्च - तदेव मन्वादिभिः संपूर्णपात्रं प्रकीर्तितम् । हि - यतः-आ परं उत्कृष्टं पात्रं - नास्ति - अत्र - जातिविद्यानुष्ठान तपस्समुच्चयानां उत्तरोत्तरप्राशस्त्येन फलतारतम्यं द्रष्टव्यम् ।

एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥
वेद-वेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत् प्राप्तः सोऽनूचान इति स्मृतः ॥
अनूचानगुणोपेतो यज्ञ-स्वाध्याय मन्वितः ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥
वैदिकं लौकिकं चैव सर्वं ज्ञानमवाप्य यः ।
आश्रमस्थो वशीनित्यमृषिकल्प इति स्मृतः ॥

दक्षः । समब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये अनन्तं वेदपारगे ॥

अब्राह्मणः राजभृतादिः ।

यदाह शातातपः ।

अब्राह्मणास्तु षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः ।
बहवो याज्या यस्य सबहुयाज्यः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य वा ॥

ग्रामस्य नगरस्य भृत इत्यन्वयः ।

अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् ।
नोपासीतद्विजः सन्ध्यां स षष्ठोऽब्रह्मणः स्मृतः ॥

ब्राह्मणब्रुवस्तु परस्तादपात्रेषु व्याख्यास्यते ।

मन्त्रपूर्वं च यद्दानमपात्राय प्रदीयते ।

दातुर्निकृत्य हस्तं तद्भोक्तुर्जिह्वां निकृन्तति ॥

इति शातातपवचनात् ।

उपरुन्धन्ति दातारं गौरश्वः काञ्चनं क्षितिः ।

अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः ॥

इति वसिष्ठवचनात् च ।

मन्त्रपूर्वं गवादिदानानामपात्रप्रतिपादननिषेधात् शूद्रादीनां तु पात्रत्व निरूपणमन्नदानविषयम् ।

"कृतान्नमितरेभ्यः" इति गौतमवचनात् "अन्नं सर्वत्र दातव्यम् इति वक्ष्यमाणत्वाच्च ।

[1]मनुः सान्तानिकं यक्ष्यमाणमध्वगं सर्ववेदसम् ।

गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ॥

नवैतान् स्नातकान् विद्यात् ब्राह्मणान् धर्मभिक्षुकान् ।

सान्तानिकः सन्तानप्रयोजनविवाहार्थी इत्यर्थः ।

अध्वगः अत्र धर्मार्थं प्रचलितः । सर्ववेदसः सर्वस्वदक्षिणायज्ञकृत् अध्ययनकाल आच्छादनाद्यर्थी । उपतापी व्याधिपीडितः । बोधायनः । सुब्राह्मण-श्रोत्रिय-वेदपारगेभ्यो-गुर्वर्थ-निवेशौ-षधार्थ-वृत्तिक्षीण - यक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यविभागो यथाशक्तिकार्यो बहिर्वेदि भिक्षमाणेषु कृतान्नमितरेषु

निवेशः विवाहः । वैश्वजितः सर्वस्वदक्षिणया कृतविश्वजिद्यागः । बहिर्वेदिग्रहणा देतेभ्यो बहिर्वेद्यपि धनमवश्यं देयम् ।

---

1. अ-११-श्लो-१ ।

अन्येभ्यस्तु अन्तर्वेद्येव धनदाननियमः । बहिर्वेदितु कृतान्नस्येव । [1]आपस्तम्बः । भिक्षणे निमित्त-माचार्यो विवाहो यज्ञो माता-पित्रोर्बुभूर्षार्हतश्च नियमादिलोपः ।

तत्र गुणान् समीक्ष्य यथा देयम् । इन्द्रियप्रीत्यर्थस्य तु भिक्षमाणमनिमित्तं न तथाऽऽद्रियेत । बुभूर्षा भरणेच्छा । अर्हतश्च नियमादिलोप इति । अधिकारिणा आवश्यककर्मविधिलोप-प्रसङ्गः ।

पद्मपुराणे ।

एकं वेदान्तगं विप्रं भोजयेत् श्रद्धयान्वितः ।
तस्य भोक्ता स वै कोटिविप्राणां नात्रसंशयः ॥

शातातपः ।

वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत् ।
न तु मूर्खं निराहारं षड्रात्रमुपवासितम् ॥

शातातपपाराशरौ ।

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् ।
भोजने चैव दाने च दहत्यासप्तमं कुलम् ॥

भविष्यत्पुराणे ।

यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते ।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥

---

1. भर्तुमिच्छा-बुभूर्षा । अर्हतः विद्याविमतः अग्निहोत्रादेः नियमे योग्यस्य अर्थस्य अभावेन लोपः ॥ (उज्ज्वला प्रश्नः २ पट-५ ख-१० ।)

तस्मानातिक्रमेत्प्राज्ञो ब्राह्मणान् प्रातिवेशिकान् ।
प्रातिवेशिकान् - स्वगृहाददूरवर्ति गृहान् ।
सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ।
भागिनेयं विशेषेण तथा बन्धून् गृहाधिपः ॥
नातिक्रमेन्नरस्त्वेतान् सुमूर्खानपि गोपते ।
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् ।

विट्पतिः - जामाता । "सुमुर्खानपिनातिक्रमेत्" इत्येतदन्नदान विषयम् हिरण्यादिदानेतु सन्निहितमूर्ख व्यतिक्रमे दोषाभावात् ।

तदुक्तं व्यास - वसिष्ठ - बोधायन - शातातप - पराशरैः ।

यस्य चैको गृहे मूर्खो दूरे चापि बहुश्रुतः ।
बहुश्रुताय दातव्य नास्ति मूर्खे व्यतिक्रमः ॥
ब्रह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥

व्यासः । मातापितृषु यद्दत्तं भ्रातृषु स्वसुतासु च ।
जायापत्योस्तु यद्दत्तं सोऽनिन्द्यः स्वर्गसङ्क्रमः ॥
पितुःशतगुणं दानं सहस्रं मातुरुच्यते ।
अनन्तं दुहितुर्दानं सोदर्ये दत्तमक्षयम् ॥

विष्णुधर्मोत्तरे ।

मातृष्वसा स्वसा चैव तथैव च पितृष्वसा ।
मातामही भागिनेयी भागिनेयस्तथैव च ॥

दौहित्रो विट्पतिश्चैव ह्येतेषु दत्तमक्षयम् ।
श्रीभ्रष्टे यत् तथा दत्तं तदप्यक्षयमुच्यते ॥
मातापित्रोर्गुरोर्मित्रे, विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता ॥
अदत्ताऽऽदानाज्जायन्ते परभाग्योपजीविनः ।

उपकारिणि - परोपकारपरे । विशिष्टाः गुणातिशय-शालिनः ।

## अथापात्रनिरूपणम्

तत्र मनुः[1] ।

गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥
ये व्यपेताः स्वकर्मभ्यः परभाग्योपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥
नानृग्ब्राह्मणो भवति न वणिग् न कुशीलवः ।
न शूद्रप्रेषणं कुर्वन्नस्तेनो न चिकित्सकः ।
अव्रता ह्यनधीयाना यत्र भैक्ष्यचराद्विजाः ॥
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि सः ।

वसिष्ठः ।

उदक्याऽन्वासते येषां ये च केचिदनग्नयः ।
कुलं वाऽश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥
अन्वासते । कर्मकाले समीप एव तिष्ठति ।

---

1. गोरक्षणजीविनः - वाणिज्यजीविनः - सूपकारादि, कारुकर्मजीविनः - नट कर्म नृत्यगीतादि जीविनः ।

यमः । अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् ॥

अपविद्धाग्निहोत्रस्य गुरोर्विप्रियकारिणः ।
द्रविणं नैव दातव्यं सततं पापकर्मणः ॥

न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः ।
शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ॥

तथा । राजधानी यथा शून्या यथा कूपश्च निर्जलः ।
यथा हुतमनग्नौ च तथा दत्तं द्विजेऽनृचे ॥

व्यास-शातातपौ ।

नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ॥

शौचहीनास्तु ये विप्रा न च यज्ञोपवीतिनः ।
हुतं दत्तं तपस्तेषां नश्यत्यत्र न संशयः ॥

ऊषरे वापितं बीजं यच्च भस्मनि हूयते ।
क्रियाहीनेषु यद्दत्तं त्रिषु नाशो विधीयते ॥

प्रस्तरे पतितं बीजं भिन्नभाण्डे च दोहनम् ।
भस्मन्यपि हुतं द्रव्यं तद्वद्दानमसाधुषु ॥

पूर्वत्र पात्रगुणकथने कृतेऽपि, पुनर्दोषवचनमेवंविधदोषभाग्-जन प्रतिषेधार्थम् ।

मनुः । पात्रभूतो हि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्य देयं न किञ्चन ॥

सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते यो न तं तस्करमर्चयेत् ॥

असत्सु - निषिद्धेषु द्यूतादिषु ।

यमः । यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ।

कूर्मपुराणे ।

न वार्यपि प्रयच्छेत नास्तिके हैतुकेऽपि वा ।
न पाषण्डिषु सर्वेषु नावेदविदि धर्मवित् ॥

नास्तिकः परलोकवासनाशून्यः । हैतुकः हेतुभिः परलोकं निराकरिष्णुः ।

मनुर्विष्णुश्च ।

[1]न वार्यपि प्रयच्छेत बैडालव्रतिके द्विजे ।
न बकव्रतिके पापे नावेदविदि धर्मवित् ॥

त्रिष्वप्येतेषु दत्तं हि विधिनोपार्जितं धनम् ।
दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥

अनर्थः प्रत्यवायः ।

यथा प्लवेनौपलेन निमज्जत्युदके तरन् ।
दातृप्रतिग्रहीतारौ तथैवाज्ञौ निमज्जतः ॥

---

1. बैडालव्रतः । स्वेनकृतं धर्मं ख्यापयति, परधनाभिलाषेण-वञ्चयति, छद्मनाचरति, परगुणासहिष्णुः । बकव्रतः स्वविनयख्यापनाय सततमध एव निरीक्षते परार्थखण्डनेन स्वार्थसाधनतत्परः । अध्या-४.श्लोक-१९२ ।

**यमः** । यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते ।
पापं व्रतेन प्रच्छाद्य बैडालं नाम तद्व्रतम् ॥

**विष्णुः** । अधोदृष्टिर्नैकृतिकः स्वार्थसाधन तत्परः ।
शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ॥

ये बकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥

**चतुर्विंशतिमते** ।

रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ।
अश्रोत्रियस्य विप्रस्य हस्तं दृष्ट्वा निराकृतेः ॥

**कात्यायनस्तु अन्यथाऽऽह** ।

यः स्वाध्याया-ग्निमालस्याद्देवादीन् नैभिरिष्टवान् ।
निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः ॥ इति ।

**महाभारते** ।

पङ्ग्व-न्ध-बधिरा मूका व्याधिनोपहृताश्च ये ।
भर्तव्यास्ते महाराज न तु देयः प्रतिग्रहः ॥

इति प्रतिगृहीतृनिरूपणम् ।

**अथ द्रव्याख्यं दानाङ्गमुच्यते—**

तत्र देयनिरूपणम् ।

**भविष्यत्पुराणे** ।

यद्यदिष्टं विशिष्टं च न्यायप्राप्तं च यद्भवेत् ।
तत् तद्गुणवते देयमित्येतद्दानलक्षणम् ॥

वह्निपुराणे ।

शुभोपात्तेन यत्किञ्चित्करोति लघुना नरः ।
अनन्तं फलमाप्नोति मुद्‌गलोपि यथा पुरा ॥

शुभोपात्तेन - न्यायोपार्जितेन । लघुना - स्वल्पेन द्रव्येणेति शेषः ।

देवीपुराणे ।

न्यायतो यानि प्राप्तानि शाकान्यपि नृपोत्तम ।
तानि देयानि देव्यास्तु कन्यका-योषितो सदा ॥
तद्‌भुक्तेषु च विप्रेषु अपरेषु च नित्यशः ।

विष्णुपुराणे ।

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्‌गुणवते देयं तदेवाक्षयमिच्छता ॥

महाभारते ।

विशेषतो महाराज तस्य न्यायार्जितस्य च ।
श्रद्धया विधिवत् पात्रे दत्तस्यान्तो न विद्यते ॥

गौतमः[1] ।

स्वामी-रिक्थ-क्रय-सम्विभाग-परिग्रहा-धिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः—इति ।

रिक्थम् - अप्रतिबन्धोदायः । सम्विभागः - सप्रतिबन्धोदायः । परिग्रहः--जलतृणकाष्ठादेरनन्यपूर्वस्य स्वीकारः ।

---

1 रिक्थम् पितुस्सकाशात् प्राप्तम् । संविभागः । भ्रातॄणां - परस्पर-विभागः क्रयः-मूल्येन स्वीकारः । मिताक्षरा । गौत - धर्मः प्रश्न २ अ १ सू ३९

अधिगमः - निध्यादेः प्राप्तिः । एषु निमित्तेषु स्वामी भवति । अधिकम् - असाधारणम् । निर्विष्टम् - कृष्यादिना - द्विजशुश्रूषादिना च यत् लब्धम् । निर्वेशो - भृतिभोगयोः इति स्मरणात् ।

मनुः[1] । सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

न्यायेन - उपचयार्थं - द्रव्यप्रयोगः, प्रयोगः । कर्मयोगः आर्त्विज्यम्, कृषिवाणिज्येच ॥

नारदः ।

धनमूलाः क्रियाः सर्वा यत्नस्तस्यार्जने मतः ।
रक्षणं वर्धनं भोग इति तस्य विधिः क्रमात् ॥

तत् पुनः त्रिविधं ज्ञेयं शुक्लं शाबलमेव च ।
कृष्णं च तस्य विज्ञेयो विभागः सप्तधा पुनः ॥

एकैकस्य शुक्लादेः सप्त सप्त भेदा भवन्ति इत्यर्थः ।

श्रुत - शौर्य तपः कन्या - याज्य - शिष्या - न्वयाऽगतम् ।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः ॥

आगत शब्दः श्रुतादिभिः प्रत्येकं सम्बध्यते । कन्यागतम् - आर्षविवाहे वराद्गृहीतम्· गोमिथुनादि । याज्यागतं - आर्त्विज्यादिलब्धम् । शिष्यागतम् - गुरुदक्षिणादि । अत्र च यथाधिकारं शुक्लत्वमवधेयम् । उदयः - फलं तदप्यस्य शुक्लमित्यर्थः ।

---

1 मनु - अध्या १० श्लो ११५

कुसीद-कृषि-वाणिज्य-शिल्प-शुल्का-नुवृत्तितः ।
कृतोपकारादाप्तं च शबलं समुदाहृतम् ॥

न्यायोपचयार्थं द्रव्यप्रयोगः कुसीदम् । शिल्पं कारुकादि कर्म । आकरादिभ्यो द्रव्योदयः शुल्कम् । अनुवृत्तिः सेवा ।

"पार्श्वक-द्यूत-चौर्या-र्ति-प्रतिरूपक-साहसैः ।
व्याजेनोपार्जितं यत् तत् सर्वेषां कृष्णमुच्यते ॥

पार्श्वकोपार्जितं उत्कोचादि लब्धम् । आर्त्युपार्जितम् परपीड़या लब्धम् । प्रतिरूपकं मणिसुवर्णादेः प्रतिरूपकरणम् । साहसं स्वप्राणात्ययाङ्गीकारेण पश्यतोहरत्वादिकम् । व्याजः दम्भेन तपः प्रभृति ।

तेन क्रयो विक्रयश्च दानं ग्रहणमेव च ।
विविधाश्च प्रवर्त्तन्ते क्रियाः सम्भोग एव च ॥

यथाविधेन द्रव्येण यत् किञ्चित् कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥

यथाविधेन शुक्लेन, कृष्णेन, शबलेन, वा दानादि कुरुते । तथाविधं फलमाप्नोति शुक्लेन शुद्धं दुःखरहितम् ।

शबलेनमिश्रम् । कृष्णेन असुखोदयम् ।

पद्मपुराणे ।

शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत् ।
शवलं मध्यमफलं कृष्णं हीनधनं फलम् ॥

ब्रह्मप्रोक्ते ।

शुक्लवित्तेन यो धर्मं प्रकुर्यात् श्रद्धयान्वितः ।
तीर्थं पात्रं समासाद्य देवत्वे तत् समश्नुते ॥
राजसेन च भावेन वित्तेन शबलेन च ।
दद्याद्दानमतिथिभ्यो मानुषत्वे तदश्नुते ॥
तमोवृत्तस्तु यो दद्यात् कृष्णवित्तेन मानवः ।
तिर्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः ॥

याज्ञवल्क्यः[1] ।

स्वकुटुम्बाविरोधेन देयं दारसुतादृते ।
नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥

अन्वये सन्ताने । प्रतिश्रुतं प्रतिज्ञातम् । कुटुम्बाविरोधस्तु व्याख्यातः - बृहस्पतिना ।

कुटुम्ब-भक्त-वसनाद्देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥

भक्तम् अन्नम् । वसनं वस्त्रम् । यावताद्रव्येण कुटुम्बस्य वस्त्रमन्नं सम्पद्यते तदतिरिक्तं देयम् ।

इतरत् तु न देयमित्यर्थः ।

शिवधर्मे ।

तस्मात् त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ॥

---

1. व्यवहाराध्याये - श्लो. १७५ दारसुतौ न देयौ अन्यस्मै प्रतिज्ञातं अन्यस्मै न देयम् ।

अशेषवित्तस्य भागपञ्चकं परिकल्प्य भागत्रयं जीवनाय संरक्ष्य भागद्वयं धर्माय कल्पयेदित्यर्थः ।

कुटुम्बाविरोधेन देयमित्युक्तम् । तस्यापवादमाह ।

व्यासः । कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने ।

दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥

यत्यतिथ्यादि विषयमेतत् ।

कात्यायनः ।

स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धकम् ।

वैवाहिकऋमायाते सर्वदानं न विद्यते ॥

बन्धकः आधिः तद्बन्धाचारेण आधिरूपेणैव देयम् ।

यद्विवाहलब्धं तत् तस्यां भार्यायां सत्यां सर्वमदेयम् ।

यच्च पितामहादिक्रमायातं तत् पुत्रे सति न देयम् ।

यमः । यच्च वाचा प्रतिज्ञातं कर्मणा नोपपादितम् ।

तद्धमर्णसंयुक्तमिह लोके परत्र च ॥

"ऋणसंयुक्तम्" ऋणासमर्पणजन्यदोषसंयुक्तमित्यर्थः ॥

सप्ताजातान् नरो हन्याद्वर्तमानांस्तु सप्त च ।

अतिक्रान्तान् सप्त हन्यादप्रयच्छन् प्रतिश्रुतम् ॥

प्रतिश्रुताप्रदानेन दत्तस्य हरणेन च ।

जन्मप्रभृति यत् पुण्यं तत् सर्वं संप्रणश्यति ॥

महाभारते ।

ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवर्तिनम् ।

पश्चान्नास्तीति यो ब्रूयात् तं विद्यात् ब्रह्मघातुकम् ॥

गौतमः[1] प्रतिश्रुत्याप्यधर्मसंयुक्ते न दद्यात् ।

कात्यायनः ।

प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वस्वं ते प्रदास्यामीत्युक्तोपि न तथा भवेत् ॥

वह्निपुराणे ।

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
दाताऽन्नस्य च दुर्भिक्षे सुभिक्षे हेमवस्त्रदः ॥

अथादेयनिरूपणम्—

देवलः - अन्यायाधिगतां दत्वा सकलां पृथिवीमपि ।
श्रद्धावर्जमपात्राय न काञ्चित् भूतिमाप्नुयात् ॥

दक्षः - सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥

आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥

सामान्यं अनेकस्वामिकम् । याचितं संव्यवहारार्थं याचित्वाऽऽनीतम् वस्त्रालङ्कारादि । गृहस्वामिनेऽदर्शयित्वा तत्परोक्षमेव गृहस्वामिनेऽर्पणीयमिति गृहजनहस्ते स्थापितं द्रव्यं न्यासः । आधिः प्रसिद्धा । दाराः कलत्रम् । तद्धनम् दारधनम् ।

तच्च व्याख्यातं मनुना ।

अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृ-मातृ-पितृ-प्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

---

1. प्रश्नः १. अ-५. सू २५ ।

अध्यग्नि अग्निसमक्षं यत् स्त्रियै दत्तम्। अध्यावाहनिकं[1] विवाहकाले पित्रादिदत्तम्। प्रीतिकर्मणि स्त्रीपुंस सम्बन्धेन भर्त्रार्पितम्। विवाहोत्तरकालेऽपि भ्रात्रादिभ्यः प्राप्तम्।

बृहस्पतिः -

विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके।
सर्वं सङ्कल्पितं ग्राह्यं न दोषः परिकीर्तितः॥

विष्णुधर्मोत्तरे।

ग्राह्यं प्राणप्रदानं तु चाण्डालात् पुल्कसादपि।
जीवन् सर्वमवाप्नोति जीवन् धर्मं करोति च॥
शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः।

स्कन्दपुराणे।

अजिनं मृतशय्यां च शृङ्गीं चोभयतोमुखीम्।
कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत्॥

भिक्षाग्रहणमधिकृत्य मनुः।

चिकित्सककृतघ्नानां शल्यकर्तुश्च वार्धुषेः।
षण्डस्य कुलटायाश्च उद्यतामपि वर्जयेत्॥

भिक्षामिति शेषः। चिकित्सकोऽत्र कुवैद्यः। षण्डः क्लीबः। कुलटा-पुंश्चली।

---

1. मनु-अध्या. २. श्लो. १९४. पितृगृहात् भर्तृगृहं नीयमानया लब्धं अध्यावाहनिकम्। कुल्लूकभट्टः।

तथा । राजप्रतिग्रहो घोरो रौद्रः पापो भयानकः ।
नरके यातना घोरां कः सोढुं शक्तिमान् भवेत् ॥

मनुः[1] । न यज्ञार्थं धनं शूद्रात् भिक्षुर्भिक्षेत कर्हिचित् ।
भिक्षित्वा यजमानो हि चण्डालः प्रेत्य जायते ॥

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।
सर्वे ते ब्राह्मणा निन्द्या ब्रह्मवादिषु गर्हिताः ॥

तथा । हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम् ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत् ।

अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः ।
अम्भस्यश्मप्लवेनेव दात्रा सह निमज्जति ॥

तस्मादविद्वान् बिभियाद्यस्मात्कस्मात् प्रतिग्रहात् ।
स्वल्पकेनाप्यविद्वान् हि पङ्के गौरिव सीदति ॥

याज्ञवल्क्यः[2] ।

विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधोनयत्यात्मानमेव च ॥

ततश्च विद्यातपोरहितेन अवसीदताऽपि बहुहिरण्यादिव्यतिरेकेण कुटुम्बभरणमात्रौपयिकाल्पद्रव्यप्रतिग्रहः कर्तव्यो, न तु तत्राति प्रवृत्तिरिति गम्यते ।

---

1. अध्या-११-श्लो-२४ शूद्रात् याचित्वा यज्ञंकुर्वाणः मृतः चण्डालो भवति कुल्लूकभट्टः ।

2. आचार-श्लो. २०२ ।

याज्ञवल्क्यः[1] ।

प्रतिग्रहसमर्थोऽपि नाऽऽदत्ते यः प्रतिग्रहम् ।
ये लोका दानशीलानां स तानाप्नोति शाश्वतान् ॥

॥ इति द्रव्यनिरूपणम् ॥

अथ कालाख्यं दानाङ्गमभिधीयते ।

तत्र पुण्यकालस्तावत् ।

देवीपुराणे—

नित्योविभुः स्थितः कालो ह्यवस्था तस्य हेतुजा ।
निमित्तादिविशेषैः स लोके पुण्यफलप्रदः ॥

मार्कण्डेयपुराणे—

निमेषैः दशभिः काष्ठा साष्टाभिश्च कला पुनः ।
त्रिंशत्काष्ठा कलाभिश्च त्रिंशद्भिः स्यान्मुहूर्तकम् ॥
अहोरात्रं मुहूर्तास्तु नृणां त्रिंशत् तु वै स्मृतम् ।
त्रिंशता तैरहोरात्रैः पक्षौ द्वौ मास उच्यते ।
तैः षड्भिरयनं वर्षं द्वे ते स्याद्दक्षिणोत्तरे ।
तद्देवानामहोरात्रं दिनं तत्रोत्तरायणम् ॥
"साष्टाभिर्दशभिः" अष्टादशभिरित्यर्थः ।

आह दक्षः ।

देवकार्याणि पूर्वाह्णे मनुष्याणां च मध्यमे ।
पितृणामपराह्णे च कार्याणीति विनिश्चयः ॥
अत्र तिथिकालः प्रथममुच्यते ।

---

1. आचा॰श्लो–२१३ ।

भविष्यत्पुराणे ।

तिथीनां प्रवरा यस्मात् ब्रह्मणा समुदाहृता ।
प्रतिपादिता पदे पूर्वे प्रतिपत् तेन चोच्यते ।
स्नानं दानं शतगुणं कार्तिके या तिथिर्भवेत् ॥

स्कन्दपुराणे ।

आश्विने मासि सम्प्राप्ते द्वितीया शुक्लपक्षजा ।
दानं प्रदत्तं यत् तस्यामनन्तफलमुच्यते ॥
वैशाखमासे या पुण्या तृतीया शुक्लपक्षजा ।
अनन्तफलदा दातुः स्नानदानादि कर्मसु ॥

विष्णुपुराणे ।

शिवा शान्ता सुखा राजँश्चतुर्थी त्रिविधा स्मृता ।
मासि भाद्रपदे शुक्ला शिवलोकेषु पूजिता ॥
तस्यां स्नानं तथा दानमुपवासो जपस्तथा ।
भवेत्सहस्रगुणितं प्रसादा[1]द्दन्तिनो नृप ॥
माघेमासि तथा शुक्ला या चतुर्थी महीपते ।
सा शान्ता शान्तिदा नित्यं शान्तिं कुर्यात् सदैव हि ॥
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ।
यदाशुक्लचतुर्थी तु वारो भौमस्य वै भवेत् ॥
तदा सा सुखदा ज्ञेया सुखानामेति कीर्तिता ।
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ॥

स्कन्दपुराणे ।

शुक्ला मार्गशिरे मासि श्रावणे या च पञ्चमी ।
स्नानदाने बहुफला नागलोकप्रदायिनी ॥

---

1. गणपतेः ।

भविष्यत्पुराणे ।

येयं भाद्रपदे मासि षष्ठी च भरतर्षभ ।
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ॥

तथा । शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद्यदि ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥

शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम् ।
यदा च स्यात् तदा ज्ञेया जया नामेति सप्तमी ॥

स्नानदानादिकं तस्यां भवेत् शतगुणं विभो ।
या मार्गशीर्षमासस्य शुक्लपक्षे तु सप्तमी ॥
'पञ्चतारक'मिति रोहिण्याश्लेषामघाहस्ताः ।

भविष्यत्पुराणे ।

पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तदा तु सा महापुण्या महारुद्रेति कीर्तिता ॥

तस्यां स्नानं महादानं तर्पणं विप्रभोजनम् ।
मत्प्रीतये कृतं देवि शतसाहस्रिकं भवेत् ॥

महाभारते ।

अष्टकासु च यद्दत्तं तदनन्तमुदाहृतम् ।

आश्वलायनः - हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति ।

तथा शतपथश्रुतिः - द्वादशपौर्णमास्यो द्वादशाष्टका द्वादशामावास्या इति । द्वादशापि कृष्णाष्टम्य इत्यर्थः ।

**देवीपुराणे ।**

आश्विनस्य तु मासस्य नवमी शुक्लपक्षजा ।
जायते कोटिगुणितं दानं तस्यां नराधिप ॥

**गरुडपुराणे ।**

ज्येष्ठस्य शुक्लदशमी सम्वत्सरमुखी स्मृता ।
तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ॥

एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम ।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी ॥

दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्दनम् ।
होमो वा क्रियते तस्यामक्षयं कथितं फलम् ॥

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासे महाफला ॥
फलं दत्तहुतानां च तस्यां लक्षगुणं भवेत् ।

**विष्णुधर्मोत्तरे** - भाग्यर्क्षसंयुता चैत्रे द्वादशी स्यान्महाफला ।
भाग्यर्क्षं - पूर्वफल्गुनी ।
हस्तयुक्ता तु वैशाखे ज्येष्ठे तु स्वातिसंयुता ।
ज्येष्ठायां च तथाऽऽषाढे मूलोपेता च वैष्णवे ।
वैष्णवे - श्रावणे मासि ।
तथा भाद्रपदे मासि श्रवणेन तु संयुता ।
आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता ॥

आजर्क्षम् - पूर्वभाद्रपदाः ।
कार्तिके रेवती युक्ता सौम्ये कृत्तिकया तथा ।

सौम्यः - मार्गशीर्षः ।

पौषे मृगशिरोपेता माघे चादित्यसंयुता ॥

आदित्यः - पुनर्वसुः ।

फाल्गुने पुष्यसहिता द्वादशी पावनी परा ।

नक्षत्रयुक्तास्वेतासु स्नानं दानमुपोषितम् ॥

सकृत्कृतं मनुष्याणामक्षय्यफलदायकम् ।

स्कन्दपुराणे ।

यस्तु चैत्रत्रयोदश्यां स्नानं दानं समाचरेत् ।

फलं शतगुणं तस्य कर्मणो लभते नरः ॥

ज्योतिश्शास्त्रे ।

कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः [1]करे रविः ।

यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥

चैत्रे चतुर्दशी शुक्ला श्रावणप्रोष्ठपादयोः ।

माघस्य या कृष्णपक्षे दाने बहुफला हि सा ॥

विष्णुधर्मोत्तरे ।

वैशाखी कार्त्तिकी माघी पौर्णिमा तु महाफला ।

पौर्णमासीषु सर्वासु मासर्क्षसहितासु च ॥

स्नानानामिह दानानां फलं दशगुणं भवेत् ।

यस्यां पूर्णेन्दुना योगं याति जीवो महाबलः ॥

पौर्णमासी तु सा ज्ञेया महापूर्वा द्विजोत्तम ।

स्नानं दानं तथा जाप्यमक्षय्यं तत् तदा स्मृतम् ॥

---

1. करे - कन्यामासि ।

ब्रह्मपुराणे

आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥

यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित् ।
तिथिः साऽपि महापुण्या ऋषिभिः परिकीर्तिता ॥

आग्नेयमृक्षं - कृत्तिका । याम्यमृक्षं - भरणी ।

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥

प्राजापत्यमृक्षं - रोहिणी ।

व्यासः । अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण विषुवत्सदृशं फलम् ॥

शङ्खोऽपि ।

अमावास्या तु सोमेन सप्तमी भानुना सह ।
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥
चतस्रस्तिथयस्त्वेता स्तुल्याः स्युर्ग्रहणादिभिः ।
सर्वमक्षयमत्रोक्तं स्नानदानजपादिकम् ॥

विष्णुपुराणे ।

अमावास्या यदा मैत्रविशाखा ऋक्षयोगिनी ।
श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्ट वार्षिकीम् ॥

अमावास्या यदा पुष्ये रौद्रर्क्षे वा पुनर्वसौ ।
द्वादशाब्दीं तथा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥

रौद्रर्क्षम् - आर्द्रा ।

वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छता ।
वारुणे वाऽऽप्यदैवत्ये देवानामपि दुर्लभा ॥

वासवं - धनिष्ठा । अजैकपादं - पूर्वभाद्रपदा । वारुणं - शततारका । आप्यम् - पूर्वाषाढा ।

अथ युगादिप्रभृतयः । तत्र स्कन्दपुराणे ।

नवम्यां शुक्लपक्षस्य कार्तिके निरगात् कृतम् ।
त्रेता सिततृतीयायां वैशाखे समपद्यत ॥
दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम् ।
कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः ॥
युगादयः स्मृता ह्येते दत्तस्याक्षयकारकाः ।

ब्रह्मपुराणे ।

युगारम्भास्तु तिथयो युगाद्यास्तेन कीर्तिताः ।
फलं दत्तहुतानां च तास्वनन्तं प्रकीर्तितम् ॥

तथा । एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतं चाक्षयमाशु विद्यात् ।
युगे युगे वर्षशतेन यत् तपो युगादिकाले दिवसेन तद्भवेत् ॥

तथा । सूर्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य च ।
तथा वृश्चिकसङ्क्रान्त्यामन्तस्त्रेतायुगस्य च ॥
ज्ञेयस्तु वृषसङ्क्रान्त्यां द्वापरान्तस्तु संख्यया ।
तथा च कुम्भसङ्क्रान्त्यामन्तः कलियुगस्य च ॥

मत्स्यपुराणे ।

आश्वयुक्शुक्लनवमी द्वादशी कार्तिकस्य तु ।
चैत्रस्य तु तृतीया या तथा भाद्रपदस्य तु ॥

फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ।
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढस्य पौर्णिमा ॥
आषाढस्य तु दशमी माघमासस्य सप्तमी ।
कार्तिकी फाल्गुली चैत्री ज्यैष्ठी पञ्चदशी तथा ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारकाः ।
स्नानं दानं जपोहोमः स्वाध्यायः पितृतर्पणम् ॥
सर्वमेवाक्षयं विद्यात् कृतं मन्वन्तरादिषु ।

अत्रामावास्याष्टमी व्यतिरेकेण सर्वाः शुक्ला एव । पुराणान्तरेण तु श्रावणस्यामावास्या भाद्रपदस्य कृष्णाष्टमी मन्वन्तरादिरिति प्रतिपादितम् ।

अथ व्यतीपातादिकालः ।

याज्ञवल्क्यः ।

शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ॥

ज्योतिःशास्त्रे तु रविचन्द्रयोः क्रान्तिसाम्ये सूक्ष्मो "वैधृतव्यतीपातौ" दर्शितौ ।

तदाहगालवः ।

चन्द्रार्कयोर्नयनवीक्षणजातमूर्तिः ।
कालानलद्युतिनिभः पुरुषोऽतिरौद्रः ।
अस्त्रोद्यतो भुवि पतंश्च निरीक्षमाणः ।
कं घातयेऽहमिति च व्यतिपातयोगः ॥

अथोपरागकालः । पद्मपुराणे ।

चन्द्रस्य यदि वा भानो राहुणा सह सङ्गमः ।
उपराग इति ख्यातस्तत्रानन्तफलं स्मृतम् ॥

इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं भवेत् ।
गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटीरवेर्दश ॥

"रवेर्दशगुणमिति" लक्षगुणाद्दशगुणमित्यर्थः । एवमुत्तरत्रापि ।

तथा । रविवारे रवेर्ग्रासः सोमे सोमग्रहः तथा ।
चूडामणिरिति ख्यातस्तत्रानन्तं फलं स्मृतम् ॥

भरद्वाजः ।

चन्द्रसूर्योपरागेच यत् कर्तव्यं तदुच्यते ।
सर्वं हेममयं दानं सर्वे ब्रह्मसमाद्विजाः ॥
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।

ऋष्यशृङ्गः ।

राहुग्रस्ते यथा सूर्ये यस्तु श्राद्धं समाचरेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

तथा च वसिष्ठः ।

नाडयः षोडश पूर्वण सङ्क्रान्तेस्तु परेण च ।
राहोर्दर्शनमात्रेण पुण्यकालः, प्रकीर्तितः ॥

जाबालिरपि ।

सङ्क्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्योपरागेतु यावद्दर्शनगोचरः ॥

अथ सङ्क्रान्तिकालः । आह शातातपः ।

सङ्क्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥

रविसङ्क्रमणे पुण्ये न स्नायाद्यो हि मानवः ।
सप्तजन्मान्तरं रोगी दुःखभागी सदा भवेत् ॥

गालवः ।

मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ ।
षडशीतिमुखेऽतीते तथोदगयने तु भूरिफलम् ॥

एतच्च फलाधिक्यप्रतिपादनार्थमुक्तम् ।

स्मृत्यन्तरे ।

अह्नि सङ्क्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् ।
रात्रौ सङ्क्रमणे पुण्यं दिनार्धं स्नानदानयोः ॥

अर्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं सङ्क्रमणे चोर्ध्वमुदयात् प्रहरद्वयम् ॥

पूर्णे चेदर्धरात्रे तु यदा सङ्क्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥

अयमर्थः । पूर्वरात्रसङ्क्रमणे पूर्वस्याह्नः उत्तरार्धे दानादिक्रिया । अपररात्रसङ्क्रमे तु उत्तरदिवसस्य पूर्वाह्णे दानादिक्रिया । अयनरात्रसङ्क्रमे तु उत्तरदिवसस्य पूर्वाह्णे दानादिक्रिया । मध्यरात्रसङ्क्रमे तु दिनद्वयं पुण्यम् । रात्रौ स्नानदानादिप्रतिषेधात् । यत्तु संश्रूयते । सङ्क्रान्त्यादिषु रात्रावपि स्नान-

दानादिकं कुर्यादिति । तद्दक्षिणोत्तरायणविषयम् । अत एवोक्तं "मुक्त्वा मकरकर्कटाविति" । ततश्च मकरकर्कटयोः रात्रावपि स्नानदानानुग्रहे यायाः सन्निहिता नाड्यः इत्यवधेयम् । रात्रौ स्नानदानादि प्रतिषेधस्तु सङ्क्रान्त्यन्तरे व्यतिष्ठत एवेति ।

अथ प्रकीर्णकालाः ।

आह विष्णुः ।

अमावास्या व्यतीपातो ग्रहणं चन्द्रसूर्ययोः ।
मन्वादयो युगादिश्च सङ्क्रान्तिर्वैधृतिस्तथा ॥
दिनक्षयं दिनच्छिद्रमवमं च तथा परम् ।
द्वेऽयने विषुवद्युग्मं षडशीतिमुखं तथा ॥
चतस्रोविष्णुपद्यश्च पुत्रजन्मादि चापरम् ।

दिनक्षयमुक्तं पद्मपुराणे ।

द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।

वसिष्ठोऽप्याह ।

एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा ।
तदा दिनक्षयः प्रोक्तः तत्र साहस्रिकं फलम् ॥

दिनच्छिद्रलक्षणमाह भृगुः ।

*तिथ्यर्धं तिथियोगर्क्षच्छेदादौ शशिपर्वणः ।*
सदृशो दिवसच्छिद्रसमाख्यो प्राह भार्गवः ॥

अयमर्थः । तिथ्यर्धं करणम् । करण-तिथि-योग-नक्षत्राणामन्ते आदौ च पर्वकालः सोमग्रहणतुल्यः । स च दिनच्छिद्रसंज्ञ इति ।

**अवमलक्षणमाह विष्णुः ।**

तिथित्रयं स्पृशत्येको वारः स्यादवमं हि तत् ।
त्रिवारस्पृक् तिथिर्यत्र त्रिदिनस्पृक् तदुच्यते ॥

अत्र दिनक्षयावमयोरियान् भेदः । यत्र तिथिद्वयावसाने वारावसानं स दिनक्षयः । यत्र तिथिद्वयावसानेऽपि वारानुवृत्तिः सोऽवमइति ।

अथ विषिद्धकालाः । तत्र शङ्खलिखितौ ।

आहारं मैथुनं निद्रां सन्ध्याकाले तु वर्जयेत् ।
कर्मचाध्ययनं चैव तथा दानप्रतिग्रहौ ॥

**स्कन्दपुराणे ।**

रात्रौ दानं न कर्तव्यं कदाचिदपि केनचित् ।
हरन्ति राक्षसा यस्मात् तस्माद्दातुर्भयावहम् ॥

**आह ज्योतिः पराशरः ।**

अग्न्याधेयं प्रतिष्ठां च यज्ञदानाद्यभिग्रहान् ।
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ॥

वापी कूप तटाकादि प्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन् न तत्फलमवाप्नुयात् ॥

बाले वा यदिवा वृद्धे शुक्रे वाऽस्तमुपागते ।
मलमास इवैतानि वर्जयेद्यत्नतः सदा ॥

मलमासः अधिकमासः ।

पराशरः ।

उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ पराः कार्या वर्जयित्वातु पैतृकम् ॥

तथा ज्योतिः शास्त्रे ।

घटकन्यागते सूर्ये वृश्चिके वाऽथ धन्विनि ।
मकरे वाऽथ वा कुम्भे नाधिमासो विधीयते ॥

माण्डव्यः ।

गर्भे वार्द्धुषिके प्रेते भूते नित्ये तु मासिके ।
प्रथमे चाब्दिके चैव नाधिमासो विधीयते ॥
अथ निषिद्धस्यापि धर्मविशेषेण पुण्यकालत्वमभिधीयते ।

देवलः। राहुदर्शनसङ्क्रान्ति विवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्युः निशि काम्यव्रतेषु च ।

वृद्धवसिष्ठः ।

गहणोद्वाहसङ्क्रान्ति यात्रादिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥
अथ निमित्तानुरोधेन सदापुण्यकालाः ।

तथा च मनुः ।

न कालनियमो दृष्टो दीयमाने प्रतिश्रये ।
तदैव दानमस्योक्तं यदा पान्थसमागमः ॥

न हि कालं प्रतीक्षेत जलं दातुं तृषान्विते ।
अन्नोदकं सदादेयमित्याह भगवान् मनुः ॥

स्कन्दपुराणे ।

अर्धप्रसूतां गां दद्यात् कालादि न विचारयन् ।
कालः स एव ग्रहणे यदा सा द्विमुखी तु गौः ॥

व्यासः । आसन्नमृत्युना देया गौःसवत्सा तु पूर्ववत् ।
तदभावे तु गौरेव नरकोद्धारणाय वै ॥
तदा यदि न शक्नोति दातुं वैतरणीं तु गाम् ।
शक्तोऽन्योऽरुक् तदा दत्वा श्रेयो दद्यान्मृतस्य च ॥

मत्स्यपुराणे ।

यदा वा जायते वित्तं चित्तं श्रद्धासमन्वितम् ।
तदैव दानकालः स्याद्यतोऽनित्यं हि जीवितम् ॥

इति कालनिरूपणम् ।

अथ देशाख्यं दानाङ्गमुपवर्ण्यते ।

तत्र देवीपुराणे ।

सर्वे शिवाश्रमाः पुण्याः सर्वा नद्यः शुभप्रदाः ।
दानस्नानोपवासादिफलदाः सततं नृणाम् ॥

आह विष्णुः ।

चातुर्वर्ण्यं व्यवस्थानं यस्मिन् देशे न विद्यते ।
स म्लेच्छदेशो विज्ञेय आर्यदेशस्ततः परः ॥

मार्कण्डेयपुराणे ।

सह्यस्य चोत्तरो यस्तु यत्र गोदावरी नदी ।
पृथिव्यामपि कृत्स्नायां स प्रदेशोऽतिपावनः ॥

ब्रह्मप्रोक्ते ।

नदीतीरे गवां गोष्ठे ब्राह्मणानां च वेश्मनि ।
दत्तं शतगुणं प्राहुर्लक्षमादित्य सन्निधौ ॥
शिवस्यविष्णोर्वह्नेश्च सन्निधौ दत्तमक्षयम् ।

इति देशनिरूपणम् ।

अथ श्रद्धाख्यं दानाङ्गमुच्यते ।

स्कन्दपुराणे ।

दानं दद्यात् प्रयत्नेन श्रद्धापूतमन्द्रितः ।
श्रद्धाकृतं स्वल्पमपि दानमानन्त्यमश्नुते ॥
अश्रद्धयापि यद्दत्तं सर्वस्वमपि सत्तम ।
न तत् फलाय भवति तस्माच्छ्रद्धां समाश्रयेत् ॥

महाभारते ।

श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ।
विष्किञ्चनास्तु मुनयः श्रद्धावन्तो दिवङ्गताः ॥
धर्मार्थकाममोक्षाणां श्रद्धा परमकारणम् ।
पुंसामश्रद्दधानानां न धर्मो नापि तत्फलम् ॥

वेदव्यासः ।

श्रद्धा वै सात्विकी देवी सूर्यस्य दुहिता नृप ।
सवित्री प्रसवित्री च जीवविश्वासिनी तथा ॥
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च भारत ।

स्कन्दपुराणे ।

श्रद्धा मातेव जननी ज्ञानस्य सुकृतस्य च ।
तस्माच्छ्रद्धां समुत्पाद्य ज्ञानं सुकृतमर्जयेत् ॥

बृहस्पतिः ।

मन्त्राऽऽज्यदोषाद्धोमे तु तपसीन्द्रिय दोषतः ।
न्यूनता स्यान्न दाने तु श्रद्धा युक्ते भवेत् क्वचित् ॥

एतच्च देशनिरूपणं पूर्वं व्रतखण्डादावेव प्रपञ्चितम् । इह तु पात्रादिदानाङ्गनिरूपणप्रतिज्ञानिर्वहणार्थं दिङ्मात्रमेव प्रदर्शितम् । न चात्र भविष्यत्पुराणमतेन दानाङ्गपञ्चके निरूप्यमाणे दानाङ्गभूतस्यापि दातुः कथं पृथगनुपादानमिति शङ्कनीयं, दानस्य दातृव्यतिरेकेणानुपपत्तेः तेनैव तदाक्षेपात् । एवं तर्हि देशकालादेरप्यनुपादानं स्यात् ।

अथ सामान्येनैव तदाक्षेपेऽपि ब्रह्मावर्तादिविशेषलाभार्थं तन्निरूपणमिति । दातापि तर्हि शुचित्वादिविशेषलाभार्थं निरूपणीयः स्यात् । उच्यते ।

तत्तद्विधायकवाक्यगताख्यातप्रत्ययोपात्तत्वादेव तदनिरूपणम् । नत्वाक्षेपात् । शुचित्वादिविशेषलाभस्तु वाक्यान्तरात् इति । कर्त्रनभिधानपक्षे तु प्रत्ययोपात्त भावनयैवासाधारण्येन तदाक्षेपात् न देशादिसाम्यम् ; एवमादिक्लेशपर्यालोचनया षडङ्गं दानमिति वदता देवलेन तु निरूप्यत एव ।

तथा हि । दाता प्रतिग्रहीता च श्रद्धा देयं च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥ इति ।

तल्लक्षणं तु प्रागभिहितमिति तु न पुनराद्रियामहे । ननु श्रद्धादिवदितिकर्तव्यतापि दानाङ्गम् इति, अतःप्रतिपादनीयैव ।

यदाह याज्ञवल्क्यः[1] ।

देशेकाल उपायेन द्रव्यं श्रद्धा समन्वितम् ।
पात्रे प्रदीयते यत् तत् सकलं धर्मलक्षणम् ॥ इति ॥

उपायः – इतिकर्तव्यता । इतिकर्तव्यताविशेषस्तावत् तत्र तत्र दानविशेषेष्वेव प्रतिपादयिष्यते तेषामिह प्रतिपादयितुमशक्य त्वात् । सामान्येनेतिकर्तव्यतापुनरवश्यं वक्तव्येति तदर्थमिदं प्रकरणमारभ्यते । इति श्रद्धानिरूपणम् ॥

अथ दानसामान्यविधिरुच्यते । तत्र दातृधर्माः ।

भविष्यत्पुराणे ।

सम्यक् संसाधनं कर्म कर्तव्यमधिकारिणा ।
निष्कामेन महावीर काम्यं कामान्वितेन च ॥

आचारयुक्तः श्रद्धावान् प्राज्ञो योऽध्यात्मवित्तमः ।
कर्मणां फलमाप्नोति न्यायार्जित धनश्च यः ॥

सम्यक् प्रथमकल्पादिना संसाधनं यथा विहितसाधनम् । अधिकारिणा-अर्थिना, समर्थेन, विदुषा च । अध्यात्मवित्तमः परलोकफलभागिन्यात्मनि दृढप्रत्ययवान् । न्यायार्जितधनः स्ववृत्त्याऽऽर्जितधनः ।

---

1. धर्मस्य कारकहेतूनाह-देशेकालइति । उपायः शास्त्रोक्तेतिकर्तव्यताकलापः, द्रव्यं-प्रतिग्रहादि लब्धं गवादि—श्रद्धा आस्तिक्यबुद्धिः, पात्रं नविद्ययाकेवलया. इति लक्षणयुक्तम् । प्रदीयते—यथानप्रत्यावर्तते, तथा परस्वत्वापादनं - एतत् धर्मस्य उत्पादकम् । सकलं - अन्यदपि - शास्त्रोक्तं जातिगुणहोमयागादि । मिता —र: याज्ञ तिः-आचा श्लो-६ ।

आपस्तम्बः[1] ।

प्रयोजयिताऽनुमन्ता कर्तेतिस्वर्गनरकफलेषु भागिनो यो भूय आरभते तस्मिन् फलविशेषः ॥

याज्ञवल्क्यः ।

विधिदृष्टं तु यत्कर्म करोत्यविधिना तु यः ।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥

मनुः[2] । प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम् ॥
साम्परायिकं पारलौकिकम् ।

योगियाज्ञवल्क्यः ।

श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः ।
सुविशुद्धेन भावेन तदानन्त्याय कल्पते ॥

विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
तद्धरन्त्यसुरास्तस्य मूढस्य ह्यकृतात्मनः ॥

रामायणे ।

नावज्ञया प्रदातव्यं किञ्चिद्वा केन चित् क्वचित् ।
अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत् ॥

---

1. इदमित्थं कुर्विति उपदेष्टा, यस्यानुमतिमन्तरेण अर्थो न निवर्तते । सोऽनुमन्ता साक्षात् क्रिया निष्पादकः कर्ता-यो भूयः, अर्थनिर्वर्तनपर्यन्तं, आरभते ।

2. यो मुख्यकल्पानुष्ठानसंपन्नःसन् आपत्कल्पविहितेन प्रतिनिधिना अनुतिष्ठति तस्य अभ्युदयकरं प्रत्यवाय परिहारश्च फलं न भवति । कु. भट्टः

शातातपः ।

अभिगम्यतु यद्दानं यच्च दानमयाचितम् ।
विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते ॥

प्रच्छन्नानि च दानानि ज्ञानं च निरहंकृतम् ।
तपांसि च सुतप्तानि तेषां फलमनन्तकम् ॥

ब्रह्मप्रोक्ते ।

गुप्ताध्यायी गुप्तदाता गुप्तपूजाग्निसत्क्रियः ।
पूज्यते सर्वलोकेषु सर्वदेवैः शतक्रतुः ॥

व्यासः । स्वयं नीत्वातु यद्दानं भक्त्या पात्रायदीयते ।
तत् सहस्रगुणं भूत्वा दातारमुपतिष्ठते ॥

बृहस्पतिः ।

कृते प्रदीयते गत्वा त्रेतायां दीयते गृहे ।
द्वापरे च प्रार्थयते कलौ चानुगमान्विते ॥

प्रतिगृहीतृगृहं गत्वा यद्दीयते तत् कृतेयुगे दत्तं भवति । प्रतिगृहीतारं स्वगृहमाहूय यद्दीयते तत् त्रेतायुगे दत्तं भवतीत्यर्थः । एवमुत्तरत्रापि ।

वह्निपुराणे ।

तमोवृतस्तु यो दद्यात् भयात् क्रोधात्तथैव च ।
नृप, दानं तु तत्सर्वं भुङ्क्ते गर्भस्थ एव च ॥

ईर्षामन्युमनाश्चैव दम्भार्थं चार्थकारणात् ।
यो ददाति द्विजातिभ्यः स बालत्वे तदश्नुते ॥

देशे काले च पात्रे च यो ददाति द्विजातिषु ।
परितुष्टेन मनसा यौवने तु तदश्नुते ॥
वैश्वदेवविहीनं च सन्ध्योपासन वर्जितम् ।
यद्दानं दीयते तत्तु वृद्धकाले समश्नुते ॥

**आह मनुः ।**

[1]न विस्मयेत तपसा वदेदिष्ट्वा न चानृतम् ।
नार्तो विप्रवदेद्विप्रान् न दत्वा परिकीर्तयेत् ॥
यज्ञोऽनृतेन क्षरति तपःक्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं तु परिकीर्तनात् ॥

**यमः ।** आशां कृत्वा ह्यदातारं दानकाले निषेधकम् ।
दत्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातुकम् ॥

**शाक्यायनः ।**

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादस्तु जान्वोर्वा जङ्घयोस्तथा ।
कृतावसक्थिको यश्च प्रौढपादः स उच्यते ॥

**वसिष्ठः ।**

यज्जले शुष्कवस्त्रेण स्थले चौवार्द्रवाससा ।
जपो होमस्तथा दानं तत् सर्वं निष्फलं भवेत् ।

---

1. चान्द्रायणादि तपसा कृतेन कथं ममेदं दुष्करमनुष्ठितं इति विस्मयं न कुर्यात् । यागं कृत्वा नासत्यं वदेत् । पुरुषार्थतया अनृत वचन निषधे कृतेपि क्रत्वर्थोऽयं पुर्नानिषेधः । ब्राह्मणैः पीडितोऽपि न तान्भिन्द्वेत् । गवादिकं दत्वा मयेदं दत्तमिति परस्य न कथयेत् ॥ कु-भट्ट मनु॰अ॰४-श्लोक, २३६ ।

विष्णुपुराणे ।

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रवर्तेत द्विजवाचनके जपे ॥

द्विजवाचनके - द्विजस्वस्तिवाचनादौ ।

शातातपः ।

सव्यादंसात् प्ररिभ्रष्टं कटिदेशेभृताम्बरम् ।
एकवस्त्रं तु तं विद्यात् दैवे पित्र्ये च वर्जयेत् ॥

गौतमः ।

स्नाने दाने जपे होमे दैवे पित्र्ये च कर्मणि ।
बध्नीयान्नासुरीं कक्षां शेषकाले यथा रुचि ॥

याज्ञवल्क्यः ।

परिधानाद्बहिः कक्षा निबद्धाह्यासुरी भवेत् ।
धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

बहिः कक्षा - बहिर्निर्गता कक्षेत्यर्थः ।

मनुः । गरूणां सन्निधौ दाने यागे चैव विशेषतः ।
एषु मौनं समातिष्ठन् स्वर्गं प्राप्नोति मानवः ॥

लघुहारीतः ।

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यं तु करः कुर्यात् सुवर्णरजतैः कुशैः ॥

दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम् ।
असंख्यातं च यज्जप्तं तत् सर्वं निष्प्रयोजनम् ॥

हारीतः ।

देवाश्च पितरश्चैव तपोयज्ञदानानामीशते, मन्त्राः सर्वकार्यसाधवानामार्तिभयोपसर्गेभ्यो रक्षितारो भवन्ति । मन्त्रा देवतास्तदा एवं सिद्धमन्त्रवत् करोति । देववत् करोति । यद्दाति देवताभिरेव तद्दाति । यत् प्रतिगृह्णाति देवताभिरेव तत् प्रतिगृह्णाति । तस्मात् न अमन्त्रवत् प्रतिगृह्णीयात् । येतु अमन्त्रतः तूष्णीं प्रतिगृह्णीयुःतेहि शठा भवन्ति । तस्मात् मन्त्रवदद्भिरवोक्ष्य दद्यादालभ्य वा । अवोक्ष्य - प्रोक्षणं कृत्वा । आलभ्य-सोदकेन पाणिना स्पृष्ट्वा ।

पात्रासन्निधाने तु नारदीयपुराणे विशेष उक्तः ।
मनसा पात्रमुद्दिश्य जलं भूमौ विनिक्षिपेत् ।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥

षट्त्रिंशन्मते ।

पात्रं मनसि सञ्चिन्त्य क्रियावन्तं गुणान्वितम् ।
देशे काले च सम्प्राप्ते देयमप्सु विनिक्षिपेत् ॥

वृद्धवसिष्ठः ।

नामगोत्रे समुच्चार्य सम्प्रदानस्य चात्मनः ।
सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्रयम् ॥

पुंस्त्रयमिति - प्रपितामहादिपुरुषत्रयमित्यर्थः ।

तदुक्तम् ।

नान्दीमुखे विवाहे च प्रपितामह पूर्वकम् ।
नामसङ्कीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

अथ प्रतिगृहीतृधर्माः । ब्रह्माण्डपुराणे ।

शुचिः पवित्रपाणिश्च गृह्णीयादुत्तरामुखः ।
अभीष्टदेवतां ध्यायन् मनसा विजितेन्द्रियः ॥
कृतोत्तरीयको नित्यमन्तर्जानुकरस्तथा ।
दातुरिष्टमभिध्यायन् गृह्णीयात् प्रयतः शुचिः ॥

आपस्तम्बः ।

आर्द्रवासास्तु यः कुर्यात् जपंहोमं प्रतिग्रहम् ।
सर्वं तद्राक्षसं विन्देत् बहिर्जानुच यत्कृतम् ॥

आह प्रचेताः । दक्षिणमध्यहस्ते ब्राह्मणस्याग्नेयंतीर्थं माग्नेयेन प्रतिगृह्णीयात् इति ।

वायुपुराणे । दानं प्रतिग्रहो होमो भोजनं बलिरेव च ।
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥

साङ्गुष्ठेन - अङ्गुलीसहिताङ्गुष्ठेन ।

ब्रह्माण्डपुराणे ।

नाधिकारी मुक्तकच्छो मुक्तचूडस्तथैव च ।
दाने प्रतिग्रहे यज्ञे ब्रह्मयज्ञादि कर्मसु ॥
देवाः समेत्य वस्त्रं हि तच्च पुंसामकल्पयन् ।
ततश्च वाससा हीनमसम्पूर्णं प्रचक्षते ॥
सोत्तरीय. ततः कुर्यात् सर्वकर्माणि भावितः ।
अधौतं कारुधौतं च परिदध्यान्न वाससी ॥
ददानः प्रतिगृह्णंश्च दध्यादहतमेव च ।

शातातपः ।

प्रश्नपूर्वं तु यो दद्यात् ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥

प्रश्नपूर्वमिति एतमध्यायमेतमनुवाकं वा यदि त्वमस्खलितं पठसि तदा ते एतावद्दामीत्युक्त्वा तथा कृते यद्दीयते तत् प्रश्नपूर्वकम् । अथ मिश्रधर्माः ।

नन्दिपुराणे ।

दाने विधिमविज्ञाय न हि तद्दातुमर्हति ।
प्रतिग्रहानभिज्ञश्च गृह्णन् निरयमश्नुते ॥
सावज्ञं प्रतिगृह्णानो गृहीताऽपि पतत्यधः ।
किं त्वं वेत्सीति वक्तव्यो न दात्रा ब्राह्मणः क्वचित् ॥
सोऽपि पृष्टः स्वयं तेन दानार्थं तं न कीर्तयेत् ।

यदि त्वमेतत् पठसि तदा तुभ्यमेतद्दामीति साक्षात् परीक्षणमत्र निषिध्यते । पात्रत्वबोधार्थमुपायान्तरेण परीक्षणमनुमतमेव । तदुक्तं यमेन—

शीलं संवसनाज्ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा सङ्कथनाज्ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

सङ्कथनं - शुद्धभावेन विद्याकथा ।

षट्त्रिंशन्मते ।

प्राक्प्रत्यगास्यावुद्वाहे दातृग्राहकयोः स्थितिः ।
दद्यात् पूर्वमुखो द्रव्यमेष एव विधिः सदा ॥

यत् तु कीर्तयन्ति । प्राङ्मुखस्तु प्रगृह्णीयाद्विवाहे तु विपर्ययः ।

तत् चिन्त्यम् ।

छन्दोगपरिशिष्टे कात्यायनः ।

अक्रिया[1] त्रिविधा प्रोक्ता विद्वद्भिः कामकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चाऽयथाक्रिया ॥

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं च यः ।
कर्तुमिच्छति दुर्मेधा मोघं तत् तस्य यत् फलम् ॥

यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

"अग्निहोत्रं" यजुर्वेदशाखासु विहितं यथा छन्दोगादिभिरनुष्ठीयते ॥

गृह्यपरिशिष्टकारः ।

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नावृत्तिर्न च तत्क्रिया ॥

यत्र प्रधानकर्माकरणं तत्साङ्गमेव पुनः कर्तव्यम् । तदङ्गाकरणे पुन र्न साङ्गप्रधानावृत्तिः । नापि तावन्मात्राङ्गस्य करणं किं तु प्रायश्चित्तमेव कार्यम् ।

याज्ञवल्क्यः ।

रौद्रपित्रासुरान् मन्त्रांस्तथा देवाभिचारिकान् ।
व्याहृत्याऽऽलभ्य चात्मानमपः स्पृष्ट्वान्यदाचरेत् ॥

---

1. क्रियाभावः, परसूत्रोक्ता, अयथावत् क्रिया-इति-भावः

छन्दोगपरिशिष्टे कात्यायनः ।

यत्रोपदिश्यते कर्म कर्तुरङ्गं न सूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

यत्र दिङ्नियमो नास्ति जपहोमादि कर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥

ऐन्द्री - प्राची । सौम्या - उत्तरा । अपराजिता - ईशानादिक् ।

आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

प्रह्वः - प्रणतजानुकः । प्रह्वेण - नम्रेण । तिष्ठता - ऊर्ध्वेण ।

कात्यायनः ।

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु ।
विशिखोऽनुपवीतश्च यत् करोति न तत् कृतम् ॥

निगमपरिशिष्टे । वामस्कन्धे यज्ञोपवीतं दैवे, प्राचीनावीतमित-रथा पितृयज्ञे, नाभ्या द्विकण्ठासक्तमुत्सर्गे निवीतं, पृष्ठदेशाव-लम्बि ग्राम्यधर्मेषु । ग्राम्यधर्मः - स्त्रीसंयोगः ।

स्कन्दपुराणे ।

पाषण्डिनश्च पतिता ये च वै नास्तिका जनाः ।
पुण्यकर्मणि तेषां वै सन्निधिर्नेष्यते क्वचित् ॥

भविष्यत्पुराणे ।

मधुरोऽम्लश्च लवणं कषायस्तिक्त एव च ।
कटुकश्चेति राजेन्द्र रसषट्कमुदाहृतम् ॥

अनुक्तद्रव्यतत्संख्या देवता प्रतिमा नृप ।
सौवर्णी राजती ताम्री वृक्षजा मार्तिकी तथा ॥
चित्रजा पिष्टलेपोत्था निजवित्तानुरूपतः ।
आमाषात् पलपर्यन्तं कर्तव्या शाठ्यवर्जितैः ॥
सुवर्णं रजतं ताम्रमारकूटं तथैव च ।
लोहं त्रपु तथा सीसं धातवः परिकीर्तिताः ॥

## अथ दक्षिणादिनिर्णयः ।

अदत्तदक्षिणं दानं व्रतं चैव नृपोत्तम ।
विफलं तद्विजानीयाद्भस्मनीव हुतं हविः ॥

षट्त्रिंशन्मते ।

श्रद्धायुक्तः शुचिर्दान्तो दानं दद्यात् सदक्षिणम् ।
अदक्षिणं तु यद्दानं तत्सर्वं निष्फलं भवेत् ॥

स्कन्दपुराणे ।

देयद्रव्यतृतीयांशं दक्षिणां परिकल्पयेत् ।
अनुक्तदक्षिणे दाने दशांशं वाऽपि शक्तितः ॥

बह्वृच परिशिष्टे ।

अथाबुधः सधूमे तु जुहुयाद्यो हुताशनं ।
यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥

छन्दोगपरिशिष्टे कात्यायनः ।

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चैव जायते ॥

तस्मात् समिद्धे होतव्यं नाऽसमिद्धे कथञ्चन ।
आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा ॥

जुहूषुश्च हुते चैव पाणिशूर्पस्त्रुगादिभिः ।
न कुर्यादग्निधमनं कुर्यात्तु व्यजनादिना ॥

मुखेनैव धमेदग्निं मुखादेषोऽभ्यजायत ।
नाग्निं मुखेनेति तु यल्लौकिके योजयन्ति तत् ॥

भविष्यत्पुराणे ।

भूमौ स्थितेन पात्रेण विष्टब्धेन च पाणिना ।
वामेन यदुशार्दूल नान्तरिक्षे तु हूयते ॥

धनायुर्दाररेखासु सोमतीर्थं तु मध्यमम् ।
लाजादिहवनं तेन कर्तव्यं वपनं तथा ॥

वपनम् - व्रीह्यादि निर्वापः ।

मरीचिः ।

प्रागग्राः समिधो ग्राह्या अखर्वाऽनोष्ठपाटिताः ।
काम्येषु वशकर्मादौ विपरीता जिघांसति ॥

विशीर्णा विदला ह्रस्वा वक्रा बहुशिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टा कर्मसिद्धिविनाशकाः ॥

समिदित्यनुवृत्तौ ब्रह्मपुराणे ।

शमीपलाशन्यग्रोधप्लक्षवैकङ्कतोद्भवा ।
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ।
शालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः ॥

छन्दोगपरिशिष्टे कात्यायनः ।

नाङ्गुष्ठादधिका कार्या समित् स्थूलतया क्वचित् ।
न वियुक्तार्जवा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका न्यूना न तथा स्याद्विशाखिका ।
न सपर्णा समित् कार्या होमकर्मसु जानता ॥

तथा । आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

सचोक्तो गरुडपुराणे ।

प्रणवादिनमोऽन्तं च चतुर्थ्यन्तं च सत्तम ।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्तितः ॥

इति मण्डपादि लक्षणम् । अथ वृद्धिश्राद्धम् ।

आह शातातपः ।

नानिष्ट्वा पितृयज्ञेन वैदिकं किञ्चिदाचरेत् ।
तत्रापिमातरः पूर्वं पूजनीयाः प्रयत्नतः ॥
अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

मातृगणास्तु भविष्यत्पुराणे निरूपिताः ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा माताऽन्या लोकमातृकाः ॥
[1]हृष्टिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
पूज्याः चित्रेऽथवार्चायां वरदाभयपाणयः ॥

---

1. धृतिः-पा ।

विष्णुपुराणे ।

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
शुभकर्मणि बालानां चूडाकर्मादिके तथा ।
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखान् पितृनादौ तर्पयेत् प्रयतो गृही ॥

जाबालः। यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥

तेन वैदिकहोमाङ्गकेषु दर्शपूर्णमासादिषु अन्येषु च वचनविशेषितेषु कर्मसु वृद्धिश्राद्धमाचरणीयम् ।

तथा तुलापुरुषादीनामपि यागसंशब्दनाल्लोकपालावाहनमन्त्रेषु च सर्वेषु 'ममाध्वरं पाहि' 'यज्ञं रक्ष' इत्यादि शब्दप्रयोगात् सत्यपि दानरूपत्वे यागधर्मभंजितव्यमिति तत्रापि वृद्धिश्राद्धं कर्तव्यम् । एवमेव सहोमकेषु धान्यपर्वतादिषु अप्यनुसन्धेयम् ।

तस्य विधिमाह कात्यायनः । आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जजप ऋजवो दर्भा यवास्तिलार्थाः - सम्पन्नमिति तृप्तिप्रश्नः, सुसम्पन्नमितीतरे ब्रूयु, दधिबदराक्षतमिश्राः पिण्डाः । नान्दीमुखान् पितृनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितर प्रीयन्तामित्यक्षय्यस्थाने, नान्दीमुखान् पितृन् वाचयिष्य इति पृच्छति, वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति, न स्वधां प्रयुञ्जीत युग्मानाशयेदत्र । निगदव्याख्यातमेतत् ।

युग्मानाशयेदिति - अत्राभ्युदयिके युग्मान् ब्राह्मणान् भोजयेदिति ।

अथ मधुपर्कः ।

आह जाबालः ।

विवाह्यमृत्विजं चैव श्रोत्रियं गृहमागतम् ।
अर्हयेन्मधुपर्केण स्नातकं प्रियमेव वा ॥

विश्वामित्रः ।

संपूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ।
अपूज्य कारयेत्कर्म किल्बिषेणैव युज्यते ॥

तथा च परिशिष्टे ।

कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः ।
पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः ॥
ऊर्ध्वकेशोभवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः ॥

ब्राह्मणा मम गृहे अस्यकर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति स्वयं मन्दस्वरेणोक्त्वा ब्राह्मणैः ॐ पुण्याहमिति तथोक्ते पुनरेव मध्यमस्वरेणोक्त्वा तथैव तैरुक्ते पुनरेवमुच्चस्वरेणोक्ते तथैव तैरुक्ते । स्वस्तये वायुमुपब्रवामहै आदित्य उदितीय स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ।

अष्टौ देवाः वसवः सोम्यासः चतस्रो देवी रजसा श्रविष्ठाः । ते यज्ञं पान्तु रजसः पुरस्तात् संवत्सरीणममृतंस्वस्ति ॥

ब्राह्मणा इत्यादिकर्मण इत्यन्तं पूर्ववत्। स्वस्ति भवन्तो ब्रुवन्तु इति त्रिः। आयुष्मते स्वस्तीति प्रतिवचनं त्रिः। अस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्त्विति त्रिर्ब्रूयात्। अस्तु श्रीरिति विप्रास्त्रिः। पुण्याहवाचनसमृद्धिरस्तु। भगवान् प्रजापतिः प्रीयताम्।

इति श्रीमहाराजाधिराज श्रीमहादेवस्य समस्तकरणाधीश्वर सकलविद्याविशारद श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे परिभाषाप्रकरणम् ॥ ३ ॥

॥ चतुर्थप्रकरणम् ॥ अथ दानफलानि।

यो हेमाद्रिः शिवं स्तौति सर्वदा नागमोदितम्।
सोऽद्य दानफलं प्राह सर्वदानागमोदितम् ॥

तत्र[1] सामवेदोपनिषदि - दानेन सर्वान् कामानवाप्नोति चिरजीवित्वं, ब्रह्मचारी रूपवानहिंस्र उपपद्यते। स्वर्ग्यं पर्णाशनात् दिविचरः पयोभक्षःस्थानवीरासनाद्वित्तवान्,पितृ-मातृ-गुरुशुश्रूषाध्यानवान् स्वर्गी यःकाञ्चनदाते-यादि।

आह भगवान् ऋग्वेदः। उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदा सह ते सूर्येण हिरण्यदा अमृतत्वं भजन्ते वासोदा. सोम प्रतिरन्त आयुरिति।

---

1. गुर्वीप्सितदानेन, शिष्यायविद्यादानेनवा, शतायुष्ट्वं, ब्रह्मचर्यं, तेजस्वित्वं रोगरहितत्वं च, तस्य फलं, पर्णाशनविधिना वेदाध्यायी, स्वर्गमश्नुते, पयोव्रतेन योऽधीते, स्वर्गादिषु कामचारः, ब्रह्मयज्ञादौ वीरासनविधिनाजपन् ईप्सितधनवान्, पित्रादिशुश्रूषानिरतः, स्वर्गसुखमश्नुते। यः स्वर्णदाता तस्य देवतासाम्यम् ॥ सामवेदीयसंहितोपनिषत् भाष्यम खण्डः-४।

हारीतः । आपो ददत् तृषमभिजयत्यात्मानं च निष्क्रीणाति । अन्नदानादसून्निष्क्रीणाति अन्नवानन्नादोऽन्नपतिश्च भवति वस्त्रदानाद्वचो निष्क्रीणाति सुरूपोऽनग्नो वस्त्रभाग्भवति । हिरण्यप्रदानात् तेजो निष्क्रीणाति सुतेजाः श्रीमान् हिरण्यभाग्भवति । गोप्रदानाद्वाचो निष्क्रीणाति सुवाग्विपाप्मा गोभाक् च भवति । अनडुत्प्रदानात् प्राणान्निष्क्रीणात्यरोगो बलवान् धुर्यभाक् च भवति । रथप्रदानाच्छरीरं निष्क्रीणाति भृत्यविविधविमानभाग्भवति । शय्याप्रदानात् सुखं निष्क्रीणाति यानशयनासनविविधसुखश्रीभाग्भवति । अपरिमित प्रदानादपरिमितपोषं पुष्णाति अपरिमितान् कामानवाप्नोति ।

तद्द्विविधं भवति अविज्ञातदानं च विज्ञातदानं च । यदविज्ञातविदुषे तदविज्ञातं दानम् । अथ यद्विज्ञातविदुषे सब्रह्मचारिणे वैश्वानरमाददानाय यद्ददाति प्रतिगृह्णाति च तद्विज्ञातदानं । तदप्येतद्यजुष्युक्तमिदं कस्मा अदादिति । आत्मानं निष्क्रीणाति आत्मानमेवाददातीत्यर्थः । अनेन प्रकारेण जलादिदानमेवं स्तूयते ।

आह मनुः । वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।
तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥

भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।

तथा ।　श्रान्तसम्वाहनं रोगिपरिचर्या सुरार्चनम् ।
पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदा समम् ॥

इति चतुर्थं प्रकरणम् ।

॥ अथ पञ्चमप्रकरणम् ॥

अथ दानानि प्रतिपाद्यन्ते ।

तत्र प्रथमं विशिष्टतया तुलापुरुषादि षोडशमहादानानि ।

जाताः सन्ति पुरा भवन्ति बहवो ये दानशौण्डा नरा-
स्तान् कल्पद्रुमकामधेनुतुलया स्तोतुं समर्था जनाः ।
धेनुं तामपि तद्द्रुमं भुवि महादानच्छलाद्यच्छतो-
हेमाद्रेरुपमानवस्तुनि पुन पुष्णाति तूष्णीं न कः ॥

तुला पुरुषमुख्यानामपि येन सहासहा ।
तुलापुरुषमुख्यानां दानानां विधिमाह सः ॥

तत्र तुलापुरुषदानं तावदभिधीयते ।

मत्स्यपुराणे सूतउवाच ।

अथाऽतः संप्रवक्ष्यामि महादानानुकीर्तनम् ।
दान धर्मेऽपि यत् प्रोक्तं विष्णुना प्रभविष्णुना ॥
सर्वपापक्षयकरं नृणां दु खविनाशनम् ।
यत्तत् षोडशधा प्रोक्तं वासुदेवेन भूतले ॥
पुण्यं पवित्रमायुष्यं सर्वपापहरं शुभम् ।
पूजितं देवताभिश्च ब्रह्मविष्णु शिवादिभिः ॥
आद्यं तु सर्वदेवानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानं च ब्रह्माण्डं तदनन्तरम् ॥

कल्पपादपदानं च गोसहस्रं च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥
द्वादशं विश्वचक्रं च ततः कल्पलतात्मकम् ।
सप्तसागरदानं च रत्नधेनुस्तथैव च ॥
महाभूतघटस्तद्वत्षोडशः परिकीर्तितः ।
सर्वाण्येतानि कृतवान् पुरा शम्बरसूदनः ॥
वासुदेवश्च भगवानम्बरीषोऽथ पार्थिवः ।
कार्तवीर्यार्जुनो नाम प्रह्लाद पृथुरेव च ॥
चक्रुरन्ये महीपालाः केचिच्च भरतादयः ।

इह चाऽयं प्रयोगक्रमः ।

उक्तकालान्यतमदानप्रतिपादनदिनात् पूर्वेद्यु प्रातः सुस्नातः श्वोभूतेऽहममुकदानं प्रतिपादयिष्य इति यजमानः सङ्कल्पं विधाय प्रत्यूहसमूहविघाताय शिवविष्णुविनायकान् संपूज्य ब्राह्मणानुज्ञातः कर्म समारभेत । अथ वृद्धिश्राद्धं कृत्वा तदनन्तरमृत्विग्वरणं विधाय तांश्च मधुपर्कविधिना सम्पूज्य पश्चिमद्वारमण्डपं प्रविश्यऽपराह्णेऽधिवासनं विदध्यात् । मधुपर्कविधि, कुण्ड, मण्डपादि, लक्षणानि परिभाषायां द्रष्टव्यानि ।

मत्स्यपुराणे ।

समानजातिश्च तुलावलम्ब्या होमेन मध्ये पुरुषेणयुक्ता ।
दैर्घ्येण सा हस्तचतुष्टयं स्यात्पृथुत्वमस्यास्तु दशाङ्गुलानि ॥

सुवर्णपट्टाभरणातुकार्या सलोहपाशाद्वयश्रृङ्खलाभिः।
युता सुवर्णेन च रत्नमालाविभूषिता माल्यविलेपनाभ्याम् ॥

"समानजातिः" तोरणसमानजातिः, तुलोत्तराङ्गमध्ये द्वादश-भिरङ्गुलैरधस्तादुदगग्राऽवलम्ब्या। "पुरुषेण" विष्णुना। 'श्रृङ्खलावलम्बितेन' सुवर्णनिर्मितेन।

आचार्यस्तु। यान्तु देवगणाः सर्वे पूजामादाय पार्थिवात्।
इष्टकामप्रदानार्थं पुनरागमनाय च ॥

इत्यनेनमन्त्रेण देवतानां विसर्जनं कुर्यात्।
अनेनविधिना यस्तु तुलापुरुषमाचरेत्।
प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरे वसेत्।
विमानेनार्कवर्णेन किङ्किणीजालमालिना।
पूज्यमानोऽप्सरोभिश्च ततोविष्णुपुरं व्रजेत् ॥
कल्पकोटिशतं यावत् तस्मिन् लोके महीयते।

उक्तं ह्यापस्तम्बेन। यथोपदेशं प्रधानाहुतीर्हुत्वा जयाभ्याता-नान् राष्ट्रभृतः प्राजापत्यां व्याहृतीर्विहृताः सौविष्टकृतीमि-त्युपजुहोति।

इयं च जयाद्युक्तिः स्वस्वगृह्योक्तोपरिष्टात्तन्त्रोपलक्ष-णार्था। सर्वहोमः प्रधानहोमः। तत्रापि पालाशीसमित्। तत्र होमोऽन्वाधानेध्माधानादिरूपः।

षोडशैतानि यः कुर्यात् महा दानानि मानवः।
न तस्य पुनरावृत्तिरिह लोकेऽभिजायते ॥
इति दानखण्डे षोडशमहादानविधि प्रकरणम् ॥

अथ षष्ठप्रकरणम् । पर्वतदानविधिः ।

धान्यशैलादिदानानामिह हेमाद्रिसूरिणा ।
विचित्रविधिविस्तार प्रस्तावः क्रियतेऽधुना ॥

तत्र धान्यपर्वतदानं तावदुच्यते । तदेव पद्मपुराणे ।

भीष्म उवाच ।

भगवन् श्रोतुमिच्छामि दानमाहात्म्यमुत्तमम् ।
यदक्षयं परे लोके देवर्षिगणपूजितम् ॥

पुलस्त्य उवाच ।

मेरोः प्रदानं वक्ष्यामि दशधा मुनिसत्तम ।
यत्प्रसादान्नरो लोकानाप्नोति सुरपूजितान् ॥
पुराणेषु च वेदेषु यज्ञेष्वायतनेषु च ।
न तत् फलमधीतेषु कृतेष्विह यदश्नुते ॥

'पुराणेषु वेदेषु यज्ञेष्वायतनेषु च' कृतेषु न तत् फलमिति सम्बन्धः ।

तस्माद्विधानं वक्ष्यामि पर्वतानामनुत्तमम् ।
प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ॥

गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ।
पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः ॥

सप्तमो घृतशैलश्च रत्नशैलस्तथाऽष्टमः ।
राजतो नवमस्तद्वद्दशमः शर्कराचलः ॥
वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः ।

**अथ पञ्चपर्वतदानविधिः ।**

तिलपर्वतदानं च तथा लवणपर्वतः ।
कार्पासगुडयोश्चैव तथा सर्षपपर्वतः ॥

धान्यपर्वतदानस्य विधिरत्रापि कीर्तितः ।
फलं पुण्यं प्रमाणञ्च तत् प्रवक्ष्याम्यशेषतः ॥

**अथ शिखरदानविधिः ।** श्रीराम उवाच ।

शिखराणां ममाचक्ष्व दानं त्रिपुरनाशन ।
यानि दत्वा तु दौर्भाग्यं दौर्गत्यं न प्रजायते ॥

**शङ्कर उवाच ।**

शृणु राम प्रवक्ष्यामि शिखराणां यथाक्रमम् ।
दानं देयं यथा येन तच्छृणुष्व सनातनम् ॥

माघशुक्लतृतीयायां मार्गशीर्षस्य वा पुनः ।
तृतीया वाऽथवैशाखे शुक्ला या रोहिणीयुता ॥

प्रोष्ठपद्यां तृतीयायां विशेषेण तु भार्गव ।
गुडेक्षुवस्त्रलवणधान्यकार्पासशर्कराः ॥

खर्जूरतण्डुलद्राक्षाक्षौद्रैर्मलयजेन च ।
फलैर्मनोहरैरम्यैः शिखराणि प्रदापयेत् ॥

एषामन्यतमं दद्याद्यथाश्रद्धं विधानतः ।
आत्मप्रमाणं कुर्वीत प्रादेशाभ्यधिकं शुभम् ॥

विधिनानेन यो दद्याद्गौर्याः शिखरमुत्तमम् ।
स वसेद्भवने देव्याः कल्पकोटिशतत्रयम् ॥

पुण्यक्षयादिहागत्य जायते पृथिवीपतिः ।
अनेन विधिना देयं विधिहीनं न कारयेत् ॥
विधिहीनं कृतं सर्वं न दातुः फलदं भवेत् ।

इति विष्णुधर्मोत्तरे शिखरदानविधिः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य समस्तकरणाधीश्वर सकलविद्याविशारद श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे पर्वतदानप्रकरणम् ॥

इति षष्ठं प्रकरणम् ॥

शिवाभ्यां नमः

दानखण्डः भागः (२)

सप्तमप्रकरणम्

अथातिदानविधानमुच्यते ।

अथातिदानानि सतां हिताय हेमाद्रिसूरिः प्रकटीकरोति ।
दानेन येषां सकृदप्यनल्पकल्पान्तसाक्षी वरभोगयोगः ॥

कानि पुनस्तानीत्यपेक्षायां भविष्यत्पुराणे ।

त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येव जपवापनदोहनैः ॥ इति ।

अत्र यद्यपि धेनुशब्देन[1] स्वरूपतो गौरेव अभिधीयते । तथाऽपि धेनुशब्दसाधारण्यादिहप्रकरणे गुडधेन्वादीनामपि सन्निवेशो युक्तः । तासु च क्रमेण निरूप्यमाणासु दशमी स्यात्

1. गोशब्देन इति पाठः

स्वरूपत इति, स्वरूपधेनोरन्ते स्थितत्वात् गुडधेन्वादय एव प्रथमतो निरूप्यन्ते ।

तदुक्तं मत्स्यपुराणे ।

यास्तु पापविनाशिन्यः पठ्यन्ते दशधेनवः ।
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥
प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथाऽपरा ।
तिलधेनुस्तृतीया तु चतुर्थी जलसंज्ञिता ॥
क्षीरधेनुश्च विख्याता मधुधेनुस्तथाऽपरा ।
सप्तमी शर्कराधेनुर्दधि धेनुरथाष्टमी ॥
रसधेनुर्नवमी स्याद्दशमी स्यात्स्वरूपतः ।
एतावत्तु विधानं च तदाचक्ष्व जगत्पते ॥
किं रूपं केन मन्त्रेण दातव्या तदिहोच्यताम् ।

मत्स्य उवाच ।

गुडधेनु विधानस्य यद्रूपमिह यत्फलम् ।
तदिदानीं प्रवक्ष्यामि सर्वपापविनाशनम् ॥
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि ।
गोमयेनोपलिप्तायां दर्भानास्तीर्य सर्वतः ॥
लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत् ।
प्राङ्मुखीं प्रापयेद्धेनुमुदक्पादां सवत्सकाम् ॥

एणकाजिनं - कृष्णाजिनम् । "प्राङ्मुखीं" प्राक्शिरसमित्यर्थः । तदुत्तरेण वत्सोऽपि तथैव परिकल्पनीयः ।

उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयम् ।
वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ॥

अर्धभारेण वत्सः स्याद्गृहवित्तानुसारतः ।

"भारः" परिभाषायां व्याख्यातः । "गृहवित्तानुसारत" इति इयमुत्तममध्यमादिकल्पना, निजवित्तानुसारतः कर्तव्या इत्यर्थः ।

विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ ।
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥
सुवर्णश्रृङ्गाभरणौ राजतखुरसंयुतौ ।
नानाफलमयैर्दन्तैर्घ्राणगन्धकरण्डकौ ॥

अत्र च स्वरूपतः परिमाणतश्च फलविशेष इति यथाशक्ति सुवर्णश्रृङ्गादित्वमवधेयम् । इत्येवं रचयित्वा तु धूपदीपैरथार्चयेत् ।

अथामन्त्रणमन्त्रः ।

ॐ या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ।
धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ।
चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये ॥
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ।
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे ॥
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां तथा ।
सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे ॥
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ।

अत्रैष दानवाक्यप्रयोगः । ॐ अद्यामुकस्मिन् काले अमुक-सगोत्रायामुकशर्मणे ब्राह्मणायेमां गुडधेनुं यथोक्तसर्वोपकरणवतीं यथोक्तक्लृप्तवत्ससहितां विष्णुदैवताममुक-सगोत्रोऽहममुकशर्मा अमुककामस्तुभ्यमहं संप्रददे न ममेति । ममामुकसगोत्रायामुकशर्मणे ब्राह्मणाय एतद्गुडधेनुदानप्रतिष्ठार्थं सुवर्णं दक्षिणा इदं तुभ्यमहं संप्रददे न ममेति ।

विधानमेतद्धेनूनां सर्वासामिह पठ्यते ।

सर्वासां - प्रत्यक्षधेनुव्यतिरिक्तानामित्यवगन्तव्यम् ।

तथा । एतदेव विधानं स्यात् त एवोपस्कराः स्मृताः ॥

मन्त्रावाहनसंयुक्ताः सदा पर्वणि पर्वणि ॥

यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः ।
अशेषयज्ञफलदाः सर्वपापहराः शुभाः ॥

अयने विषुवे पुण्ये व्यतीपातेऽथ वा पुनः ।
गुडधेन्वादयो देया उपरागादि पर्वसु ॥

अत्रघृतादिधेनुद्रव्यपरिमाणमपि गुडधेनूक्तमेव ।

विधानमेतद्धेनूनां सर्वासामपि पठ्यते । इति सामान्येनातिदेशात् कुम्भाः स्यु र्द्रवधेनूनामितरासां तु राशयः ।

इति गुडधेनुदानविधिः ॥ अथ तिलधेनुदानम् ।

विष्णुधर्मे वसिष्ठ उवाच ।

तिलधेनुं प्रवक्ष्यामि केशवप्रीणनाय च ।
दत्वा भवति यस्याश्च नरेन्द्र विधिरुत्तमः ॥

यो दत्वा ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।
अगारदाही गरदः सर्वपापयुतोऽपि वा ॥

महापातकयुक्तश्च संयुक्तश्चोपपातकैः ।
मुच्यते ह्यखिलैः पापैः विष्णुलोकंच गच्छति ॥

अनुलिप्ते महीपृष्ठे वस्त्राजिनकुशावृते ।
धेनुं तिलमयीं कृत्वा सर्वरत्नैरलङ्कृताम् ॥

धेनुं द्रोणेन कुर्वीत आढकेन तु वत्सकम् ।
स्वर्णश्रृङ्गीं रूप्यखुरां गन्धघ्राणवतीं तथा ॥

कुर्याच्च शर्कराजिह्वां गुडास्यामविकम्बलाम् ।
इक्षुपादां ताम्रपृष्ठां शुचिमुक्ताफलेक्षणाम् ॥

वह्निपुराणे तु अयं मन्त्रः ।

तिलाश्च पितृदेवत्या निर्मिताश्चेह गोसवे ।
ब्रह्मणा तन्मयी धेनुर्दत्ता प्रीणातु केशवम् ॥ इति ।

ततः प्रदक्षिणं कृत्वा पूजयित्वा प्रणम्य च ।
सदक्षिणा मया तुभ्यं दत्तेत्युक्त्वा विसर्जयेत् ॥

अनेन विधिना दत्वा तिलधेनुं नराधिप ।
सर्वपापविनिर्मुक्तः परंब्रह्माधिगच्छति ॥

यश्च गृह्णाति विधिवद्दीयमानां प्रमोदयेत् ।
दीयमानां प्रपश्यन्ति ये च संहृष्टमानसाः ॥

तेऽप्यशेषाघनिर्मुक्ताः प्रयान्ति परमां गतिम् ।

**वराहपुराणे सूत उवाच ।**

तिलधेनुं जलधेनुं रसधेनुं च पार्थिव ।
देहि शीघ्र येन भवान् क्षुत्तृषावर्जितो दिवि ।।
रमते यावदादित्यस्तप्यते दिवि चन्द्रमाः ॥

**गोमतीविद्याऽपि तत्रैव ।** तद्यथा ।

गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः ।
सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा ॥

गावः पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ।
गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् ॥

एवं रात्रौ दिवा वाऽपि समेषु विषमेषु च ।
महाभयेषु च नरः कीर्तयन्मुच्यते भयात् ॥ इति ।

**अथ स्वरूपतो गोदानं, महाभारते ।**

दानानामिह सर्वेषां गवां दानं विशिष्यते ।
गावः श्रेष्ठाः पवित्राश्च पावना जगदुत्तमाः ॥

ऋते दधिघृताभ्यां च नह यज्ञः प्रवर्तते ।
तेन यज्ञमशेषं हि गोमूलं संप्रचक्षते ॥

गावोऽधिकास्तपस्विभ्यः सदा सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्ताभिः सह स्थितः ॥

पयसा हविषा दध्ना शकृताप्यथ चर्मणा ।
अस्थिभिश्चोपकुर्वन्ति बालैः शृङ्गैश्च भारत ॥

गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युतम् ।
कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव ॥

गवां प्रशस्यते वीर सर्वपापहरं परम् ।
गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ॥
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञप्रणेत्र्यो वै तथा यज्ञस्य गौर्मुखम् ॥
अमृतं ह्यक्षयं दिव्यं रक्षन्ति च वहन्ति च ।

लिङ्गपुराणे ।

अग्न्यगाराणि विप्राणां देवतायतनानि च ।
पूयन्ते शकृता यासां किं दैवमधिकं ततः ॥

स्कन्दपुराणे ।

तृणानि खादन्ति वसन्त्यरण्ये पिबन्ति तोयान्यपरिग्रहाणि ।
दुह्यन्ति वाह्यन्ति पुनन्ति पापं गवां रसैर्जीवति जीवलोकः ॥
तुष्टास्तु गावः शमयन्ति पापं दत्तास्तु गावस्त्रिदिवं नयन्ति ।
संरक्षिताश्चोपनयन्ति वित्तं गोभिर्न तुल्यं धनमस्ति किञ्चित् ॥

अङ्गिराः ।

गौरेकस्यैव दातव्या श्रोत्रियस्य विशेषतः ।
सा हि तारयते पूर्वान् सप्त सप्त च सप्त च ॥

नन्दिपुराणे ।

अपात्रे सा तु गौर्दत्ता दातारं नरकं नयेत् ।

गोमतीमाह यमः ।

ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥

इति देवतोद्देशेन गोदानविधिः । अथ देवताभ्यो गोदानम् ।

स्कन्दपुराणे ।

शिवाय विष्णवे चापि यस्तु दद्यात् पयस्विनीम् ।
धेनुं स्नानोपहारार्थं स परं ब्रह्म गच्छति ॥

तथा । यो दद्यादुभयमुखीं सौरभेयीं दिवाकरे ।
सप्तद्वीपां महीं दत्वा यत्फलं तदवाप्नुयात् ॥
पादद्वयं शिरोऽर्धं च यदा स्यादेव निर्गतम् ।
तदा सा पृथिवीज्ञेया सशैलवनकानना ॥

अथ वैतरणीगोदानम् । आह व्यासः ।

आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।
तदभावे तु गौरेव नरकोद्धारणाय वै ।

"पूर्ववत्" सुवर्णशृङ्गिकाविधिना ।

तदा यदा न शक्नोति दातुं वैतरणी तु गाम् ।
शक्तोऽन्योऽरुक् तदा दद्याच्छ्रेयो दद्यान्मृतस्य च ॥
अरुक् - रोगरहितः ।

अथ दानमन्त्रः ।

यमद्वारे महाघोरे कृष्णावैतरणी नदी ।
तां तर्त्तुं गां ददाम्येतां तुभ्यं वैतरिणीमिति ॥

मार्कण्डेय उवाच ।

या सा वैतरणी नाम यमद्वारे महानदी ।
तस्याः प्रमाणं रूपं च शृणु सर्वभयावहम् ॥
शतयोजनविस्तीर्णा पृथुत्वे सा महासरित् ।
अगाधाऽनन्तरूपा सा दृष्टमात्राद्भयावहा ॥

पूयशोणिततोयासा, मांसकर्दमनिर्मिता ।
क्रिमिभिः सङ्कुला भूयो वज्रतुण्डैरयोमुखैः ॥
शिशुमारैश्च मकरैर्वज्रकर्तरि संयुतैः ।
अन्यैश्च जलजैर्घोरैर्युक्ता सा मर्मभेदिभिः ॥
पतन्ति तत्र वै मर्त्याः क्रन्दमानाः सुदारुणाः ।
तरन्ति तस्या दानेन अन्यथा तु पतन्ति ते ।
धार्मिका दानशीलाश्च तां तरन्ति नरोत्तम ॥

याज्ञवल्क्यः ।

[1]स वत्सरोमतुल्यानि युगान्युभयतोमुखीम् ।
दत्वा स्वर्गमवाप्नोति पूर्वेण विधिना ददत् ॥

पूर्वेणविधिना - हेमश्रृङ्गीशफैरौप्यैरित्यादिना प्रत्यक्षधेनूक्तेन । विष्णुः । अथ प्रसूयमाना गौः पृथिवी भवति । तामलङ्कृत्य ससुवर्णां विप्राय दत्वा पृथिवीदानफलमाप्नोति ।

उभयशिरसं दद्यादित्यनुवृत्तौ च्यवनः ।

तस्याः प्रदानकालः । प्रसवकालो नान्यं कालं प्रतीक्षते । व्यतीपातविषुवायनषडशीतिमुखविष्णुपदीग्रहणान्ताः सर्व एव पुण्यकालाः । तदैव यत्र चार्धप्रसूतायां तत्र स्नातो ब्राह्मणं ब्रूयात् श्रुतशीलसत्यशौचवृत्तजातिक्रियाद्यैर्गुणैरुपेतं च कालेव प्रणिपत्य- ब्रूयात् । अहमतीवार्तो भीतोऽस्मादगाधादपारात् संसारार्णवात् समुत्तारयामि दशावरान् दशपरानात्मानं च । स्वामिन् भवन्तं दानपात्रमासाद्य । स चानुग्रहबुध्या नार्थलिप्सया गृह्णीत ।

1. वत्सस्य गोश्च यावन्तिरोमाणि, तावत् संख्याकानि युगानि, कृतत्रेतादीनि, उभयमुखीं ददत् स्वर्गमवाप्नोति, मनुभवति वि-र:

दाता च तामनुमन्त्रयेत् । त्वं महीमवनिं विश्वधेनुः । क इदं कस्माआदादिति, गृहीतायां दक्षिणेन पाणिना वत्समाकर्षयेत् । गर्भे तु सत्वेषामवेदमिति जपेत् । निष्क्रान्तेऽग्निमुपसमाधाय देवान् पितृन् नदीः पर्वतान् वनस्पतीनुदधीन् नागानोषधीस्तर्पय स्तैस्तैर्मन्त्रैस्तेषां मन्त्र पदानि भवन्ति । येदेवासो दिव्येकादश-स्थ, उशन्तस्त्वा निधीमहि । इमं मे गङ्गे यमुने सरस्वति । अद्भिः सुतोमतिभिश्च । नोहिते वनस्पते शतवत्सो विरोह समुद्रज्येष्ठाः सलिलस्य मध्यात् अहिरिव भोगै पर्येतिबाहुम् । मधुवाता ऋतायत इति मन्त्राः । तदनुपार्थिवीभिः पृथिवीं तर्पयेद्दलैर्द्यावापृथिवी पूर्वाचित्तं ये मही द्यौः पृथिवी च नः । उर्वीपृथ्वी बहुलेदूरे अन्ते, गौरीमिमाय सलिलानि तक्षतीत्यादि-भिः चतुरशीत्याज्याहुतीर्जुहोति । ब्राह्मणान् भोजयेत् । स्वस्त्य-यनं वाचयीत । अथास्य कर्मणो व्युष्टिमुदाहरन्ति । अभक्ष्य-भक्ष्यमपेयपायिनं ब्रह्मघ्नं पितृघ्नं सद्य एव पुनाति । उपाध्या-यिनीं सुतां मित्रभार्यां मातरं मातृष्वसारं मातुलानीं भगिनीं भागिनेयीं शिष्यजायां धात्रीमन्यामप्यगम्यां गत्वोभय शिरसं सपरिकरां ब्राह्मणाय दद्यात् । परिकरोऽस्या सुवर्णं रूप्यं रत्नादि, क्षेत्राणि ग्रामादि वा धान्यानि वस्त्राणि लवणाद्याः चन्दनाद्या गन्धाः शतं गवां तदर्धमर्धं पा सर्वस्वं वा सह तया ब्राह्मणाय दद्यान्महापातकमुक्तये विमुक्तये ॥

इत्युभयतोमुखीदानविधिः ।

अथ गोदानप्रसङ्गेन वृषभदानमप्यभिधीयते । तत्र स्कन्दपुराणे । उत्पाद्य सस्यानि तृणं चरन्ति तदेव भूयः सकलं वहन्ति ।

च भारखिन्नाः प्रवदन्ति किञ्चिदहो वृषैर्जीवति जीवलोकः ॥

ब्रह्मपुराणे ।

पुरा निर्मितवान् ब्रह्मा वृषभं धर्मरूपिणम् ।
श्वेतवर्णं चतुष्पादं सत्त्वैकगुण धारणात् ॥
धर्म इत्याह धर्मःस धर्मेण विधृता प्रजाः ।
प्रजा धरत्ययं भूमौ धर्ममूर्तिर्वृषो यतः ॥
अतो वृषभदानेन दत्तं स्यात् स चराचरम् ।
ईश्वरं पूजयेद्भक्त्या वृषारूढं वृषध्वजम् ।
वृषेन्द्रं पूज्य गायत्र्या नमस्कृत्य समाहितः ॥
ॐ तीक्ष्ण शृङ्गाय विद्महे धर्मपादाय धीमहि ।

तन्नो वृषः प्रचोदयात् ॥ इति वृषगायत्री ।

मन्त्रेणानेन सम्पूज्यो वृषो धर्मविवृद्धये ।
होतव्यं च घृताद्यैश्च यथा विभवविस्तरम् ॥
वृषः संपूज्य दातव्यो ब्राह्मणेभ्यः शिवाय च ।
दक्षिणा चैव दातव्या यथा वित्तानुसारतः ॥
एतत् यः कुरुते भक्त्या वृषदानमनुत्तमम् ।
शिवस्यानुचरो भूत्वा सुचिरं तत्र मोदते ॥

अथ रूप्यवृषदानम् ।

अथ कुष्ठहरं वक्ष्ये वृषदानमनुत्तमम् ।
यत् कार्यं कुष्ठरोगार्तैः शरीरसुखकारकम् ॥
पलैस्त्रिभिस्तु कुर्वीत द्वाभ्यामेकेन वा पुनः ।
राजतं वृषभं शुभ्रं हेमशृङ्गखुरं तथा ॥

महेश्वरेणोमया च कुर्वीत तमधिष्ठितम् ।
सौवर्णे प्रतिमे द्वे च पूर्वोक्तेन क्रमेण तु ॥

यथा विभवमानेन वित्तशाठ्यं न कारयेत् ।
ब्राह्मणं विद्यासम्पन्नं स्वाचारं संयतेन्द्रियम् ।
सर्वशास्त्रप्रवक्तारं प्रतिग्रहपराङ्मुखम् ॥

होमश्च पूर्ववत्कुर्यान्मन्त्रैर्माहेश्वरैस्तथा ।
दान्तं कुलीनं धर्मज्ञमनुद्वेगकरं नृणाम् ॥
गृहमाहूय भक्त्या तं यथाविधि समर्चयेत् ।
उदङ्मुखोपविष्टाय महादेवस्य सन्निधौ ।
प्राङ्मुखो व्याधितो दद्यान्मन्त्रेणानेन धर्मवित् ।
अष्टमूर्तिर्महेशानः कृपया वृषभध्वजः ।
श्वेतमौदुम्बरं सर्वमथवा श्वित्रमेव च ॥

त्वग्दोषजनितं गच्छ मण्डलान्यथ वाऽनघ ।
सर्वं कर्म विपाकोत्थं पार्वतीनाथ सर्वग ॥

कुष्ठहा भव सर्वेश रक्ष मां पार्वतीपते ।
इति वायुपुराणोक्तो रूप्यवृषदानविधिः ॥

—×—

अथ भूमिदानाख्यमतिदानमारभ्यते ।

तत्र महाभारते भीष्म उवाच ।

अतिदानेषु सर्वेषु पृथिवीदानमुच्यते ।
अचला ह्यक्षया भूमिर्दोग्धि कामाननुत्तमान् ॥
दोग्धि वासांसि रत्नानि पशून् व्रीहियवांस्तथा ।

भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥
यावद्भूमेरायुरिति तावद्भूमिद एधते ॥

कात्यायनः ।

मुच्यते ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।
भूमिं सर्वगुणोपेतां दत्वा पापात् प्रमुच्यते ॥

अत्रैवं प्रयोगः । ॐ अद्यामुकस्मिन् कालेऽमुकस्मिन् देशेऽमुकसगोत्रायामुखप्रवरायामुकशर्मणे अमुकसगोत्रोऽहममुकप्रवरोऽमुकशर्मा इमां भूमिं प्रियदत्तां विष्णुदेवत्याममुककामस्तुभ्यमहं संप्रददे न मम इति सपुष्पं कुशतिलोदकं ब्राह्मणहस्ते निक्षिपेत् । तेन च मनसा भूमिं प्रदक्षिणीकृत्य प्रतिग्रहः कार्यः । भूमिः समीपे चेत् साक्षात् प्रदक्षिणीकुर्यात् ।

ॐ अद्यामुकसगोत्रायेत्यादि एतद्भूमिदानप्रतिष्ठामेतत् सुवर्णं दक्षिणां तुभ्यमहं संप्रददे न मम इति ।

बृहस्पतिः । आस्फोटयन्ति पितरः प्रगल्भन्ति पितामहाः ।
भूमिदोऽस्मत्कुलेजातः सोऽस्माकं तारयिष्यति ॥

—×—

अथ विद्यादानाख्यमतिदानमारभ्यते ।

तत्रादित्यपुराणे ।

त्रीणि तुल्यप्रदानानि त्रीणि तुल्यफलानि च ।
सर्वकामदुधा नूनं गावः पृथ्वी सरस्वती ॥

नन्दिपुराणे ।

यस्तु पुण्यपरोमर्त्यो जिगीषुः कीर्तिसाधकः ।
सविधानेन वै दद्याद्विद्यां विविधकामदाम् ॥

नित्यं विद्याप्रदानं वै सर्वकामगुणाधिकम् ।
यतेत पात्रे संत्यक्तुं रहस्यं चैतदुत्तमम् ॥

विष्णुधर्मोत्तरे ।

धर्मशास्त्रप्रदानेन धर्मेण सह मोदते ।
सिद्धान्तानां प्रदानेन मोक्षं प्राप्नोति वैदिकम् ॥
शास्त्राणि दत्वा चान्यानि नरः स्वर्गे महीयते ।

इति विद्यादानप्रशंसा ॥ अथ वेददानं तावन्निरूप्यते ।

आदित्यपुराणे ।

सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
कार्यं न गोमहीवास स्तिलकाञ्चनसर्पिषाम्[1] ॥

ब्रह्मदानं वेददानम् ।

याज्ञवल्क्यः ।

सर्वधर्ममयं ब्रह्म प्रदानेऽभ्योऽधिकं यतः ।
तद्ददत्समवाप्नोति ब्रह्मलोकमविच्युतः ॥

गारुडपुराणे

विद्यानां च पराविद्या ब्रह्मविद्या समीरिता ।
अतस्तद्दानतो राजन् सर्वदानफलं भवेत् ॥
आयुः समस्तविद्यानां वेदविद्यामनुत्तमाम् ।
अतस्तद्दातुरस्त्येव लाभः स्वर्गापवर्गयोः ॥

ब्रह्मोवाच ।

ओंकारप्रभवा वेदा गायत्री वेदसंभवा ।
षडङ्गास्ते समाख्याता सहोपाङ्गास्तथैव च ॥

---

1. एतेषां दानमपि न कार्यं, ब्रह्मदानं अवश्यं कार्यम् ।

छन्दोलक्षणसंयुक्ता मातृकागर्भजाः स्मृताः ।
एकएव भवेद्वेदश्चतुर्वेदः पुनः कृतः ॥
शाखार्थमल्पयुक्तानां[1] ग्रहणायातिविस्तरात् ।
संविभक्ता मया वत्स ऋग्यजुः सामाथर्वकाः ॥
तत्र भेदास्तु ऋग्वेदे दश चैव प्रकीर्तिताः ।
आस्तयाः सांख्यचर्चाश्च आवकाश्चर्चकास्तथा ॥
आरणीया वक्रमाषाः षट्क्रमाः षडनुक्रमाः ।
दण्डाश्चेति समासेन पुनरेकैव पारणा ॥
शाखाश्च त्रिविधा भूप शाकलायास्क्रमण्डुकाः ।
तेषामध्ययनं प्रोक्तं मण्डलानि च सप्ततिः ॥
चर्चानां परिसंख्या तु चतुर्विंशत् शतानि च ॥
ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ॥
ऋचामशीतिः पादश्च एतत्पारणमुच्यते ।
ऋग्वेदे तु भवेत्संख्या यजुर्वेदस्य श्रूयताम् ॥
षडशीतिर्विभेदेन मया भिन्नाः शिवाज्ञया ।
दशधा चरकास्तत्र क्वरका हारिद्रवीयाः ॥
कठाः प्राच्यकठाश्चैव कपिष्ठल कठास्तथा ।
नारायणीयाः श्वेताश्च श्वेताश्वतरमैत्रायणाः ॥
पुनः सप्त विभेदेन मैत्रायण्यः प्रकीर्तिताः ॥
षडङ्गानि यदाऽधीते स षडङ्गविदुच्यते ।
शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् ॥
षडङ्गानि भवन्त्येतान्युपाङ्गानि शृणुष्व भोः ।
प्रतिपदमनुपदं छन्दो भाषासमन्वितम् ॥

---

1. अल्पसत्वानाम्-पा-

मीमांसान्यायतर्कश्च उपाङ्गाः परिकीर्तिताः ।
परिशिष्टाश्च संख्याता अष्टादश शृणुष्व तान् ॥
सामवेदस्तु विस्तीर्णः सहस्रभेदशः[1] पुरा ।
अनध्यायेष्वधीयन्ते तदा इन्द्रेण धीमता ॥
वज्रेण विहताः शेषास्तान् वक्ष्ये शृणु सत्तम ।
राणायनीयाः कौथुमास्तत्र भेदान् पुनः शृणु ॥
राणायनीयाः सप्तैव सुग्राह्यास्तपतांवर ।
कालवेया महाकालवेया लाङ्गलवैद्युताः ॥
कौथुमानामपि सप्त असुरा वानरायणाः ।
प्रजाला वैनभृत्याश्च परियोग्याः पारिकायणाः ॥
अध्ययनमपि तेषां तु यथावत् कथितं शृणु ।
अष्टौ सामसहस्राणि सामानि च चतुर्दश ॥
अष्टौ शतानि नवतीः दश सवालखिल्यकाः ।
ससुपर्णाश्च प्रख्याश्च एतं सामगणं विदुः
अथो अथर्ववेदस्य नवभेदाः भवन्ति हि ।
पिप्पलादा नर्मदाश्च भूतयानाः कातयस्तथा ॥

---

1. सहस्रभेदशः इत्यत्र सहस्रं शाखाः इत्यर्थः - स्वरसतया प्रतिभाति । चरण-व्यूहेऽपि सामवेदस्य किल सहस्रं भेदाः आसन् इति वर्तते यजुर्वेदस्य षडशीति भेदा इति च । अत्रैव पूर्वापरप्रकरणयोः - तत्र भेदास्तु ऋग्वेदे, यजुर्वेदस्य श्रूयतां, षडशीतिविभेदेन, अथर्ववेदस्य नवभेदा भवन्ति हि, इति भेदशब्द एव प्रयुज्यते, शाखाशब्दपर्यायतया, महाभाष्ये भागवते च । शाखाः तावती जगृहुः इति श्रीधरीय व्याख्या । एवंस्थिते सहस्रं भेदा इत्यत्र देशभेदेन गानप्रकारभेद एवानूद्यते नतु शाखाभेदः इति कैश्चिदभिमन्यते । ऋग्वेदादिषु यथा शाखाभेदः परिगृह्यते तथैव सामवेदेऽपि परिग्राह्यः अर्धजरतीयस्य अन्याय्यत्वात् इति भाव्यते । प्रमाणस्य तुल्यत्वात् ॥

जज्वला ब्रह्मवेदाश्च शौनकी कुनखी तथा ।
वेदऋषिश्चौरविद्या तेषामध्ययनं शृणु ॥
नक्षत्र कल्पो वैतानः संहिताविधिराङ्गिरसम् ।
शान्तिकल्पश्च अथर्वणो भवन्ति ह ॥

सर्वेषामेव वेदानां उपवेदाञ्शृणुष्वतान् ।
ऋग्वेदस्यायुर्वेदो यजुर्वेदे धनुस्तथा ।
सामवेदस्य गान्धर्वः अर्थशास्त्राण्यथर्वणः ॥

ऋग्वेदस्यात्रेयं गोत्रं सोमं देवं विदुर्बुधाः ।
काश्यपं च यजुर्वेदं रुद्रदेवं तु तं विदुः ॥
सामवेदोऽपि गोत्रेण भारद्वाजं पुरन्दरम् ॥

अधिदेवं विजानीयात् वैतानं तु अथर्वणे ।
ब्रह्मदेवं विजानीयद्रूपाण्यस्मत् शृणुष्व भोः ॥
ऋग्वेदः पद्मपत्राक्षः प्रलम्बजठरः शुचिः ।
सुविभक्तग्रीवः कुञ्चित केशश्मश्रुः प्रमाणेनापि वितस्तिः ॥

पञ्चराजतो मौक्तिकजोऽथ पूज्यो
वरप्रदो भक्तियुतो द्विजाय ।
यजुर्वेदः पिङ्गलाक्षः कृशमध्यः
स्थूलगलकपोलस्ताम्रायतवर्णः ॥

कृष्णचरणः प्रसादेन पददीर्घत्वेव चित्रे लिङ्गेऽथवा पूज्यः सर्वकामानवाप्नुयात् ॥ सामवेदो नित्यस्रग्वी सुव्रतः शुचिः शुचिवासाः क्षमी दान्तश्च महादण्डी कांचननयनः आदित्यवर्णो वर्णेव षडरत्निमात्रः ताम्रे वाऽथमणौ देवः पूजितः शुभदो भवेत् ॥

अथर्ववेदस्तीक्ष्णदण्डः कामरूपो विश्वात्मा विकृतक्रूर ऊर्ध्वज्वालः क्षुद्रकर्मा शास्त्रकृती स्थायी नीलोत्पलवर्णो वर्णेन स्वदारतुष्टः ॥

परस्त्रीष्ववशः पद्मरागे वाऽथरुद्राक्षे प्रपूजयेत् ।
सर्वकामानवाप्नोति अथर्वविहितानि च ॥
य एतं नामरूपं तु गोत्रभेदप्रमाणजम् ।
[1]वर्णं वर्णं च यो विद्यात स पुण्यफलभाग्भवेत् ॥

अथ दानविधिं वक्ष्ये रहस्यं परमं मतम् ।
यं विधाय नरो घोरान्निरयान्नोपसर्पति ॥

आम्नाय रूपाणिविधायसम्यक् हैमानि पूर्वोदितलक्षणानि ।
विशुद्धनानामणिभूषितानि ऋगादि वेदक्रमतोनिवेश्य ॥

**गरुडपुराणे** ।

तेषां पूजाविधिः कार्यो गायत्र्या धीमतां वरः ।
व्याहृत्य व्याहृतीः कुर्यादावाहनविसर्जने ॥
मन्त्रैरेतैस्ततः कुर्यादमीषामनुमन्त्रणम् ।
ऋग्वेद पद्मपत्राक्ष ! रक्ष रक्ष क्षिपाशुभम् ॥
शरणं त्वां प्रपन्नोऽस्मि देहि मे हितमद्भुतम् ।
यजुर्वेद नमस्तेऽस्तु लोकत्राणपरायण ॥
त्वत्प्रसादेन मे क्षेमाः निर्विघ्नाः सन्तु सन्ततम् ।
सामवेद महाबाहो त्वं हि साक्षादधोक्षजः ॥

---

1. अत्र वेदचतुष्टयस्य गोत्ररूपादिविषये चरणव्यूहे वैलक्षण्यं दृश्यते ।

प्रसादसुमुखो भूत्वा कृपयाऽनुगृहाण माम् ।
अथर्वन् सर्वभूतानां त्वदायत्ते हिताहिते ॥

शान्तिं कुरुष्व देवेश पुष्टिमिष्टां प्रयच्छ मे ।
इति सम्प्रार्थ्य वेदेशान् विप्रेभ्यः प्रतिपादयेत् ॥
अनधीतवतो वेदान् वेददान विधिस्त्वयम् ।

वह्निपुराणे ।

प्रातरुत्थाय यो वेदान् वेदाङ्गानपि पाठयेत् ।
पृथिवीदान तुल्यं स्यात् फलं तस्य नृपोत्तम ॥

अथ शास्त्रदानं तत्र नन्दिपुराणे ।

शास्त्रे यस्माज्जगत्सर्वं संश्रितं च शुभाशुभम् ।
तस्माच्छास्त्रं प्रयत्नेन दातव्यं शुभकर्मणे ॥

योजनानां सहस्रेऽपि वर्षकोटि शतेन च ।
सद्यस्तिरोहितं वस्तु शास्त्रं दर्शयितुं क्षमम् ॥

अतः शास्त्रात्परं नास्ति त्रिषु लोकेषु किञ्चन ।
ससारनिबिडध्वान्त तरणिस्तत् प्रकीर्तितम् ।

दद्यादेतत् प्रयोगेण नरः सन्तत मादृतः ।
किं न दत्तं भवेत् तेन शास्त्ररत्नं ददाति यः ॥

तत्र सकलशास्त्रप्रधानतया धर्मशास्त्रप्रदानमेव तावदुच्यते ।

नन्दिपुराणे ।

श्रुतिःस्मृतिश्च विप्राणां चक्षुषीद्वे प्रकीर्तिते ।
काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥

तथा । धर्मशास्त्रं नरो दत्वा नाकपृष्ठे महीयते ।
दशमन्वन्तरान् मर्त्यस्तारयेन्नरकात् पितॄन् ॥
आत्मविद्या च पौराणी धर्मशास्त्रात्मिकाच या ।
तिस्रो विद्या इमा मुख्याः सर्वदानक्रियाफले ॥
धर्मशास्त्रं नरोबुध्वा यत् किञ्चिद्धर्ममाश्रयेत् ।
तस्य धर्मः शतगुणो धर्मशास्त्रप्रदस्य च ॥
अतःसदा बुधैर्ज्ञेयं धर्मशास्त्रं विचक्षणैः ।
न तस्य पुण्यसङ्ख्यानं ब्रह्माऽपि गदितुं क्षमः ॥

अग्निपुराणे ।

कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् ।
तद्राजन् स फलं लेभे धर्मशास्त्रप्रदायकः ॥

अथ पुराणदानं तत्र नारदीये ।

वेदाः प्रतिष्ठिता देवि पुराणैर्नात्र संशयः ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥
इतिहासपुराणैश्च कृतोऽयं निश्चलः पुरा ।
यन्नदृष्टं हि वेदेषु तद् दृष्टं स्मृतिभिः किल ॥
उभाभ्यां यन्नदृष्टं हि तत् पुराणेषु गीयते ।

मत्स्यपुराणे ।

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥
पुराणमेकमेवासीदस्मिन् कल्पान्तरेऽनघ ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥

निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया ।
अङ्गानि चतुरो वेदाः पुराणन्यायविस्तराः ॥
मीमांसा धर्मशास्त्राणि परिगृह्यात्मसात्कृतम् ।
मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे ॥
अशेषमेतत् कथितमुदकान्तर्गतेन च ।
श्रुत्वा जगाद च मुनीन् प्रतिवेदं चतुर्मुख. ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत् ततः ।
कालेना ग्रहणं दृष्ट्वा पुराणस्य ततो नृप ॥
व्यासरूपमहं कृत्वा सम्भवामि युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाष्यते ।
अद्यापि देवलोके तत् शतकोटिप्रविस्तरम् ॥
तदर्थोऽत्र चतुर्लक्षं संक्षेपेण निवेदितः ।
पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ॥
नामतस्तानि वक्ष्यामि शृणुध्व मृषिसत्तमाः ।

वराहपुराणे ।

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यन्नवमं तथा ।
दशमं ब्रह्मवैवर्तं लिङ्गमेकादशं तथा ।
वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम् ॥
चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ।
मात्स्यं च गारुडं चैव ब्रह्माण्डमष्टादशं तथा ॥

इति चतुर्वर्गचिन्तामणौ दानखण्डेऽतिदानप्रकरणम् ॥

इति सप्तमम् ।

— × —

अथ अष्टमप्रकरणम् । अथ दश महादानानि उच्यन्ते ।

तत्सङ्ग्रहश्लोकस्तु कूर्मपुराणे ।

कनकं च तिला नागा दासीरथ मही गृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥

तत्र प्रथमनिर्दिष्टतया सुवर्णदानमेव तावदुच्यते ।

वह्निपुराणे राम उवाच ।

क्रोधादिदं मया कर्म कृतं मुनिवरोत्तमाः ।
कथं तस्माद्विमुच्येयं पापात् प्राणिवधादिकात् ॥

इत्युक्ताः धर्मतत्वज्ञाः पापानां पावनं परम् ।
दानं चेह सुवर्णस्य ते तमूचुर्महर्षयः ॥

एतत् पवित्रमतुलं सम्भूतमिह शुश्रुम ।
शम्भोर्बीजं परं तेजो ह्यपत्यं जातवेदसः ॥

समंतु कार्तिकेयस्य रुद्रशुक्रसमुद्भवम् ।
पवित्रत्वात् सुरैः सर्वैर्धार्यते मुकुटादिषु ॥

अग्निस्तु देवतास्सर्वाः सुवर्णं च तदात्मकम् ।
तस्मात्सुवर्णं ददता प्रीताः स्युः सर्वदेवताः ॥

दशपूर्वान् परांश्चैव नरकात् तारयन्ति ते ।
सुवर्णं ये प्रयच्छन्ति प्रोवाचेदं बृहस्पतिः ॥

सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।

अथ तिलदानमुच्यते । आदित्यपुराणे । दुर्वासा उवाच ।

कथं तिलाः समुत्पन्नाः कथंच अवतारिताः ।
एतं मे संशयं देव छेत्तुमर्हस्यशेषतः ॥

भानुरुवाच ।

शृणुष्वावहितो विप्र सर्वं वक्ष्याम्यशेषतः ।
पुरा कृतयुगे विप्र पितरः सर्वं आगताः ॥

तपश्चरन्ति विपुलं तिलार्थे नात्र संशयः ॥
दिव्यं वर्षसहस्रं तु निराहारास्तपस्विनः ॥
तपः कुर्वन्ति विपुलं तिलार्थे मुनिसत्तमाः ।
तदा परिवृताः सर्वैर्देवैश्चैव विशेषतः ॥
प्रजापतिः पितृपतिः साक्षादेत्य पितामहः ।
परितुष्टोऽस्मि वो दद्मि ब्रूत यच्चेप्सितं हि वः ॥

पितरऊचुः ।

तिलान् दद महाभाग काङ्क्षितान् वै न संशयः ।
तिलैर्विना न जीवामो नातिलस्तिष्ठते दिवि ॥

पितामह उवाच ।

गच्छध्वं वै तिला दत्ताः सर्वेषां वो द्विजोत्तमाः ।
परितुष्टाश्च पितरस्तिललाभात् प्रजापतेः ॥

तिलान् यस्तु प्रयच्छेत पितॄणां च विशेषतः ।
अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः ॥
वैशाख्यां पौर्णमास्यां वा तिलान् क्षौद्रेण संयुतान् ।
यः प्रयच्छेद्द्विजाग्र्येभ्यः सर्वपापैः प्रमुच्यते ॥

कृषिभागी बहुधनो जायते नात्र संशयः ।
धर्मराजाय च तिलान् दत्वा चैवेह मानवाः ॥
यमलोकं न पश्यन्ति ब्रह्मलोकं व्रजन्ति ते ॥

ज्येष्ठे मासि तिलान् दत्वा पौर्णमास्यां विशेषतः ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ।
माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्वसमाकीर्णं नरकं न स पश्यति ।

भीष्म उवाच ।

सर्वेषामेव दानानां तिलदानं परं स्मृतम् ।
सर्वपापहरं तद्धि पवित्रं स्वर्ग्यमेव च ।

मत्स्यपुराणे ।

विष्णोर्देहसमुद्भूताः कुशाः कृष्णतिलास्तथा ।
धर्मस्य रक्षणायालमेतत् प्राहुर्दिवौकसः ॥

विष्णुधर्मे ।

तिला गावो हिरण्यं च अन्नं कन्या वसुन्धरा ।
दत्तान्येतानि विधिवत् तारयन्ति महाभयात् ॥

अत्रेदं दानवाक्यम् । ॐ अद्यामुकसगोत्राय - इत्यादि इदं तिलपूर्णं ताम्रपात्रं ससुवर्णमशेषपापक्षयकामः तुभ्यमहं संप्रददे न मम इति ।

ॐ अद्यामुकगोत्राय - इत्यादि एतत्तिलताम्रपात्रदानप्रतिष्ठार्थमिदं सुवर्णं दक्षिणां तुभ्यमहं संप्रददे न मम । इति तिलपात्रदानविधिः ।

कूर्मपुराणे

तिलपूर्णं ताम्रपात्रं सहिरण्यं द्विजातये ।
प्रातर्दत्वा तु विधिवत् दुःस्वप्नं प्रतिहन्ति सः ॥

तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम् ।
ताम्रपात्रं दशपलं जघन्यं च प्रकीर्तितम् ॥

द्विगुणं मध्यमे प्रोक्तं त्रिगणं चोत्तरे स्मृतम् ।
सुवर्णं दक्षिणां दत्वा सर्वपापक्षयो भवेत् ॥

इति चतुर्वर्गचिन्तामणौ दानखण्डे अष्टमप्रकरणम् ।

## अथ नवमप्रकरणम्

### अथ गजदानम् ।

लिङ्गपुराणे ।

गजदानं प्रवक्ष्यामि यथावदनुपूर्वशः ।
द्विजाय वाऽथ दातव्य देवदेवाय वा पुनः ॥

गजं तु लक्षणोपेतं हैमं वा राजतं तु वा ।
सहस्रनिष्कमात्रेण तदर्धेनापि कारयेत् ॥

तदर्धार्धेन वा कुर्यात् सर्वलक्षणभूषितम् ।
पूर्वोक्तदेशकाले च देवाय विनिवेदयेत् ॥

अष्टम्यां वा प्रदातव्यः शिवाय परमेष्ठिने ।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये ॥

शिवमुद्दिश्य दातव्यः शिवं संपूज्य पूर्ववत् ।

पूर्ववदिति - लिङ्गपुराणोक्ततुलापुरुषदानवदित्यर्थः ।

एतद्यः कुरुते दानं शिवभक्तिसमन्वितः ।
स्थित्वा स्वर्गे चिरं कालं राजा राजपतिर्भवेत् ॥

अथ दासीदानम् । तत्र वह्निपुराणे ।

गृहदानं श्रुतं राजन् दासीदानं ततः शृणु ।
तव भक्त्या प्रवक्ष्यामि महासौख्यप्रदायकम् ॥

चतुर्णामाश्रमाणां हि गृहस्थः श्रेष्ठ उच्यते ।
गृहस्थाच्च गृहं राजन् सुगृहे तु वरस्त्रियः ॥

अहिरण्यमदासीकमलशास्त्राद्यमगोरसम् ।
गृहंकृपणवृत्तीनां नरकस्यापरो विधिः ॥

अदण्डवासिकं ग्राममदासीकं च यद्गृहम् ।
अवाज्यभोजनं यच्च वृथा तदिति मे मतिः ॥

विभ्रदाभरणा दास्यो यद्गृहं समुपासते ।
तत्रास्ते पङ्कजकरा लक्ष्मीः क्षीरोदशायिनी ॥

न तत्रास्ति गृहे शौचं न सुखं व्यवहारजम् ।
यत्र कर्मकरी नास्ति सर्वकर्मकरी सदा ॥

इदमिह दानवाक्यम् । ॐ अद्यामुकसगोत्राय - इत्यादि इमां दासीं सुवर्णालङ्कारवतीं गन्धपुष्पाद्यलङ्कृतामक्षयसुखप्राप्तिकामः तुभ्यमहं सम्प्रददे न मम - इति ।

ॐ अद्यामुकसगोत्राय - इत्यादि एतद्दासीदानप्रतिष्ठार्थं दक्षिणामेतत्सुवर्णं तुभ्यमहं सम्प्रददे न मम - इति ।

अथ रथदानम् । कूर्मपुराणे ।

रथं चतुर्बलीवर्दैरूढं धान्यावृतं त्रिधा ।
वित्तानुसारात् सर्वैश्च रथोपकरणैर्युतम् ॥
सदक्षिणं च विप्राय दत्वा शिवपुरं व्रजेत् ।

"धान्यावृतमिति" अष्टादश धान्यानि परिभाषायां व्याख्यातानि "त्रिधेति" त्रि....क सुवर्णदक्षिणानुसारात् उत्तममध्यमकनिष्ठभेदेन त्रैविध्यम् । "रथोपकरणानि" युगयोक्त्रप्रतोदवरत्रादीनि ।

तत्र दानवाक्यम् । ॐ अद्यामुकसगोत्राय - इत्यादि चतुर्बलीवर्दैर्युक्तमष्टादशधान्यपरिवृतं सकलस्वोपस्करयुतमेतं रथं विश्वकर्मदैवतं निरत्ययस्वर्गादिसुखकामः तुभ्यमहं सम्प्रददे न मम । इति ।

दानमन्त्रः ।

गन्त्रीमिमां प्रयच्छामि विश्वकर्माधिदैवताम् ।
दानेनानेन भगवान् प्रीयतां मे परः पुमान् ॥
एवं प्रदाय विधिवत् गन्त्रीं मन्त्रेण मानवः ।
विमानेनार्कवर्णेन देववत् दिवि मोदते ॥
इह लोके भवेद्राजा भगवान् धर्मवत्सलः ।

'गन्त्री' नाम रथविशेषः ।

अथ क्रमप्राप्तस्य महीदानस्यातिदानप्रकरणे निरूपितत्वाद्रथदानानन्तरं गृहदानमारभ्यते ।

तत्र संवर्तः ।

गृहदाता सुखी प्राज्ञो वितृष्णः सर्ववस्तुषु ।
प्रज्ञासुखविवृद्ध्यर्थं पात्रे देयमथो गृहम् ॥

बृहस्पतिः ।

रसान्नोपस्करयुतं गृहं विप्राय योऽर्पयेत् ।
न हीयते तस्य वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥

आह व्यासः ।

गृहं दीपप्रभोद्योतशयनासनभाजनैः ।
उपस्करैश्च संपूर्णं सर्वधान्यप्रपूरितम् ॥

ब्राह्मणाय दरिद्राय सुशीलाय ददाति यः ।
तथाध्ययनशीलाय शृणु तस्यापि यत्फलम् ॥
देवैः पितृगणैर्युक्तो ब्रह्मर्षिमनुजर्षिभिः ।
तृप्ता वर्षशतान्येव दश तिष्ठन्त्यनामयाः ॥
तस्मादिह समागत्य सप्तद्वीपाधिपो भवेत् ।
बहुप्रदो बहुधनो द्विजो वा वेदपारगः ॥

अत्रेदं दानवाक्यम् । ॐ अद्यामुकसगोत्राय - इत्यादि इदं गृहं शयनासनभाजनोपस्कारयुतं सर्वधान्यप्रपूरितं सर्वदैवतममुककामस्तुभ्यमहं संप्रददे न मम इति ।

ॐ अद्यामुकसगोत्राय - इत्यादि एतद् गृहदानप्रतिष्ठार्थं दक्षिणामिदं हिरण्यं संप्रददे न मम । इति ।

इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम् ।
तव विप्र प्रसादेन ममास्त्वभिमतं फलम् ॥
एवमेकैकशो दत्वा प्रणिपत्य समर्पयेत् ।
स्वस्तीति ब्राह्मणैर्वाच्यं कोऽदादिति च पूजितैः ॥

बृहस्पतिस्मृतौ पुनरयं मन्त्रः ।

गृहं मम विभूत्यर्थं गृहाण त्वं द्विजोत्तम ।
प्रीयतां मे जगद्योनिर्वास्तुरूपी जनार्दनः

ब्रह्मवैवर्त्ते मठदानमधिकृत्याह मार्कण्डेयः ।

यावत् संतिष्ठते भूमौ स मठो जनसेवितः ।
तावद्वर्षप्रमाणेन कर्त्ता च शुभभाग्भवेत् ॥

यः कारयेन्मठं शैलं शिवायतनसन्निधौ ।
स शैवं पदमासाद्य कल्पायुतशतं वसेत् ॥
तस्मात् पुण्यक्षयादेत्य पृथिवीमीश्वरप्रियः ।
लभेद्दीर्घयुरारोग्यं सम्पदैश्वर्यसन्ततिम् ॥
त्रेतायुगे नृपाधीशः सहस्रक्रतुकृद्भवेत् ।
विष्णोरायतने पुण्ये सन्निधौ कारयेन्मठम् ॥
यः स स्यात् सकलैश्वर्यसम्पदामाश्रयः सदा ।

यमः । आसनं पादशौचं च दीपमन्नं प्रतिश्रयम् ।
ददात्येतानि यः पञ्च स यज्ञः पञ्चदक्षिणः ॥
अन्नदः प्राणदो ज्ञेयो रूपदो वस्त्रदः स्मृतः ।
स हि सर्वप्रदो नाम यो ददाति प्रतिश्रयम् ॥
अश्वमेधसहस्रस्य राजसूयशतस्य च ।
(पौ) पुण्डरीकसहस्रस्य योगिष्ववसथो नरः ॥

दक्षः । आश्रमे च यतिर्यस्य विश्राम्यति मुहूर्तकम् ।
किं तस्यान्येन धर्मेण कृतकृत्यो हि स स्मृतः ॥
जन्मप्रभृति यत् पापं गृहस्थेन तु सञ्चितम् ।
निर्मार्जयति तत् सर्वमेकरात्रोषितो यतिः ॥

बृहस्पतिः ।

आगतस्यासनं दद्याच्छ्रान्तस्य शयनं तथा ।
तृषितस्य तु पानीयं क्षुधितस्य तु भोजनम् ॥
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
एष साधारणो धर्मश्चातुर्वर्ण्योऽब्रवीन्मनुः ॥

प्रीयते स्वागतेनाग्निरासनेन शतक्रतुः ।
पितरः पादशौचेन भोजनेन प्रजापतिः ॥

मनु-विष्णु-शातातपाः ।

येषामनश्नन्नतिथिर्विप्राणां व्रजते गृहात् ।
ते वै खरत्वमुष्ट्रत्वमश्वत्वं प्रतिपेदिरे ॥
यस्य चैव गृहे विप्रो वसेत् कश्चिदभोजितः ।
न तस्य देवाः पितरो हव्यं कव्यं च भुञ्जते ॥
एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते ॥

गौतमः ।

'असमानग्रामोऽतिथिरेकरात्रिकोऽधिवृक्षसूर्योपस्थायी' -
इति । एकरात्रिक - एकरात्रवसनशीलः ।
अधिवृक्षसूर्यशब्दः सायङ्कालपरः ।

दक्षः । अभ्युत्थानमिहागच्छपूर्वालापः प्रियान्वितः ।
उपासनमनुव्रज्या कार्याण्येतानि यत्नतः ॥

उपासनं – समीपे स्थितिः ।

अथकन्यादानमुच्यते । तत्र लिङ्गपुराणे ।

कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम् ।

बृहस्पतिः ।

सहस्रमेव धेनूनां शतं चानडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥

दशवाजिसमा कन्या भूमिदानं च तत्समम् ।
तस्मात्सर्वेषु दानेषु कन्यादानं विशिष्यते ॥

**काश्यपः ।**

अग्निष्टोमातिरात्राणां शतं शतगुणं समम् ।
लभते कन्यकां दत्वा मन्त्रहोमैरलङ्कृताम् ॥

**नारदीयपुराणे ।**

चतुर्णामाश्रमाणां तु गृहस्थः श्रेष्ठ उच्यते ।
गृहस्थाच्च गृहं श्रेष्ठं गृहाच्छ्रेष्ठा वरस्त्रियः ॥
तस्मात् कन्याप्रदानस्य नान्यदानैस्तुला स्मृता ।
अतः प्रदेया विद्वद्भिः कन्या सर्वार्थकाङ्क्षिभिः ।

**याज्ञवल्क्यः[1] ।**

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

**स्कन्दपुराणे ।**

आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।
धर्मेण विधिना दातुमसगोत्रोऽपि युज्यते ॥

---

1. अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् ॥
एषां पित्रादीनां पूर्वस्य पूर्वस्याभावे परः परः कन्याप्रदः प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्न भवति । अतो यस्याधिकारः सोऽप्रयच्छन् भ्रूणहत्यामृतौ ऋतौ आप्नोति । एतच्च उक्तलक्षणवरसंभवे वेदितव्यम् । यदा पुनः दातॄणामभावः तदा कन्यैव गम्यं गमनार्हं उक्तलक्षणं वरं स्वयमेव वरयेत् ॥ मिताक्षरा अध्याये १ श्लो. ६३, ६४.

विवाहाधिकारिणमाह मनुः।

वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥
गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥

अथाह संवर्त्तः।

अष्टवर्षा भवेद् गौरी नवमे नग्निका भवेत्।
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता॥

आहाङ्गिराः।

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जनकृता श्यामा कुचहीना तु नग्निका॥

अत्राह मनुः।

ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथाऽऽसुरः।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमो मतः॥
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः।
राक्षसं क्षत्रियस्यैवमासुरं वैश्यशूद्रयोः॥

बोधायनः। श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने देयेति स ब्राह्मः।

मनुः। सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य तु।
कन्यादानं समभ्यर्च्य प्राजापत्यो विधिः स्मृतः॥
ज्ञातिभ्यो द्रविणं दत्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते॥

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः सच विज्ञेयो मैथुन्यः कामसंभवः ॥

हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात् ।
प्रसह्यकन्याहरणं राक्षसो विधिरुच्यते ॥

सुप्तां मत्तां रहश्छद्म कृत्वा यत्रोपनीयते ।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः ॥

इदमिह दानवाक्यम् । ॐ अद्यामुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्राय अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्राय अमुकसगोत्रायामुकप्रवरायामुकशर्मणे वराय, अमुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीममुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पौत्रीममुकसगोत्रस्यामुकप्रवरस्यामुकशर्मणः पुत्रीममुकसगोत्राममुकप्रवराममुकाभिधानामिमां कन्यां सालङ्कारां प्रजापतिदैवताममुककामः तुभ्यमहं संप्रददे ।

एतत्कन्यादानप्रतिष्ठार्थं दक्षिणामिदं हिरण्यं संप्रददे न मम ।
इत्युच्चार्य दद्यात् ।

## अथ राजस्थापनम् ।

आदित्यपुराणे । बृहस्पति श्रुतौ च ।

भूमिपालं च्युतं राज्याद्यस्तु संस्थापयेत् पुनः ।
तस्य वासो मुनीन्द्रेह नाकपृष्ठे न संशयः ॥

तथा । स्थानभ्रष्टस्य यः कुर्याद्भूयस्त्वारोपणं नरः ।
नाकलोकमवाप्नोति चिरं तेनेह कर्मणा ॥

इति चतुर्वर्गचिन्तामणौ दानखण्डे नवमप्रकरणम् ॥

—×—

## अथ दशमप्रकरणम्

अथ कृष्णाजिनदानान्यभिधीयन्ते ।
तत्संग्रहश्लोकास्तु सौरपुराणे ।

कृष्णाजिनं च महिषी मेषी च दश धेनवः ।
ब्रह्मलोकप्रदायीनि तुलापुरुष एव च ॥

**तत्र कृष्णाजिनदाने यमः ।**

गोभूहिरण्यसंयुक्तं [1]मार्गमेकं ददाति यः ।
सर्वदुष्कृतकर्माऽपि सायुज्यं ब्रह्मणो व्रजेत् ॥

**मरीचिः ।**

कृष्णाजिनोभयमुखीं यो दद्यादाहिताग्नये ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥

**आहविष्णुः** । अथ वैशाख्यां पौर्णमास्यां कृष्णमृगाजिनं सखुरं सशृंगं रौप्यखुरं मुक्तालाङ्गूलभूषितं कृत्वाऽऽविकेन च वस्त्रेण प्रसारिते प्रसारयेत् । ततस्तिलैः प्रच्छादयेत् सुवर्णनाभं च कुर्यात् अहतेन वासोयुगेन प्रच्छादयेत् । सर्वरत्नगन्धैश्चालङ्कुर्यात् । चतसृषु च दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिमधुसर्पिः पूर्णानि निधायाहिताग्नये ब्राह्मणाय वासोयुगप्रच्छादिताय दद्यात् । इति ।

इदमिह दानवाक्यम् । ॐ अद्यामुकगोत्रायेत्यादि इदं कृष्णाजिन कुशोपरिगतकमण्डलोपरिस्थितं वस्त्रयुगप्रच्छादित-

---

1. मार्गं-मृगचर्म

तिलराशिं सुवर्णशृङ्गं रौप्यखुरं रौप्यदन्तं मुक्ताफललाङ्गूलं सुवर्णनाभं पञ्चरत्नालंकृतं गन्धपुष्पान्वितं चतुर्दिगवस्थितघृत-क्षीरदधिमधुपूर्णपात्रचतुष्टयसहितं सकांस्यपात्रं शिवदैवतममुक-कामः तुभ्यमहं सम्प्रददे न मम इति ।

ॐ अद्यामुकसगोत्राय - इत्यादि एतत्कृष्णाजिनदानप्रति-ष्ठार्थं दक्षिणामिद सुवर्णं तुभ्यमहं सम्प्रददे न मम इति ।

## अथ महिषीदानम् ।

विश्वामित्रः ।

महिषीं सुप्रजां राजन् क्षीराढ्यां युवतीं तथा ।
दत्वा चैव तु कार्तिक्यां धेनूपस्करसंयुताम् ॥
दशधेनुप्रदानेन यत् फलं तत्समश्नुते ।
प्राप्नोति पुत्रपौत्रांश्च सूर्यलोकं च गच्छति ॥

भविष्योत्तरे श्रीभगवानुवाच ।

या स्त्री ददाति महिषीं सा राजमहिषी भवेत् ।
महाराजः पुमान् राजन् व्यासस्य वचनं यथा ॥

यज्ञयाजी भवेद्विप्रः क्षत्रियो विजयी भवेत् ।
वैश्यस्तु धान्य धनवान् शूद्रः सर्वार्थसंयुतः ॥

इति चतुर्वर्गचिन्तामणौ दानखण्डे दशमप्रकरणम् ॥

## अथ एकादशप्रकरणम् ।

## अथ देवतादानानि ।

विश्वोपकृतिशीलेन तेन हेमाद्रिसूरिणा ।
क्रमेण देवतादानमिदानीमुपवर्ण्यते ॥

तत्र बोधायनः ।

सौवर्णं राजतं ताम्रं कारयेत् कांस्यतोऽपि वा ।
यद्वार्कमूलकाष्ठेन [1]विघ्नं विभवतो नरः ॥

पुष्करं कल्पयेद्धैमं सौवर्णं लोचनद्वयम् ।
आखुं च कल्पयेत्तस्य यथा देवो विनिर्मितः ।
मन्त्रेणानेन विधिवद्दक्षिणाभिमुखाय तु ॥

विनायक गणेशान सर्वदेवनमस्कृत ।
पार्वतीनन्दन मम गुल्ममाशु विनाशय ॥ इति दानमन्त्रः ।
कृतेनानेन दानेन नीरोगो जायते नरः ॥

एवं कुर्याद्गणपतेर्दानं व्याधिविमोचनम् ॥ इति विघ्नेश-दानविधिः ।

अथ सरस्वतीदानं वायुपुराणे ।

वाग्विरोधं गुरोःकृत्वा भवेद्गद्गदवाङ्नरः ।
तस्य वक्ष्ये प्रतीकारं दानेन ऋषिभाषितम् ॥

पलेनाथ तदर्धेन तदर्धार्धेन वा पुनः ।
सारस्वतीं च प्रतिमां कुर्याद्भुजचतुष्टयाम् ॥

वरदं चाक्षसूत्रं च बिभ्रतीं दक्षिणे करे ।
पुस्तकं चाभयं वामे दधानां हंसवाहनाम् ॥

वागीश्वरेण मन्त्रेण पूजयेत् सितण्डुलैः ।
श्वेतपुष्पैः श्वेतगन्धैः संस्कृत्य विधिपूर्वकम् ॥

1. विघ्नं = विघ्नराजं

ब्राह्मणः सर्वशास्त्रज्ञः कुशलः सर्वसम्मतः ।
मन्त्रवादप्रवीणश्च तेन होमं च कारयेत् ॥
पायसं जुहुयादष्टशतं शालिमयं तथा ।
जुहुयात् समिधश्चापि तथाऽऽज्यं च तिलान्यपि ॥
'सरस्वति प्रेदमव' इति वा मन्त्र इष्यते ।
कृते ब्रह्मोद्वासने तामाचार्याय निवेदयेत् ॥
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ।
संपूज्य ब्राह्मणं सम्यग्वस्त्रालङ्कारपूर्वकम् ॥
या वक्त्रे ब्रह्मणो देवी या सा वागीश्वरी परा ।
ब्रह्मविष्णुशिवैश्चान्यैः पूजिता सर्ववन्दिता ।
तुष्टा भवतु दानेन दत्तेनानेन वाक् परा ।
वाग्विरोधं गुरोः कृत्वा यन्मे गद्गदभाषणम् ॥
तत् सर्वं क्षपय क्षिप्रं ब्राह्मी त्वं लोकपावनी ।
इति दानमन्त्रः
अनुज्ञाप्य ब्राह्मणं तं स्वयं भुञ्जीत मानवः ॥
इति सरस्वतीदानविधिः ।

तथा । स्वरोपघाती वाचां च हर्ता मूकः प्रजायते ।
वक्ष्ये तस्य प्रतीकारं दानहोमैर्नरोत्तमः ॥
पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
राजतेन सुशुद्धेन कुर्यात् प्रतिकृतिं शुभाम् ॥
सरस्वतीं चतुर्हस्तां पाशाङ्कुशकमण्डलुम् ।
तथैवाभयहस्तां च श्वेतवस्त्रेण संयुताम् ॥

श्वेतमाल्यैः श्वेतगन्धैर्मूलमन्त्रेण पूजयेत् ।
होमं च कारयेत्तत्र समिदाज्यचरूत्कटम् ॥
'सरस्वति प्रेदमव' इति मन्त्रश्च चोदितः ।
आचार्यः सर्वशास्त्रज्ञः स्वाचारः संयतेन्द्रियः ॥
धर्मज्ञः सत्यवादी च मेधावी सुपदस्तथा ।
एवं लक्षणसंयुक्तः सर्वत्राचार्य इष्यते ॥
प्रणम्य गृहमानीय पूजयेद्भक्तिपूर्वकम् ।
एवं होमं च कृत्वा तु पूजयेच्च सरस्वतीम् ॥
सरस्वत्यै नम इति यथालिङ्गं तु मन्त्रतः ।
तस्मै हुतवते तां तु देवीं दद्यात् सदक्षिणाम् ॥
मन्त्रेणानेव विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ।
सौम्ये देवि महाभागे सर्वदेवनमस्कृते ॥
पद्मासनगते सर्वजगतामार्तिहारिणि ।
स्वरोपघातान्मदायं प्रज्ञाजाड्यमपानुद । इति दानमन्त्रः ।
एवं दत्वा प्रतिकृतिं सरस्वत्याः प्रयत्नतः ।
स्वरोपघातजनितात् प्रज्ञाजाड्याद्विमुच्यते ॥
मेधाकरमिदं दानं सर्वेषां च विशेषतः ।
विशेषश्चायमुदितो जपस्योपक्रमो भवेत् ॥
तदेतत्प्रथमं दानं कृत्वा जपमुपक्रमेत् ।
नैवेद्यं पायसं दद्यात् स्वयं तदुपयोजयेत् ॥
पूर्वेद्युरुपवासं च कृत्वैवोपक्रमो भवेत् ।
कायशुद्धिश्च कर्तव्या यावता लवणो भवेत् ॥
इत्यपरसरस्वतीदानविधिः ।

**अथ घण्टादानं ब्रह्मवैवर्तपुराणे ।**

गुरुणा ह्यननुज्ञातो यो वेदाध्ययनं चरेत् ।
स प्रज्ञया विहीनस्तु संसारे जायते नरः ॥
वक्ष्यामि तत्प्रतीकारं शुद्धकांस्यमयीं दृढाम् ।
शोभनां घाटयेत् घण्टां शुभरेखाविभूषिताम् ॥
पलैस्तु कुर्याद्विंशद्भिस्त्रिंशद्भिर्वा तदर्धतः ।
सुस्वरां तामतिश्लक्ष्णं पञ्चगव्येन धावयेत् ॥
श्वेतवस्त्रेण संवीतां तण्डुलोपरि विन्यसेत् ।
तण्डुलानां परीमाणं द्रोणानां त्रयमेव च ॥
तदर्धमथ वा ग्राह्यं परीमाणं स्वशक्तितः ।
आचार्यः सर्वशास्त्रज्ञो वेदवेदान्तपारगः ॥
धर्मशास्त्रे च कुशलः स्वाचारः [1]सञ्जितेन्द्रियः ।
आहूय परया भक्त्या स्वयमेव गृहं गतः ॥
तेनैव कारयेत्पूजां घण्टायाः शास्त्रचोदितैः ।
उपचारैः षोडशभिर्मन्त्रेणानेन भक्तितः ॥
आवाहयेत्तु वागीशां घण्टायां परमेश्वरीम् ।
'एह्येहि देवि सर्वेशि घण्टायां सन्निधिं कुरु ।
सर्वसत्त्वोपकारी त्वं ज्ञानमुद्रे परात्परे ।'
एवमावाह्य तां घण्टां ब्राह्मणं चापि पूजयेत् ॥

**आवाहन मन्त्रः ।**

'ब्रह्मजज्ञान' मन्त्रेण घण्टां पूज्य तथाऽम्बरम् ।
मन्त्राध्यायोक्तमार्गेण प्रतिष्ठाप्याथ भक्तितः ॥

1. संयतेन्द्रियः इति पाठान्तरम् ।

होमं कुर्यात् प्रयत्नेन समिदाज्यतिलैरपि ।
नैवेद्यं पायसं दद्यात् देव्यै च ब्रह्मणे तथा ॥

"सरस्वतिप्रेदमव"मन्त्रः सर्वत्र सम्मतः ।
तस्मै हुतवते दद्यात् तां घण्टां पूजिताय तु ॥

मन्त्रेणानेन विधिवद्रोगी पूर्वमुखः शुचिः ।
उदङ्मुखोपविष्टाय सतोयामथभक्तितः ॥

'गुरोरवज्ञया यच्च स्वाध्यायाध्ययनं कृतम् ।
सरस्वति जगन्मातर्जगज्जाड्यापहारिणि ॥

साक्षाद्ब्रह्मकलत्रं त्वं विष्णुरुद्रादिभिः स्तुता ।
तन्ममाध्ययनोत्पन्नं जाड्यं हर वरानने ॥

घण्टानादेन तुष्टा त्वं ब्रह्माणी लोकपावनि ।'
एवं दानं च दत्त्वा च तमाचार्यं क्षमाप्य च ॥
अन्येभ्य. शक्तितो दद्यात् ब्राह्मणेभ्यश्च भोजनम् ।

इति घण्डादानविधिः ।

अथ लक्ष्मीदानम् । लिङ्गपुराणे ।

लक्ष्मीदानं प्रवक्ष्यामि महदैश्वर्यवर्धनम् ।
लूतादिव्रणनाशाय विशेषेण शिवोदितम् ॥

पूर्वोक्तमण्टपं कृत्वा वेदिकोपरि मण्डले ।
श्रीदेवीमतुलां कृत्वा हिरण्येन यथाविधि ॥

सहस्रेण तदर्धेन तदर्धार्धेन वा पुनः ।
अष्टोत्तरशतेनापि सर्वलक्षणसंयुताम् ॥

मण्डले विन्यसेल्लक्ष्मीं सर्वालङ्कारसंयुताम् ।
तस्यास्तु दक्षिणे भागे स्थण्डिले विष्णुमर्चयेत् ॥
अर्चयित्वा विधानेन श्रीसूक्तेन सुरेश्वरीम् ।
अर्चयेद्विष्णुगायत्र्या विष्णुं विश्वगुरुं हरिम् ॥
आराध्य विधिना सिद्धिं पूर्वतो होममारभेत् ।
समुद्धृत्य विधानेन आज्याहुतिमुपाचरेत् ॥
पृथगष्टोत्तरशतं हावयेत् ब्राह्मणोत्तमः ।

श्रीसूक्तं - हिरण्यवर्णां हरिणीमित्यादि । विष्णुगायत्रीतु लिङ्गपुराणोक्तैव ।

नारायणाय विद्महे वासुदेवाय धीमहि । तन्नोविष्णुः प्रचोदयात् ॥ इति ।

कामिके तु ।

श्रीमन्त्रेण यजेल्लक्ष्मीं श्रीसूक्तेनाथ वाऽर्चयेत् ।
पूर्ववच्छिवपूजा च होमश्चैव विशेषतः ॥
एकहोमं तु वा कुर्यात् प्रागुक्तविधिना गुरुः ।
सहस्रकलशाद्यैश्च श्रियमर्च्य श्रियं ददेत् ॥

इति लक्ष्मीदानविधिः ॥

अथ नारायणदानम् । ब्रह्मप्रोक्तम् ।
यज्ञविघ्नकरो मर्त्यो जायते चान्त्रवृद्धिमान् ।
वक्ष्यामि तत्प्रतीकारं दानहेमादिकर्मणा ॥
कुर्यात् स्वर्णमयीं मूर्तिं शुभां नारायणस्य तु ।
व्यावहारिकनिष्काभ्यामेकेनाथ तदर्धतः ॥

नारायणलक्षणमुक्तं हेमहरिरथदाने ।

प्रक्षाल्य पञ्चगव्येन स्थापयेत् कुङ्कुमोपरि ।
श्वेतवस्त्रेण संवेष्टय गन्धमाल्यैः समर्चयेत् ॥
उपचारैः षोडशभिराचार्यो वैष्णवः शुचिः ।
सर्वशास्त्रार्थतत्त्वज्ञो ब्रह्मविद्यासु निष्ठितः ॥
होमं च कारयेत् तत्र ह्याग्नेय्यां दिशि शास्त्रतः ।
समिदाज्यतिलैश्चैव मूलमन्त्रेण वै समित् ॥
आज्यं नारायणायेति तिलान् व्याहृतिभिर्हुनेत् ।
रोगी तथार्चयेद्देवं नारायणमनामयम् ॥

मूलमन्त्रेण विधिवन्नैवेद्य चरुरिष्यते ।
नमोऽन्त नाम सोङ्कारं मूलमन्त्रः प्रकीर्तितः ॥
ततस्तां प्रतिमां दद्यात् प्राङ्मुखाय ह्युदङ्मुखः ।
मन्त्रेणानेन विधिवद्भक्त्या परमया युत. ।
नारायण जगन्नाथ शङ्खचक्रगदाधर ।
पूर्वजन्मनि यज्ञादेर्विघ्नाद्यद्वैकृतं मम ॥

आन्त्रवृद्धिमहारोगं दानेनानेन तोषितः ।
चक्रहस्त गदापाणे शमयाशुजगत्पते ॥

एवं दत्वातु तं देवं क्षमाप्य ब्राह्मण ततः ।
विप्राणां भोजनं दद्यात् स्नात्वा भुञ्जीत बन्धुभिः ॥

एवं कृत्वा समाप्नोति नीरोगत्वं नरो भुवि ।
आरोग्ययुक्तो नित्यं स सुचिरं सुखमेधते ॥

इति नारायणमूर्ति दानविधिः ।

अथ गरुडमूर्ति दानविधिः । पद्मपुराणे ।

जन्मान्तराक्षिरोधेन जायते ह्यक्षिवेदना ।
वक्ष्यामि तत्प्रतीकारं ब्रह्मणा भाषितं पुरा ॥
पलेन कारयेद्धेम्ना गरुडं विष्णुवाहनम् ।
राजतौ च तथा पक्षौ रत्नैर्नद्धौ सुविस्तृतौ ॥
कर्तव्यं चाक्षियुगलं माणिक्याभ्यां प्रकल्पयेत् ।
पादयोः स्वर्णकटकं रत्नाभ्यां परिकल्पयेत् ॥
ग्रैवेयकं स्वर्णमयं ग्रीवायामपि विन्यसेत् ।
वासिकां वज्रवैडूर्यं मौक्तिकोपरि कल्पयेत् ॥
वस्त्रैर्नानाविधैर्नद्धमलङ्कृत्य शुभाकृतिम् ।
स्थापयेत् पुरतो विष्णोः प्रीत्यर्थं च खगाधिपम् ॥
गन्धपुष्पाक्षतैः वस्त्रैः पूजयेत् ब्राह्मणोत्तमः ।
वेद वेदाङ्गकुशलो ब्रह्मविद्यासु निष्ठितः ॥
होमश्च तत्र कर्तव्यो मन्त्रैस्तद्वाचकैः शुभैः ।
यद्वा गरुडगायत्र्या समिदाज्यतिलादिभिः ॥
अग्नेः प्रतिष्ठा कार्या तु स्वगृह्योक्तविधानतः ।
पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः ॥
तस्मै हुतवते दद्याच्छौरिप्रीत्यर्थमादृतः ।
भक्त्या सम्पूज्य विधिवत् प्राङ्मुखायाक्षिरोगवान् ।
देवदेव जगन्नाथ लक्ष्मीप्रिय परात्पर ।
वाहनस्य प्रदानेन तुष्टः कर्मविपाकजम् ॥
अक्षिरोगं : गन्नाथ नारायण जगन्मय ।
पुष्पं वा पटलं वाऽपि वातरक्तमथापि वा ॥

रक्तं वाप्यथ रक्तान्च्यं तथाऽन्यद्बुद्बुदादिकम् ।
नाशय ।

इति दानमन्त्रः ।

ततो विसृज्य विप्रेन्द्रं शिष्टैरिष्टैश्च बन्धुभिः ॥
स्नात्वा विप्रान् भोजयित्वा सुखी भवति मानवः ।

अथ गरुडगायत्र्यः ।

तत् पुरुषाय विद्महे पक्षिराजाय धीमहि ।
तन्नः सुपर्णः प्रचोदयात् ॥
तत् पुरुषाय विद्महे वायुवेगाय धीमहि ।
तन्नोऽमृतमथनः प्रचोदयात् ॥
तत् पुरुषाय विद्महे वैनतेयाय धीमहि ।
तन्नस्तार्क्ष्यं प्रचोदयात् ॥
तत् पुरुषाय विद्महे सुवर्ण पक्षाय धीमहि ।
तन्नो गरुडः प्रचोदयात् ॥

इति गरुडमूर्तिदानविधिः ।

अथोमामहेश्वदानम् । आह बोधायनः ।

ब्राह्मणाङ्गानि यो हिंस्याद्रुद्ररोगी भवेत्तु सः ।
तस्योपशमनं वक्ष्ये सुवर्णेन तु कारयेत् ॥
तदर्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
उमामहेश्वरं रूपं वृषभेण त्वधिष्ठितम् ॥
चतुर्भुजं तु द्विभुजामुमां कुर्याद्विचक्षणः ।
एकवक्त्रो भवेच्छम्भुस्त्रिनेत्रश्च महाभुजः ॥

अक्षमालां त्रिशूलं च तस्य दक्षिणहस्तयोः ।
देवीपृष्ठगतश्चैको वरदश्चापरः करः ॥

वामोत्सङ्गगता देवी शिवपृष्ठैक पाणिका ।
वृषभो राजतश्चात्र कार्यो घण्टादिसंयुतः ॥

स्वशक्त्या, वित्तशाठ्यं तु कुर्वतो निष्फलं भवेत् ।
तत्राप्यारोप्य देवेशमुमया सहितं प्रभुम् ॥

वस्त्रैर्माल्यैस्तथा गन्धैर्मूलमन्त्रेण पूजयेत् ।
ततो ब्राह्मणमाहूय दरिद्रं धर्मकोविदम् ॥

श्रुतवृत्तोपसम्पन्नं शान्तं चैवात्मवेदिनम् ।
वस्त्राङ्गुलीयकैस्तस्य पूजां भक्त्या प्रकल्पयेत् ॥

होमं च कारयेत् तेन समिदाज्यतिलैरपि ।
मन्त्रश्च रुद्रगायत्री सर्वत्रेति विनिश्चयः ॥

रुद्रगायत्री तु लिङ्गपुराणे ।

सर्वेश्वराय विद्महे शूलहस्ताय धीमहि ।
तन्नोरुद्रःप्रचोदयात् ॥

यद्वा तु त्र्यम्बकेनैव समिधो जुहुयात् सुधीः ।
कद्रुद्रायेति मन्त्रेण जुहुयादाज्यमादृतः ॥

तिलाश्च मूलमन्त्रेण सर्वत्रैवं क्रमो भवेत् ।
तथा ब्रह्मोद्वासनान्ते मिथुनं ब्राह्मणाय तु ॥

वृषभोपरितिष्ठन्तं भक्त्या तु विनिवेदयेत् ।
मन्त्रेणानेन विधिवद्रुद्ररोगी जितात्मवान् ॥

'कैलासवासी भगवान् उमया सहितः परः ।
भगनेत्रहरो दद्रुरोगमाशु व्यपोहतु ॥ इति दानमन्त्रः ।
ततश्च ब्राह्मणं सम्यक् प्रणिपत्य क्षमापयेत् ।

ब्राह्मणान् भोजयेच्चापि स्वयं भुञ्जीत वाग्यतः ॥
एवं दत्वा महादानं दद्रुरोगाद्विमुच्यते ।

इति उमामहेश्वरदानविधिः ॥

**अथ दक्षिणामूर्तिदानम् । वायुपुराणे ।**

श्रूयतां परम गुह्यं दानं सर्वोत्तमोत्तमम् ।
नमस्कृत्य प्रवक्ष्यामि देवदेवस्य शूलिनः ॥

सर्वेषामेव पापानां येन नाशः प्रजायते ।
पापानां निष्कृतिः प्रोक्ता मुनिभिः शास्त्रदर्शिभिः ॥

तपो-होम-जपप्राया सा हि कार्या प्रयत्नतः ।
एतत्तु सर्वपापानां प्रायश्चित्तमनुत्तमम् ॥

महापातक दोषेषु पातके चोपपातके ।
अन्येषामपि दोषाणां निष्कृतिः परिवर्तते ॥

पलत्रयेण देवेशं सुपर्णस्य प्रकल्पयेत् ।
ईशानं दक्षिणामूर्तिं सर्वज्ञं लोकसाक्षिणम् ॥

गोमयेनोपलिप्तायां भूमौ विन्यस्य पङ्कजम् ।
नानारजोभिस्तन्मध्ये पुण्डरीकं न्यसेत् ततः ॥

तत्कर्णिकायां देवेशमर्चयेद्धेमरूपिणम् ।
तमेव देवं सङ्कल्प्य पूजयित्वा विधानतः ॥

प्रणिपत्य तु तं देवं ततो मन्त्रमुदीरयेत् ।
'भगवन् सर्वभूतज्ञ सर्वज्ञामृतशङ्कर ॥
त्वत्प्रसादेन मेऽशेषं पापं नश्यतु सर्वतः ।
यत्पापं वाङ्मनः काय संभवं मम शङ्कर ॥
तव रूपप्रदानान्मे विलयं यातु सर्वतः ।
अज्ञे पापे निराचारे त्वामेव शरणं गते ॥
मयि सर्वाघनाशेन दया कुरु महेश्वर ।
इत्यामन्त्र्य ततो दद्याच्छिवः सम्प्रीयतामिति ॥
क्रियाकलापमखिलमात्मानं मलसञ्चयम् ।
सर्वं विवेदयेत्तस्मै विश्वरूपाय शम्भवे ॥
अनेन विधिना यस्तु प्रदद्यात्सर्वनिष्कृतिम् ।
तस्य सर्वाणि पापानि विनश्यन्ति न संशयः ॥
जीवतो हि भवेत् पापमवश्यं मानुषात्मनः ।
तस्य पापस्य वै नास्ति प्रायश्चित्तं विना क्षयः ॥
तस्मात् कुर्यात्प्रयत्नेन निष्कृतिं प्रतिवत्सरम् ।
अनित्यं जीवितं यस्मात् सम्पदारोग्यमेव च ॥
नरकोत्तारणं कार्यं तस्मादात्म हितेच्छया ।

इति दक्षिणामूर्तिदानविधिः ।

अथ सूर्यमूर्तिदानम् । वृद्धगौतमः ।

ब्राह्मणं घातयेद्यस्तु स कुष्ठी जायते नरः ।
वक्ष्यामि तत्प्रतीकारं सूर्यदानविधानतः ॥

पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ।
सूर्यप्रतिकृतिं कुर्यात कदलीं चैव सन्निधौ ॥

कुष्ठोपहतदेहानां शान्त्यर्थं कारयेत् शुभाम् ।
सुवर्णेन पलार्धेन पत्रपुष्पैरलंकृताम् ॥

सूर्यस्तु द्विभुजः कार्यो राजते च रथे स्थितः ।
रक्तवस्त्रेण संवेष्टच कुङ्कुमेनानुलेपयेत् ॥

रम्भां तु श्वेतवस्त्रेण श्वेतपुष्पैश्च चन्दनैः ।
तण्डुलोपरि संस्थाप्य नानाफलसमन्विताम् ॥

तण्डुलानां परीमाणं द्रोणमात्रं प्रकीर्तितम् ।
श्रुताध्ययनसम्पन्नं ब्राह्मणं शान्तमानसम् ॥

सर्वविद्यासु कुशलं दरिद्रं चाग्निहोत्रिणम् ।
गृहमाहूय भक्त्या तं पूजयेद्वस्त्रमाल्यकैः ॥

ततो होमं प्रकुर्वीत समिदाज्यतिलाक्षतैः ।
लाजाश्च मधुना मिश्रा हुत्वा चाष्टोत्तरं शतम् ।

मन्त्रेण चैव गायत्र्या दुर्गाग्रहाधिदेवताः ।
जुहुयाच्च ततो भक्त्या समिदाज्य चरूनपि ॥

तथैव ह्याज्यसम्पत्ते रक्षिता इत्यनेन तु
समञ्जनं प्रकुर्वीत यथा लिङ्गं शरीरके ॥

शन्नो देव्यनुवाकेन शान्तिं कुर्याद्विशेषतः ।
तस्मै हुवते रोगी दद्याद्भक्तिपुरःसरम् ॥
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ।

दानमन्त्रः ।

आदित्य सूर्य द्युमण सर्वरोगविनाशक ।
सहस्रकिरणाऽम्भोजबन्धो तिमिरनाशन ॥
द्वादशात्मन् त्रयीदेह जगच्चक्षुर्दिवाकर ।
पूर्वकर्मविपाकोत्थं कुष्ठमाशुविनाशय ।'

इति सूर्यप्रतिकृति दानमन्त्रः ।

कदलि सर्वदेवानां मातॄणां सर्वशर्मदे ।
लक्ष्म्या शच्या च पार्वत्या देवकन्याभिरेव च ॥
सावित्र्या रम्भया चैव कार्यार्थं पूजिता पुरा ।
अङ्गप्रत्यङ्गजं सर्वं कुष्ठजातमपानुद ॥

इति कदलीदानमन्त्रः ।

ततः स्नात्वा च भुञ्जीत ब्राह्मणैर्बन्धुभिःसह ॥

इति सूर्यमूर्तिदानविधिः ॥

अथोदकुम्भदानम् । शातातपे । मार्कण्डेय उवाच ।

भगवन् केन दानेन तपसा केन कर्मणा ।
अप्राप्य नरकं घोरं स्वर्गं प्राप्नोति मानवः ॥
नरकेषु विपच्यन्ते जन्तवः सततं मुने ।
अल्पायासेन देवर्षे परिहारोऽस्ति चेद्वद ॥

सूत उवाच ।

एवमुक्तोऽथ भगवान् मार्कण्डेयेन धीमता ।
उवाच नारदो दानमल्पवित्तं महाफलम् ॥

मार्कण्डेय शृणुष्वेदं ब्रह्मविष्णवोः पुराऽनघ ।
यदाह भागवाञ्छम्भुर्द्वयोः पृष्टस्तयोस्तथा ॥
श्रूयतामुदकुम्भाख्यं दानं वक्ष्यामि सुव्रतौ ।
यत् कृत्वा पुरुषः स्त्रीवा न याति नरकं क्वचित् ॥
स्वर्गं यशस्यमायुष्यमारोग्यं पापनाशनम् ।
मम प्रीतिकरं पुण्यं युवयोश्च प्रियं तथा ॥
वैशाख्यां पौर्णमास्यां च कार्तिक्यामथ तद्दिने ।
स्वजन्मदिवसे कार्यं दुःस्वप्नाऽद्भुत दर्शने ।
भूमौ गोमयलिप्तायामुदकुम्भं न्यसेद्बुधः ।
पुष्पैः फलैश्च संवेष्टय वस्त्रेण सितरूपिणम् ॥
विधानेन तिलैर्मिश्रं गुडं तत्रैव निक्षिपेत ।
धर्मराजं न्यसेद्देवं सौवर्णं शक्तितः कृतम् ॥
सुमुखं द्विभुजं देवमासीनं दण्डहस्तकम् ।
वरदं कृपया युक्तं भक्तानां हितकारिणम् ॥
एवं सप्तघटान् कृत्वा गन्धादिभिरथार्चयेत् ।
विप्रेभ्यो दापयेत् कुम्भानेभिर्मन्त्रैर्यथाक्रमम् ॥
'यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥'
एवमाराध्य तान् कुम्भान दद्यादुदकपूर्वकम् ।
प्रीयतां भगवानेव मन्त्रान्ते समुदाहरेत् ॥
एवं कुम्भप्रदानेन देवदेवः स तुष्यति ।
कर्ता कारयिता स्वर्गं प्राप्नोतीति न संशयः ॥

न याति नरकं घोरं न प्राप्नोत्यशुभं क्वचित् ।
यमस्वरूपी भगवान् प्रीतो भवति तस्य वै ॥
यः कुम्भदानं विप्रेभ्यो ददाति च यथाविधि ।

इत्युदकुम्भदानविधिः ॥

अथ धनद मूर्तिदानं वायुपुराणे ।

दरिद्रो जायते मर्त्यो दानविघ्नं करोति यः ।
ऐश्वर्यं जायते येन कर्मणा तच्छृणुष्व मे ॥
पलार्धेन तदर्धेन तदर्धेनाथ वा पुनः ।

धनदस्य प्रतिकृतिं कुर्यात्स्वर्णमयीं शुभाम् ॥
द्विभुजां वाहनोपेतां नयनानन्दकारिणीम् ।

धनदलक्षणम् - धान्यपर्वतदाने द्रष्टव्यम् ।

शङ्खपद्मनिधिभ्यां च युक्तां तां पार्श्वयोर्द्वयोः ।
श्वेतवस्त्रेण संवेष्टय तण्डुलोपरि विन्यसेत् ॥

तण्डुलानां परीमाणं भवेद्द्रोण चतुष्टयम् ।
तदर्धं वा तदर्धं वा वित्तशाठ्यं न कारयेत् ॥

श्वेतमाल्यैस्तथा गन्धैरनुलिप्य प्रपूजयेत् ।
आग्नेय्यां दिशि होमश्च समिदाज्यतिलैर्भवेत् ॥

मन्त्रो राजाधिराजाये त्येष योज्यः सलिङ्गकैः ।
व्याहृत्या तिलहोमश्च कर्तव्यो धनकाङ्क्षिभिः ॥

आचार्यः सर्वशास्त्रज्ञो विनीतः सर्वसम्मतः ।
महाकुलप्रसूतश्च धर्मज्ञः सत्यवाक् शुचिः ॥

कारयेदर्चनं तेन धनदस्यातिभक्तितः ।
तद्दैवत्येन मन्त्रेण स च कामेश्वरो भवेत् ॥

तस्मै होमं कृतवते प्रदद्यात् प्रतिमां तु ताम् ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥

दानमन्त्रः ।

'उत्तराशापते देव कुबेर वरवाहन ।
पद्मशङ्खनिधीनां त्वं पतिः श्रीकण्ठवल्लभः ॥

दावाघेव यथा प्राप्तं दारिद्र्यं मम दुःखदम् ।
तत् सर्वमात्मदानेन पापमाशु विनाशय ॥

एवं कुबेरदानं यः करोति विधिपूर्वकम् ।
धनदेन समो मर्त्यस्तत्क्षणादेव जायते ॥

इति धनदमूर्तिदानविधिः ।

अथ पञ्चमूर्तिदानविधिः । ब्रह्माण्डपुराणे ।

अथ दानं प्रवक्ष्यामि पञ्चमूर्तिरिति श्रुतम् ।
यत् कृत्वा पुरुषः स्त्री वा सर्वसिद्धिमवाप्नुयात् ॥

यत् पापं मनसा वाचा कर्मणा च पुराकृतम् ।
जन्मान्तरसहस्रेषु तन्नाशं याति सर्वतः ॥

यथाऽऽहेदं पुरा देवो नारदाय महात्मने ।
पृष्टस्तेनापि भगवानब्जयोनिः पितामहः ॥

तथाऽहमपि तत्सर्वं युष्माकं मुनिपुङ्गवाः ।
प्रवक्ष्यामि महादेवं पञ्चमूर्तिरिति श्रुतम् ॥

शृणुष्व त्वं च देवर्षे दानं सर्वाघनाशनम् ।
दानमारोग्यमायुष्यं श्रीकरं भुक्तिमुक्तिदम् ॥
चन्द्रसूर्यग्रहे वाथ विषुवत्ययनादिषु ।
सर्वेषु पुण्यकालेषु गृहे वाऽऽयतनेषु च ॥
आचार्यं वरयेद्विप्रं तस्यानुज्ञामवाप्य च ।
विद्याविनयसम्पन्नं सर्वं तेनैव कारयेत् ॥
सुवर्णनिर्मिता पञ्चमूर्त्तीः कृत्वा विधानतः ।
ईशं सौवर्णमासीनं केयूरमुकुटोज्ज्वलम् ॥
चतुर्बाहुमुदाराङ्गं कटकादिविभूषितम् ।
दक्षिणे परशुं हस्ते सव्ये तु मृगपोतकम् ॥
अभयं दक्षिणे सव्ये शूलं नेत्रत्रयं न्यसेत् ।
सद्योजातं वामदेवमघोरं पुरुषं तथा ॥
सुवर्णेनैव कुर्वीत प्रदानादर्धमानतः ।
सद्यं पश्चात् उत्तरे वामदेवम् तथा चान्यद्दक्षिणे
चाप्यघोरम् । [सद्यं - सद्योजातमित्यर्थः । ]

तच्छब्दोक्तं पुरुषं पूर्वकोष्ठे तेषां मध्ये चैव मीशान मेव ॥
स्नानं वस्त्रं चार्घ्यपाद्याचमनीयं गन्धं पुष्पं धूपदीपौ हविष्यम् ।
अभ्यर्चिताः पञ्चमूर्तीः क्रमेण मन्त्रैः पञ्चब्रह्माभिर्मानपूर्वम् ॥

सम्पूज्यचैवं विधिनोदितेन सद्यादिदेवांश्च यथाक्रमेण ।
तेनैव विप्रेण च सर्वमेतत् कृत्वैव दानं स्वयमेव कुर्यात् ॥

दानकाले तु सम्प्राप्ते दाता नारी नरोऽथवा ।
स्नापितो गुरुणा तेन मन्त्रपूतैः कुशोदकैः ॥

अभ्यर्च्य विप्रं गन्धाद्यैर्मन्त्रानेतानुदीरयेत् ।
प्रत्येकमेका दातव्या देवमूर्तिरनुक्रमात् ॥

नमोऽस्तु सद्यो जाताय भवाय भयभङ्गिने ।
भवभङ्गो भवेन्मह्यं तवरूपप्रदानतः ॥

सोमाय वामदेवाय शिवाय शिवरूपिणे ।
सदा मे शिवमेवास्तु तव रूपप्रदानतः ॥

नमोऽघोराय घोराय जगत्संहृति कर्मणे ।
शरणं त्वां प्रपन्नोऽहमशङ्कं मम शं कुरु ॥

पुरुषाय पुराणाय हराय वरदाय च ।
तस्य रूपप्रदानान्मे श्रेयसेऽस्तु नमोऽस्तु ते ॥

ईशानो जगतामीशो देवानामभयं कर ।
रक्ष त्वं शेषभूतानामीशो मां शरणं गतम् ॥

त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।
प्रणिपत्य ततो दद्यादेभिर्मन्त्रैर्यथाक्रमम् ॥

मध्यमं गुरवे दद्यात् सुवर्णं चैव वाससी ॥

एतन्नरोऽथ वा नारी नारदेह समाचरेत् ।
मुच्यते सर्वपापेभ्यः शिवसायुज्यमाप्नुयात् ॥

इत्येवमृषयो दानं नारदाय चतुर्मुखः ।
यथो वाच तथा प्रोक्तं मया वै पञ्चमूर्तिकम् ॥

इति पञ्चमूर्तिदानविधिः ।

श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ दानखण्डे देवतादान-
प्रकरणम् ।

## अथ द्वादशप्रकरणम् ।

अथ कालविशेषेण दानविशेषा अभिधीयन्ते । तत्र तिथिदानानि तावदुच्यन्ते ।

विष्णुधर्मोत्तरे ।

प्रतिपद्यथ पुष्पाणां द्वितीयायां घृतस्य च ।
पञ्चम्यां तु फलानां वै षष्ठ्यां स्नानस्य मानद ।
सप्तम्यां चाप्यपूपानामष्टम्यां च गुडस्य च ॥
कुल्माषस्य नवम्यां च दशम्यां भोजनस्य च ॥
एकादश्यां सुवर्णस्य द्वादश्यां वसनस्य च ।
त्रयोदश्यां तु गन्धानां सितायास्तदनन्तरम् ॥
दानं च परमान्नस्य पञ्चदश्यां महाफलम् ।

भविष्योत्तरे श्रीकृष्ण उवाच ।

तिथिदानमिदानीं ते कथयामि युधिष्ठिर ।
सर्वपापप्रशमनं सर्वविघ्नविनाशनम् ॥
मानसं वाचिकं वाऽपि कर्मजं यदघं भवेत् ।
सर्वं प्रशममायाति दानेनानेन पाण्डव ॥
श्रावणे कार्त्तिके चैत्रे वैशाखे फाल्गुने तथा ।
सितपक्षे तु तद्दानं दातव्यं पुष्टिवर्धनम् ॥

अथ मासदानानि । विष्णुधर्मोत्तरे ।

तिलप्रदानं माघे तु याम्यं लोकं न गच्छति ।
प्रियङ्गुं फाल्गुने दत्वा प्रियो भवति भूतले ॥

चैत्रे चित्राणि वस्त्राणि दत्वा सौभाग्यमश्नुते ।
अपूपानां प्रदानेन वैशाखे स्वर्गमश्नुते ।।

छत्रदानात् तथा ज्येष्ठे सर्वान् कामान् समश्नुते ।
श्रावणे वस्त्रदानस्य कीर्तितं सुमहत् फलम् ।।
प्रोष्ठपदे तथामासि प्रदानात् फाणितस्य च ।
आश्विने धृतदानेन रूपवानभिजायते ।।
कार्तिके दीपदानेन सर्वमौज्ज्वल्यमाप्नुयात् ।
लवणं मार्गशीर्षे तु दत्वा सौभाग्यमश्नुते ॥
पौष्ये कनकदानेन परां पुष्टिं तथैव च ।
पुष्पाणां च सिते पक्षे दानं लक्ष्मीकरं स्मृतम् ।।
फलानां च तथा दानं कृष्णपक्षे महाफलम् ।

महाभारते ।

माघेमासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्वसमाकीर्णं नरकं न स पश्यति ।।

इति हेमाद्रीये दानखण्डे कालविशेषदानप्रकरणम् ।।

## अथ त्रयोदशप्रकरणम् ।

अथानन्तफल दानानि ।

तत्रारोग्यदानं तावदुच्यते । आह विश्वामित्रः

आरोग्यदानात् परमं न दानं विद्यते क्वचित् ।
अतो देयं रुजार्तानामारोग्यं भाग्यवृद्धये ।।
औषधं पथ्यमाहारं तैलाभ्यङ्गं प्रतिश्रयम् ।
यः प्रयच्छति रोगिभ्यः स भवेद्व्याधिवर्जितः ।।

संवर्तः । औषधं स्नेहमाहारं रोगिणां रोगशान्तये ।
ददानो रोगरहितः सुखी दीर्घायुरेव च॥

अगस्त्यः ।

अन्नौषधप्रदातारः सुखं यान्ति निरामयाः ।

सौरपुराणे ।

रोगिणे रोगशान्त्यर्थमौषधं यः प्रयच्छति ।
रोगहीनः स दीर्घायुः सुखी भवति सर्वदा ॥

नन्दिपुराणे ।

अञ्जनं यो नरो दद्यादक्ष्णोर्व्याधिनिवृत्तये ।
विप्राय स पुमान् याति सूर्यलोकं महामतिः ॥
आरोग्यनयनो दिव्यः सुभगो जायते नरः ।

तस्मिन्नेव पुराणे ।

धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः ।
अतस्त्वारोग्यदानेन नरो भवति सर्वदा ॥

आरोग्यशालां कुरुते महौषधपरिच्छदाम् ।
विदग्धवैद्यसंयुक्तां भृत्यावसथसंयुताम् ।
वैद्यस्तु शास्त्रवित्प्राज्ञो दृष्टौषधपराक्रमः ॥
ओषधीमूलवर्णज्ञः समुद्धरणकालवित् ॥

एवं विधः शुभो वैद्यो भवेद्यत्नाभियोजितः ।
आरोग्यशालामेवं तु कुर्याद्यो धर्मसंश्रयः ॥

स पुमान् धार्मिको लोके स कृतार्थः स बुद्धिमान् ।
स्वस्थीकृते भवेन्मर्त्यो पूर्वोक्तं लोकमव्ययम् ॥

वातपित्तकफाद्यानां चयापचयभेदिनाम् ।
यस्तु स्वल्पाभ्युपायेन मोचयेत् व्याधिपीडितान् ॥
सोऽपि याति शुभांल्लोकानवाप्यान् यज्ञयाजिभिः ।

अथ भगन्दरहर दानम् ।

आह वृद्धगौतमः ।

माणिक्यं पद्मरागं च वज्रं वैडूर्यमेव च ।
मौक्तिकं गोमेदं पुष्परागं मरकतं तथा ॥

हरितं च नवैतानि स्वर्णपात्रोपरि न्यसेत् ।
अथवा राजते ताम्रे आज्येन च प्रपूरयेत् ॥

नवग्रहाणां प्रीत्यर्थं ब्रह्मणा निर्मितं पुरा ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैस्तान् प्रपूजयेत् ॥

स्वलिङ्गैश्चैव मन्त्रैश्च होमः कार्यस्तु पूर्ववत्[1] ।
ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम् ॥

आदित्यादिग्रहाः सर्वे नवरत्नप्रदानतः ।
विनाशयन्तु मे हृष्टाः क्षिप्रमेव भगन्दरम् ॥

अथ वस्त्रदानम् । देवलः ।

कान्तियुक् सुभगः श्रीमान् भवत्यम्बरदावकृत् ।

नन्दिपुराणे ।

वस्त्रं यश्चार्थिने दद्याच्छुभ्रं वाऽपि यदृच्छया ।
स भवेद्धनवान् श्रीमान् बृहस्पतिपुरे वसेत् ॥

---

1. पूर्ववत् - ग्रहयज्ञोक्तमार्गेण ।

आदित्यपुराणे ।

योगिनां च दरिद्राणां ये च वस्त्रप्रदा नराः ।
तेषां दिव्यानि वस्त्राणि सुगन्धीनि मृदूनि च ॥

महाभारते ।

वाससां तु प्रदानेन स्वदारनिरतो नरः ।
सुवस्त्रश्च सुवेषश्च भवतीत्यनुशुश्रुम ॥

नन्दिपुराणे ।

वासांसि तु विचित्राणि सारवन्ति मृदूनि च ।
स्नापितानि शिवे दद्यात् द्विकोषाणि नवानि च ॥
द्विकोषाणीत्यत्र विशोकानीति वा पाठः ।
यावत् तद्वस्त्रतन्तूनां परिमाणं विधीयते ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥

अथोर्णापटदानम् । आह काश्यपः ।

और्णं प्रावरणं योऽपि भक्त्या दद्याद्द्विजातये ।
सोऽपि याति परां सिद्धिं मर्त्यैरन्यैस्सुदुर्लभाम् ॥

वह्निपुराणे ।

नवं सूक्ष्मं सुविपुलं यः प्रयच्छति कम्बलम् ।
शीतार्दिने द्विजेन्द्राय तेषां मार्गसुखप्रदः ॥

नारदीयपुराणे ।

निष्किञ्चनेभ्यो दीनेभ्यः शीतवातमहातपैः ।
अर्दितेभ्यः करुणया वस्त्रमौर्णं ददाति यः ॥

न तस्य सुकृतं वक्तुं शक्यते त्रिदशैरपि ।
आधिव्याधिविनिर्मुक्तः सोऽक्षयं सुखमश्नुते ॥

विष्णुः । इन्धनप्रदानेन दीप्ताग्निर्भवति सङ्ग्रामे शिवमाप्नोति

यमः । इन्धनानां प्रदानेन दीप्ताग्निर्भुवि जायते ॥
न तं त्यजन्ति पशवः संग्रामेषु जयत्यपि ॥

संवर्तः । देवागारे द्विजानां वा दीपं दत्त्वा चतुष्पथे ।
मेधावी ज्ञानसम्पन्नश्चक्षुष्मांश्च सदा भवेत् ॥

मार्कण्डेयपुराणे ।

धिक् तस्य जीवितं पुंसः शरणार्थिनमातुरम् ।
यो नार्त्तमनुगृह्णाति वैरपक्षमपि ध्रुवम् ॥
यज्ञ-दान-तपांसीह परत्र च न भूतये ।
भवन्ति तस्य यस्यार्तपरित्राणे न मानसम् ॥

महाभारते ।

लोभाद्द्वेषाद्भयाद्वाऽपि यस्त्यजेच्छरणागतम् ।
ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ॥
शास्त्रेषु निष्कृतिर्दृष्टा महापातकिनामपि ।
शरणागतहन्तॄणां न दृष्टा निष्कृतिः क्वचित् ॥
महतामपि यज्ञानां कालेन क्षीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥

वह्निपुराणे । शिबिरुवाच ।

एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥

नातो गुरुतरो धर्मः कश्चिदन्योऽस्ति भूतले ।
प्राणिनां भयभीतानामभयं यत् प्रदीयते ॥

वरात्मकस्य सत्वस्य प्रदत्तं जीविताभयम् ।
न च विप्रसहस्रस्य गोसहस्रमलङ्कृतम् ॥

हेम-धेनु-धरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वभूताभयप्रदः ॥

अथ यज्ञोपवीतदानम् । आह बोधायनः ।

यज्ञोपवीतदानेन जायते ब्रह्मवर्चसी ।
तस्मात्तानि प्रदेयानि ब्राह्मणेन विपश्चिता ॥

विना यज्ञोपवीतेन समस्ता निष्फलाः क्रियाः ।
विना यज्ञोपवीतेन ब्रह्मण्यादेव हीयते ॥

अतः पुण्यतमं प्राहुः तस्य दानं महर्षयः ।

तथा । यज्ञोपवीत दानेन सुरेभ्यो ब्राह्मणाय वा ।
भवेद्विप्रः चतुर्वेदः शुद्धधीर्नाऽत्र संशयः ॥

त्रिवृच्छुक्लं सुपीतं वा पट्टसूत्रादिनिर्मितम् ।
दत्त्वोपवीतं रुद्राय भवेद्वेदान्तपारगः ॥

वायुप्रोक्ते ।

उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् ।
आयुष्मान् जायते तेन कर्मणा मानवो भुवि ॥

अथ शिरोरोगघ्नयज्ञोपवीतदानम् । वायुपुराणे ।

उपवीतं हिरण्येन निर्मितं तु पलार्धतः ।
ब्राह्मणाय ब्रह्मविदे श्रोत्रियायोपपादयेत् ॥

दानमन्त्रः ।

धाता विधाता जगतो परमात्मा चतुर्मुखः ।
विनाशयाशु मे क्षिप्रं रोगत्रेगं शिरोगतम् ।। इति ।

अथ गर्भस्रावघ्नयज्ञोपवीतदानम् ।

यज्ञोपवीतं कुर्वीत काञ्चनं तु स्वशक्तितः ।
अत्यन्तवर्णयुक्तेन राजतं चोत्तरीयकम् ।।

पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ।
ग्रन्थिप्रदेशे देयं तु मौक्तिकं वज्रमेव च ॥

प्रक्षाल्य पञ्चगव्येन गायत्र्या ताम्रभाजने ।
मानप्रमाणं तस्मिंस्तु निक्षिपेदाज्यमव्ययतः ।।

आज्यस्योपरि संस्थाप्यमुपवीतं सुपूजितम् ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैरतिभक्तितः ।।

ततो ब्राह्मणमाहूय होमं तत्र च कारयेत् ।
तिलैराज्येन मधुना मिष्टैरष्टोत्तरं शतम् ॥

तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु ।
मन्त्रेणानेन विधिवत् प्राङ्मुखेनोपवीतकम् ।।

उपवीतं परमिदं ब्रह्मणा विधृतं पुरा ।
भावत्कस्यास्य दानेन गर्भं सन्धारये ह्यहम् ।।

फलान्यपि ब्राह्मणेभ्यो तस्मिन् काले प्रदापयेत् ।
अनुव्रज्य तथाऽऽचार्यं प्रणिपत्य क्षमापयेत् ॥

गर्भस्रावभवाद्दोषादेवं कृत्वा विमुच्यते ।

**ब्रह्मवैवर्ते** । यष्टिदानं प्रकृत्याह ।

ये पङ्गुभ्यश्च पान्थेभ्यो दीनेभ्योऽपि दयालवः ।
यष्टिदानं प्रकुर्वन्ति नीरोगास्ते न संशयः ॥
पङ्गोश्चरणकार्याणि यष्टिः प्रकुरुते सदा ।
गोसर्पादिनिवृत्तिश्च जायते यष्टिधारणात् ॥
भीतानां शरणं यष्टिर्गच्छतां निशि वा वने ।
शङ्कां पङ्कादिदोषोत्थामियमेव निरस्यति ॥
अतः [1]प्रविकले विप्रो यष्टिं तुष्टिकरीं ददेत् ।

**अथ यत्यादिवपनम्** । आह **यमः** ।

ब्रह्मचारि यतिभ्यश्च वपनं यस्तु कारयेत् ।
नखकर्माणि कुर्वाणः चक्षुष्मान् जायते नरः ॥

**अथ पान्थशुश्रूषाप्रसङ्गेन गोपरिचर्या निरूप्यते** । तत्र **ब्रह्मपुराणे** ।

वन्दनीयाश्च पूज्याश्च गावः सेव्यास्तु नित्यशः ।

**तथा**। गवां गोष्ठे स्थितानां तु यः करोति प्रदक्षिणम् ।
प्रदक्षिणीकृतं तेन जगत् सदसदात्मकम् ॥

**विष्णुः**। गावः पवित्रा माङ्गल्याः गवि लोकाः प्रतिष्ठिताः ।
गावो वितन्वते यज्ञान् गावः सर्वाघसूदनाः ॥
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ।
षडङ्गमेतत्परमं माङ्गल्यं सर्वदा गवाम् ॥
शृङ्गोदकं गवां पुण्यं सर्वाघविनिषूदनम् ।
गवां कण्डूयनं चैव सर्वकल्मषनाशनम् ॥
गवां ग्रासप्रदानेन स्वर्गलोके महीयते ।

---

1. पथिकलोकस्य इति पाठान्तरम् ।

ब्रह्मपुराणे ।

सदोषा गोर्गृहे जाता परिपाल्या सदा स्वयम् ।
दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रः सुसंयतः ॥

हारीतः । द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् ।
चतुर्थे त्रिस्तनं चैव यथान्यायं यथाबलम् ॥

भविष्यत्पुराणे ब्रह्मोवाच ।

गामालभ्य नमस्कृत्य कुर्याद्यस्तु प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
गवां हुङ्कारशब्देन दृष्टिपातेन सत्तम ।
पापं प्रणश्यते यस्मात् तस्मात्पश्यन्स्पृशेच्च ताः ॥

अथान्नदानम् । महाभारते शान्तिपर्वणि दानधर्मे युधिष्ठिर उवाच ।

कानि दानानि लोकेऽस्मिन् चारुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥
केन तुष्यन्ति ते सद्यः तुष्टाः किं प्रदिशन्ति च ।
शंसचैतन्महाबाहो फलं पुण्यकृतं महत् ॥
किं दत्तं फलवद्राजन्निह लोके परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥

भीष्मः । इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ तन्मे गदतः शृणु भारत ॥

नारदः ।

अन्नमेव प्रशंसन्ति देवा ऋषिगणाः सुराः ।
लोकतन्त्रं हि संज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥

अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेण दातुमिच्छन्ति मानवाः ॥

अन्नमूर्जकरं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते विश्वं सर्वं जगदिदं प्रभो ॥

अन्नाद्गृहस्था लोकेऽस्मिन् भिक्षवस्तत एव च ।
अन्नात्प्रभवति प्राणः प्रत्यक्ष नाऽत्र संशयः ॥

कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥

पद्मपुराणे ।

गुडमिक्षुरसं चैव लवणं व्यञ्जनानि च ।
सुरभीणि च पानानि दत्वाऽत्यन्तं सुखीभवेत् ।

आह यमः ।

गोरसानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम् ।
घृतप्रदानेन तथा दीर्घं विन्दति जीवितम् ॥

ब्रह्माण्डपुराणे ।

रक्तं मांसं वसा शुक्लं क्रमादन्नात्प्रवर्तते ।
शुक्लाद्भवन्ति भूतानि तस्मादन्नमयं जगत् ॥

हेमरत्ना-श्व-नागेन्द्र चन्द्र स्रक् चन्दनादिभिः ।
समस्तैरपि सम्प्राप्तैर्न रमन्ते बुभुक्षिताः ॥

नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः ।
नास्त्याहारसमं सौख्यं नास्ति क्रोधसमो रिपुः ॥

अत एव महत् पुण्यमन्नदानप्रदावतः ।
यतः क्षुधाग्नि संतप्ता म्रियन्ते सर्वदेहिनः ॥

त्रैलोक्ये यानि रत्नानि भोगस्त्री वाहनानि च ।
अन्नदानरतः सर्वमिहामुत्र समश्नुते ॥

यस्यान्नपानपुष्टाङ्ग. कुरुते पुण्यसञ्चयम् ।
अन्नप्रदातुस्तस्यार्धं कर्त्तुश्चार्धं न संशयः ॥

अत्रिः । अव्रताश्च ह्यमन्त्राश्च यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदोहि सः ॥

अधीत्य चतुरो वेदान् सर्वशास्त्रार्थतत्ववित् ।
नरेन्द्रभवने भुक्त्वा विष्ठायां जायते क्रिमिः ॥

राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मविकर्तिनः ॥

सौरपुराणे ।

पानीयदानं परमं सर्वदानाधिकं स्मृतम् ।
तस्मात्पानीयमानीय देयं धर्मविदा सदा ॥

वेदव्यासः ।

दुर्लभं सलिलं तात विशेषेण परत्र वै ।
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती ॥

महाभारते ।

अन्नं हि सर्वदानानामधिकं मनुरब्रवीत् ।
अन्नाच्चापि प्रभवति पानीयं कुरुसत्तम ॥

वीरेण हि विना तात! न किञ्चित् सम्प्रवर्त्तते ।
नीरजातश्च भगवान् सोमो ग्रह गणेश्वरः ॥

अथाश्वत्थसेचनम् । भविष्योत्तरे ।

उदकुम्भप्रदानेऽपि ह्यशक्तो यः पुमान् भवेत् ।
तेनाश्वत्थतरोर्मूलं सेच्यं नित्यं जितात्मना ॥

सर्वपापप्रशमनं सर्वदुःखप्रणाशनम् ।
सर्वरोगप्रशमनं नित्यं सन्ततिवर्धनम् ॥

अश्वत्थरूपो भगवान् प्रीयतां मे जनार्दनः ।
इत्युच्चार्यनमस्कृत्य प्रत्यहं पापनाशनम् ॥

यः करोति तरोर्मूले सेकं मासचतुष्टयम् ।
सोऽपि तत्फलमाप्नोति श्रुतिरेषा सनातनी ॥

अथ गलन्तिकादानम् तथा ।

अथान्यदपि वक्ष्यामि जलदानविधिं परम् ।
वसन्तसमयं ज्ञात्वा गत्वा देवालयं परम् ॥

तत्र स्वायम्भुवं लिङ्गमार्षं वा देवपूजितम् ।
तस्य गर्भगृहान्तःस्थं घटं तोयेन सम्भृतम् ॥

कुर्यात्सुरभिगन्धैश्च वासितं वस्त्रगालितम् ।
स्रवन्तं च दिवारात्रौ तज्जलं लिङ्गमूर्धनि ॥

एवं यः कारयेत् कुम्भं श्रद्धाभक्तिसमन्वितः ।
शिवस्य विष्णोरर्कस्य इष्टदेवस्य वा पुनः ॥

स्रवन्तं कारयेत्कुम्भमच्छिन्नं देवमस्तके ।

अनेन विधिना दत्वा नरो मास चतुष्टयम् ।
ततः कर्कटके प्राप्ते देवं पञ्चामृतेन तु ।
संस्नाप्य पूजयेद्गन्धैर्नैवेद्यैश्च मनोरमैः ॥

प्रणिपत्य महेशानं मन्त्रमेतदुदीरयेत् ।
'ॐ नमः शङ्करः शम्भुर्भवो धाता शिवो हरः ॥

प्रीयतां मे महादेवः जलकुम्भ प्रदानतः ।'
एवं सङ्कल्प्य दाता च पश्चादागत्य वेश्मनि ॥

स्व शक्त्या शिवभक्तांश्च विप्रमुख्यांश्च भोजयेत् ।
एवं यः कुरुते ग्रीष्मे जलदानक्रियां हरे ॥

यावद्बिन्दूनि लिङ्गस्य पतितानि न संशयः ।
स वसेच्छाङ्करे लोके तावत्कोटीर्नरेश्वर ।

अथ प्रपादानम् । यमः ।

कूपारामप्रपाकारी तथा वृक्षस्य रोपकः ।
कन्याप्रदः सेतुकारी स्वर्गमाप्नोत्यसंशयम् ॥

तथा ।

येषां तडागानि प्रपाः शुभाश्चाऽऽरामाश्चकूपाश्च प्रतिश्रयाश्च ।
अन्नप्रदानं मधुरा च वाणी तेषामयं चैव परश्च लोकः ॥

इत्यपिह दानवाक्यम् । अद्यादि मासतुष्टयं यावत् त्रीन् वा द्वौ वा एकमेकं वा इमां प्रपां पानीयान्नव्यञ्जनादिसहितां विंशद्वर्षकोटिपरिमितकालभोग्येन्द्रलोकप्राप्तिकामो मर्त्यलोके चतुर्वेदब्राह्मणत्वकामः सर्वभूतेभ्योऽहमुत्सृजामि । इति ।

अनिवारितं ततो देयं जलं मासचतुष्टयम् ।
त्रिपक्षं वा महाराज जीवानां जीवनं परम् ॥
गन्धाढ्यं सुरसं शीतं शोभने राजते स्थितम् ।
प्रदद्यादप्रतिहतं मुखं चानवलोकयन् ॥
प्रत्यहंकारयेत्तस्यां भोजनं शक्तितो द्विजाः ।
अनेन विधिना यस्तु ग्रीष्मे तापप्रणाशनम् ॥
पानीयमुत्तमं दद्यात् तस्य पुण्यफलं शृणु ।
याति देवेन्द्रनगरं पूज्यमानोऽप्सरोगणैः ॥
त्रिंशत्कोट्यो हि वर्षाणां यक्षगन्धर्वसेवितम् ।
पुण्यक्षयादिहागत्य चतुर्वेदो द्विजो भवेत् ॥
ततः परं पदं याति पुनरावृत्तिदुर्लभम् ।

अथ जलाशयनिर्माणम् । नन्दिपुराणे ।

यो वापीमथ वा कूपं देशे तोयविवर्जिते ।
खानयेत् स नरो याति स्वर्गं प्रेत्य शतं समाः ॥

देवैरेकत्वमतुलं तृष्णाक्षुद्वर्जितः सदा ।

विष्णुः । कूपारामतटाकेषु देवतायतनेषु च ।
पुनः संस्कारकर्ता च लभते मौलिकं फलम् ॥

महाभारते ।

देवाः मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥
कुलं सन्तारयेत्सर्वं यस्य खाते जलाशये ।
गावः पिबन्ति सलिलं साधवश्च नराः सदा ॥

तडागे यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृग-पक्षि-मनुष्याश्च सोऽश्वमेधफलं लभेत् ॥

यत् पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तडागदस्य तत्सर्वं प्रेत्यानन्त्यायकल्पते ॥

**अथ वृक्षरोपणम् । महाभारते ।**

स्थावराणां च भूतानां जातयः षट् प्रकीर्तिताः ।
वृक्ष-गुल्म-लता-वल्यस्त्वक्सारास्तृणजातयः ॥
एतास्तु जात्या वृक्षाणां तदाऽऽरोपे गुणोऽस्ति मे ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव शुभं फलम् ॥
अतीतानागतौ चोभौ पितृवंशौ च भारत ।
तारयेत् वृक्षरोपी च तस्माद्वृक्षाश्च रोपयेत् ॥
वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र च ।
तस्मात् तडागे रोप्या वै वृक्षाः श्रेयोर्थिभिः सदा ।
पुत्रवत् परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः ॥

**पद्मपुराणे ।**

अपुत्रस्य च पुत्रत्वं पादपा इह कुर्वते ।
यच्छन्ति रोपकेभ्यस्ते सत्तीर्थे तर्पणादिकम् ॥

सत्तीर्थे - कृतं तर्पणादि तृप्त्यादिजन्यं फलं रोपकस्य प्रयच्छन्तीत्यर्थः ।

अत्त्वेवापि च राजेन्द्र पिप्पलारोपणं कुरु ।
स तु पुत्रसहस्राणामेक एव करिष्यति ॥

पुत्रसहस्राणां कर्तव्यमिति शेषः

भविष्यपुराणे ।

अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दशचिञ्चिणीकम् ।
कपित्थ-बिल्वा-मलकी त्रयं च पञ्चाम्रवापी नरकं नपश्येत् ॥

प्रतिश्रयाः श्रान्तसमाश्रयित्वादमी च सत्वं फलदा बुभुक्षवे ।
अपत्यमेते परलोकहेतोर्विमृश्य तत् किं तरवो न रोपिताः ॥

न खानिता पुष्करिण्यो रोपिता न महीरुहाः ।
मातुर्यौवनचौरेण तेन जातेन किं कृतम् ॥

ब्रह्मवैवर्त्ते श्रीभगवानुवाच ।

पुत्रैर्विना शुभफलं न भवेन्नराणाम्
दुष्पुत्रकैरपि तथोभयलोकनाशः ।
एतद्विचार्य सुधिया परिपाल्य वृक्षान्
यत्नेन वेदविधिना परिकल्पनीयाः ॥

### उपसंहारः

पर्यवसितं च दानं करणाधिपो विजयते हेमाद्रिः ।
आवारिनिधिक्षोणी मण्डलमण्डलितस्वयशोराशिः ॥

चिन्तामणौ महाशास्त्रे तेन हेमाद्रिणा कृते ।
दानखण्डाबखण्डं च जगाम परिपूर्णताम् ॥

येनावसण्यत्वमवेक्ष्य कोऽपि नान्यो मुविभ्यः प्रभुतामुपैति ।
दानानि तान्याचरितुं प्रबन्धो हेमाद्रि देवस्य जगाम पारम् ॥

इति श्रीमहाराजाधिराजश्रीमहादेवीय समस्तकरणाधीश्वर सकलविद्याविशारद श्रीहेमाद्रि विरचिते चतुर्वर्गचिन्तामणौ दानखण्डं सम्पूर्णम् । वयोवस्थप्रकरणम् ।

॥ ॐ श्रीशिवाभ्यां नम. ॥

# परिशेषखण्डः — श्राद्धकल्पः

## चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे प्रथमोऽध्यायः

### श्राद्धविधिकल्प प्रशंसाप्रकरणम्

प्रदत्तपिण्डान् स्वपुरः सपिण्डैः
प्रभूतपापान् नरकौकसोऽपि ।
समुद्धरन्तं कृपयाऽऽदिदेवं
गदाधरं नौमि गयाशिरस्थम् ॥ १ ॥

वसून् वसूनाहरणे समुद्यतान्
रुद्रान् विमुद्रान् हृतयोगसंपदः ।
नमामि सत्कर्मपथप्रवर्तका-
नादित्यनाम्नः त्रिदशेशपूजितान् ॥ २ ॥

हरिहरमहाभक्तिव्यक्त प्राविभूतविभूतिमान्
उपचितविजप्रज्ञो यज्ञक्रियाक्रमसुन्दरः ।
गुणमणिगणश्रेणि श्रीमत् प्रकाशविकस्वरः
करणतिलकः श्रीहेमाद्रिः कथं स हि वर्ण्यते ॥ ३ ॥

प्रणीतश्च चतुर्वर्गचिन्तामणिसमाह्वयम् ।
शास्त्रं तेन समस्तार्तनि.शेषार्ति निवर्तकम् ॥ ४ ॥

यो मन्थाचलमूलवेगविचलद्दुग्धाब्धिमुग्धोत्कली
विष्टपूतः स जगाम शत्रुसदनं कश्चित् मणिग्रामणीः ।

इत्यालोच्य विमथ्य शब्दजलधिं हेमाद्रिणा निर्मितो
दाता वर्गचतुष्टयस्य विमलश्चिन्तामणिर्नूतनः ॥ ५ ॥

इहानुपूर्वेण विनिर्मितानि
पञ्च प्रपञ्चेन च खण्डकानि ।
व्रतेषु दानेषु च तीर्थसार्थे
मोक्षे च शेषेऽथ तथार्थजाते ॥ ६ ॥

आराधनं हव्यभुजां तु पञ्चमे
खण्डे समस्तं प्रतिपाद्य कथ्यते ।
हेमाद्रिणा सम्प्रति कव्यभोजिनां
श्राद्धस्य कल्पेन महोज्वलश्रिया ॥ ७ ॥

बहूनि शास्त्राणि विमृश्य रच्यते
श्राद्धस्यकल्पोऽयमतिप्रयत्नतः ।
इहोपनेयः सहसा न केनचित्
दोषो लघीयानपि बुद्धिशालिना ॥ ८ ॥

तत्र चाद्ये प्रकरणे स हेमाद्रिः शुभाशयः ।
फलप्रशंसासंयुक्तं वक्ति श्राद्धविधिं सुधीः ॥ ९ ॥

उक्तमादौ लिङ्गप्रतिमाद्यधिष्ठाने शिवविष्णुगणेशादिदेवतानामाराधनम् । अनन्तरं गवाधिष्ठाने देवतारूपाणां नन्दादि कामधेनूनां हरिहरादीनां चाराधनम् । अथेदानीं ब्राह्मणादिरूपाधिष्ठाने वसु-रुद्रा-दित्य-पितृमत्सोमाङ्गिरस-यमकव्यवाहनादि सोमपाज्यपाग्निष्वात्तादीनां महामहिम्नां पितृरूपाणां

देवतानामाराधनमुच्यते । आराधनं च मनसः प्रीणनम् । तस्य चोपायः श्राद्धलक्षणं कर्म । अतः तदुच्यते । तत्र तावत् विधिः स्वविधेयेऽर्थे पुरुषं प्रवर्तयन् स्वसाध्यपुरुषप्रवृत्त्यतिशय-कारिणीं विधेयप्ररोचनामपेक्षमाणो विधेयरुच्युत्पादकानि प्रशं-सावचनान्यपेक्षते । फलवचनानि च । यथैव एते पुरुषा विधे-ये प्रवर्तन्ते तथैव तद्विषये ग्रन्थे श्रोतारः । अतः तेषामपि तत्र विधिफलप्रशंसावाक्यानि प्रवर्तकानीति, श्राद्धविषयाणि ता-न्येव प्रथममभिलक्ष्यन्ते । तानि परस्परान्वयादेकवाक्यतां गता-नि इत्येकमेवेदं प्रकरणम् ।

आह सुमन्तुः ।

श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् ।
तस्मात् सर्वप्रयत्नेन श्राद्धं कुर्याद्विचक्षणः ॥

ब्रह्मपुराणे ।

तस्माच्छ्राद्धं नरो भक्त्या शाकैरपि यथाविधि ।
कुर्वीत श्रद्धया तस्य कुले कश्चिन्न सीदति ।

विष्णुपुराणे ।

पितृगीताः तथैवाऽत्र श्लोकास्तांश्च शृणुष्व मे ।
श्रुत्वा तथैव भवता भाव्य तत्राऽऽ[1]दृतात्मना ॥
अपि धन्यः कुले [2]जायादस्माकं मतिमान् नरः ।
अकुर्वन् वित्तशाठ्यं यः पिण्डान् नो [3]निर्वपिष्यति ॥
रत्न-वस्त्र मही-यान-सर्वभोगादिकं वसु ।
विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति ॥

---

1. पा. तत्र धृतात्मना । 2. भूयात् । ३. निर्वापयिष्यति ।

अन्नेन वा यथा शक्त्या कालेऽस्मिन् भक्तिनम्रधीः ।
भोजयिष्यति विप्राग्र्यान् तन्मात्रविभवो नरः ॥

नागर खण्डे ।

लोकान्तरेषु ते तोयं लभन्ते नान्नमेव च ।
दत्तं न वंशजैर्येषां ते व्यथां यान्ति दारुणम् ॥

क्षुत्पिपासासमुद्भूताम् तस्मात् सन्तर्पयेत् पितॄन् ।
नित्यं शक्त्या यथाराजन् तोयैर्भोज्यैः पृथग्विधैः ॥

तथाऽन्नैः वस्त्रनैवेद्यैः पुष्पगन्धानुलेपनैः ।
पितृमेधादिभिः पुण्यैः श्राद्धैरुच्चावचैरपि ॥

तर्पितास्ते प्रयच्छन्ति कामानिश्टान् हृदिस्थितान् ।
त्रिवर्गञ्च महाराज पितरः श्राद्धतर्पिताः ॥

देवलस्मृतौ ।

अरोगः प्रकृतिस्थश्च चिरायुः पुत्रपौत्रवान् ।
अर्थवानर्थभोगी च श्राद्धकामो भवेदिह ॥

परत्र च परां पुष्टिं लोकांश्च विपुलान् शुभान् ।
श्राद्धकृत् समवाप्नोति यशश्च विपुलं नरः ॥

ब्रह्मवैवर्त वायुपुराणयोः ।

देवकार्यादपि सदा पितृकार्यं विशिष्यते ।
देवताभ्यः पितॄणां हि पूर्वमाप्यायनं शुभम् ॥

सर्वेषु दैवेषु कर्मसु कर्माङ्गश्राद्धस्य पूर्वमनुष्ठानात्
देवेभ्यः पूर्वं पितॄणामाप्यायनमिति विष्णुधर्मोत्तरे

वराहवचनम् ।

अद्यप्रभृति लोकेषु प्रेतानुद्दिश्य वै पितॄन् ।
ये तु श्राद्धं करिष्यन्ति तेषां पुष्टिः भविष्यति ॥

श्राद्धकाले तथान्नेन पिण्डनिर्वपणं तथा ।
पितॄणां ये करिष्यन्ति तेषां पुष्टिर्भविष्यति ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।

तेषां त्रयः पूजिताश्च भविष्यन्ति तथाऽग्नयः ।
त्रयो लोकास्त्रयो वेदास्तथैव च युगत्रयम् ॥

पूजिताश्चत्रयो देवा ब्रह्मविष्णुमहेश्वराः ।
चत्वारः पूजिता वेदाश्चत्वारश्च तथाऽऽश्रमाः ॥

पुरुषार्थाश्च चत्वारश्चतस्रश्च तथा दिशः ।
चत्वारश्च तथा वर्णाश्चत्वारश्च तथा युगाः ॥

विष्णुपुराणे ।

ब्रह्मेन्द्ररुद्रनासत्यसूर्याग्निवसुमारुतान् ।
विश्वे देवान् ऋषिगणान् वयांसि मनुजान् पशून् ॥
सरीसृपान् पितृगणान् यच्चान्यद्भूतसंज्ञकान् ।
श्राद्धं श्रद्धान्वितः कुर्वन् तर्पयत्यखिलं हि तत् ॥

येन केनचित् पुरुषेण स्वीयपितृपितामहोद्देशेन श्राद्धे क्रियमाणे ब्रह्मेन्द्रादीनामनुद्दिष्टानामपि अनेकेषामेकस्मिन्नेव प्रयोगे युगपत्प्रीतिः अन्यकुलोत्पन्नानामपि सरीसृपादीनाञ्च तृप्तिः स्यादिति वचनार्थः। श्राद्धकर्तृकुलोत्पन्नानान्तु नानायोनिगता-नामनुद्दिष्टानामप्यनेकेषामेकस्मिन्नेव प्रयोगे तत्तच्छ्राद्धक्रियाव-

पर्वैः तृप्तिः स्यादिति । व्यक्तमुक्तम् - मार्कण्डेय - स्कान्द - ब्रह्मपुराणेषु ।

अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ॥
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ।
यत्तोयं स्नानवस्त्रेभ्यो भूमौ पतति पुत्रक ॥
तेन ये तरुतां प्राप्ताः तेषां तृप्तिः प्रजायते ।
यास्तु गन्धाम्बुकणिकाः पतन्ति धरणीतले ॥
ताभिराप्यायनं तेषां येच तिर्यक्कुले गताः ।
ये चादन्ताः कुले बालाः क्रियाऽयोग्या ह्यसंस्कृताः ॥
विपन्नास्ते तु विकिरसन्मार्जनजलाशिनः ।
भुक्त्वा चाचमनं यच्च जलं यच्चाङ्घ्रिशौचजम् ॥
ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै ॥

नागरखण्डे ।

श्राद्धे तु क्रियमाणे वै न किञ्चित् व्यर्थतां व्रजेत् ।
उच्छिष्टमपि राजेन्द्र तस्माच्छ्राद्धं समाचरेत् ॥
विप्रपादोदकं यच्च भूमौ पतति पार्थिव ।
तेन ये गोत्रजा केचिदपुत्रा मरणं गताः ।
तावत् पुष्करपत्रैस्तु पिबन्ति पितरो जलम् ॥
श्राद्धे प्रक्रियमाणे तु यत् किञ्चित् पतति क्षितौ ।
पुष्पगन्धादिकं चान्नमपि तोयं नरेश्वर ॥
तेन तृप्तिं परां यान्ति ये कृमित्वमुपागताः ।
कीटत्वं वाऽपि तिर्यक्त्वं व्यालत्वं वा नराधिप ॥

यदुच्छिष्टं क्षितौ याति पात्रप्रक्षालनोद्भवम् ।
तेन तृप्तिं परां यान्ति ये प्रेतत्वमुपागताः ।।

ये चापमृत्युना केचिन्मृत्युं प्राप्ताः स्ववंशजाः ।
विकिरेण प्रदत्तेन ते तृप्तिं यान्ति चाखिलाः ॥

तदेवं श्राद्धावयवैः केषामपि वंश्यानां तृप्तिरुक्ता । ब्राह्मणभोजनादिना प्रधानकर्मणा तु मुख्यानामुद्दिश्यमानानां पितृपितामहादीनां तृप्तिः भवतीत्युक्तम् ।

ननु पुण्योत्कर्षवतां स्वर्गलोकं गतानां मनुष्यपितृपितामहादीनां अमृताहाराणां सतां कथं ब्राह्मणभोजनविनष्टेण मानुषेण चान्नेन तृप्तिः सम्भवति । पापीयसां वा तिर्यग्योनिगतानां तृणाद्याहाराणां सतां, प्रेतादिरूपत्वं गतानां वा रुधिराद्याहाराणां सतामित्युक्तं–पाद्म-मात्स्योः ।

यदि मर्त्यैर्द्विजैर्भुक्तं हूयते यदि वाऽनले ।
शुभाशुभात्मकैः प्रेतैः तद्दत्तं भुज्यते कथम् ।।

अस्याक्षेपस्य समाधानं तत्रैवोक्तम् ।

तत्राह देवलः ।

देवो यदि पिता जातः शुभकर्मानुयोगतः ।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥
गान्धर्वे भोग्यरूपेण पशुत्वे च तृणं भवेत् ।
श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति ॥

पानं भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम् ।
दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ।।
मनुष्यत्वेऽन्नपानादि नानाभोगरसो भवेत् ।

ननु यथा क्षीरस्य दधिरूपेण परिणामः, दध्नश्च तक्रादिरूपेण परिणामो दृश्यते, नैवं भोज्यमानस्य हूयमानस्य वा अमृतादिरूपेण रुधिरोदकादिरूपेण वा परिणामो दृश्यते । न च परिणतस्यापि स्वातन्त्र्येण क्रियाशक्तिशून्यस्य देशान्तरगतप्राणिप्राप्तिः सम्भवति । नापि नानारूपं गतानां प्रमीतप्राणिनां श्राद्धदेशोपसर्पणमुपपद्यते । नापि सुपर्ण-गन्धर्व-यक्ष-राक्षस-प्रेत-पिशाच-नर-किन्नर-पशु पक्षि-कृमि कीटादिकोटिजातिसहस्रतिरस्कृतस्वरूपैः श्राद्धकर्तृपूर्वजैः सह स्वयं विविच्य सम्बन्धः सम्भवतीत्याद्याक्षेपाः पुराणेषु सूचिताः ।

विष्णुपुराणे ।

तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः ।
दद्याच्छ्राद्धं श्रद्धयान्नं ववहेयुः प्रवासिनः ॥

स्कान्दे ।

मृतानां यदि जन्तूनां श्राद्धमाप्यायनं ततः ।
निर्वातस्य प्रदीपस्य तैलं संवर्धयेत् शिखाम् ॥

नागरखण्डे ।

किमर्थं क्रियते श्राद्धममावास्यादिषु द्विजैः ।
मृताश्च पुरुषा विप्र स्वकर्मजनितां गतिम् ॥
गच्छन्ति ते कथं तस्य सुतस्याश्रममाप्नुयुः ।

परिहारा अपि पुराणेष्वेव सूचिताः ।

तत्र मात्स्य-पद्मयोः ।

नाम गोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः ।
श्राद्धस्य मन्त्रास्तद्वच्च उपलभ्यानि भक्तितः ॥

पित्रादिनामादीनि उपलभ्यापि - ज्ञातव्यानीत्यर्थः ।

ननु अचेतनत्वान्नामादीनां कथं हव्यकव्यप्रापकत्वमित्याशङ्क्योक्तम् ।

अग्निष्वात्तादयस्तेषामधिपत्ये व्यवस्थिताः । इति अग्निष्वात्तादयः पितृविशेषाणामधिष्ठातारः प्रापकाभवन्ति । ननु यदि नामगोत्रं प्रापकं, तर्हि नामगोत्रज्ञानं विना क्रियमाणमनर्थकं स्यात् । तथा च "यदि नाम न विन्द्यात् स्वधा पितृभ्यः पृथिवीषद्भ्यः इति प्रथमं पिण्डं दद्यात्" इत्यापस्तम्बसूत्रविरोध इत्याशङ्क्य ऊहपदस्यापि प्रापकत्वं दर्शितं तत्रैव ।

नाममन्त्रास्तदादेशा भवान्तरगतानपि ।
प्राणिनः प्रीणयन्त्येते तदाऽऽहारत्वमागतान् ॥

तदादेशा, नामगोत्रमन्त्रादीनामादेशाः, ऊहादिप्रकारेण विपरिवर्तिताः शब्दा इत्यर्थः ।

अर्थान्तरञ्च । देवदत्तादिनामसु शून्यप्रकाशकेषु च मन्त्रेषु कथमपि सम्बन्धमलभमानानामग्निष्वात्तादिप्रकाशकानां मन्त्राणां, अतत्प्रकाशका. नाममन्त्राश्चादेशाः तत्कार्यकारिणः इत्यर्थः

ब्राह्मणैरभ्यनुज्ञातः स्वपितृगांश्च नामधृक् ।
तानेवार्चयते सम्यक् विधिमन्त्र बहिष्कृतान् ॥

इति वाराहपुराणस्मरणात् ।

भवान्तरगतानपी त्यनेकदेशकालयोन्यवस्थान्तरगतानपीत्यर्थः । "तदाहारत्वमागतान्" इत्यनेन प्रदत्तस्य हविषः तत्त-

द्योनिसमुचितसुधाद्याहाररूपेण परिणामत्वम्[1]। मन्त्रादेरेवालौकिकस्य हेतोरुक्तत्वात्। मन्त्रादिग्रहणं श्राद्धीयस्य सर्वस्यापि विधेः उपलक्षणार्थम्। अत एव वायुपुराणे—

काले न्यायागतं पात्रे विधिना प्रतिपादितम्।
अन्नं नयन्ति तत्रैते जन्तुर्यत्रावतिष्ठते॥

यथा गोषु प्रणष्टासु वत्सो विन्दति मातरम्।
तथाऽन्नं नयते विप्रो जन्तुर्यत्रावतिष्ठते॥

नामगोत्रञ्च मन्त्रश्च दत्तमन्नं नयन्ति ते।
अपि योनिशतं प्राप्तान् तृप्तांस्तानुपतिष्ठति॥

तदेवं श्राद्धदेशं प्रति अनागतान् लोकान्तरस्थानेव पितॄन्प्रति मन्त्रादयः हविः प्रापयन्तीत्युक्तम्।

याज्ञवल्क्यस्मृतौ।

वसु-रुद्रा-दितिसुताः पितरः श्राद्धदेवताः।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः॥

यथा ह्यन्तर्वत्नी सुहृदा दीयमानं दोहदादिद्रव्यमुपभुञ्जाना स्वयं तृप्यति, तेनैव च दोहदद्रव्येण स्वकीयोदरवर्तिनं गर्भं तर्पयति; दोहदप्रदानेनोपकारकर्तारं प्रत्युपकारैः परितोषयति। तथा अग्निष्वात्तादयो वस्वादयश्च देवताविशेषत्वात् अचिन्त्यमहिमानः श्राद्धं भुक्त्वा स्वयं तृप्यन्ति। स्वाधिष्ठिताश्च

---

1. प्रीणयितृत्वं।

मनुष्यपितॄन् तर्पयन्ति। श्राद्धकर्तारं च आयुष्यादिभिः फलैः योजयन्तीत्याशयः। अत्र येषां पितॄणां देशकालव्यवहितातीन्द्रियार्थज्ञाने श्राद्धदेशं प्रत्यागमने च शक्तिर्नास्ति, तेषां देशान्तरस्थानामेव मन्त्रादिप्रापितेन हविषा तृप्तिर्भवतीत्युक्तम् ॥

अतीन्द्रियज्ञानयुक्तानामागमनशक्तियुक्तानां श्राद्धदेशञ्च प्रत्यागतानां वायवीयेन शरीरेण ब्राह्मणशरीराऽऽविष्टानां तृप्तिर्भवतीत्युक्तं कूर्मपुराणे ॥

तृप्यन्ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवाः ॥

तैः ब्राह्मणैः सहाश्नन्ति पितरोह्यन्तरिक्षगाः ।
वायु भूतासु तिष्ठन्ति भुक्त्वा यान्ति परां गतिम् ॥

अत एव ब्रह्मपुराणादिषु उक्तम् ।

आश्वयुज्याश्च कृष्णायां त्रयोदश्यां मघासु च ।
प्रावृडन्ते यमः प्रेतान् पितॄंश्चाथ यमालयात् ॥

विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ।
क्षुधार्ताः कीर्तयन्तश्च दुष्कृतञ्च स्वयं कृतम् ॥

कांक्षन्तः पुत्रपौत्रेभ्यो पायसं मधुसंयुतम् ।
तस्मात् तांस्तत्र विधिना तर्पयेत् पायसेन तु ॥

यतश्चागमन शक्तियुक्ताः पितरः श्राद्धदेशं प्रत्यागच्छन्ति; अत एव पुष्करयात्रायां वियोगवाप्यां रामेण श्राद्धे क्रियमाणे सीता ब्राह्मणशरीरे दशरथादीनपश्यत् ॥

नागरखण्डे श्राद्धदेशं प्रति पितृगणानामागमनमुक्तम् ।

अमावास्या दिने प्राप्ते गृहद्वारं समाश्रिताः ।
वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम् ॥

यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः ।
ततश्चास्तं गते भानौ निराशा दुःखसंयुताः ॥
निश्वस्य शुचिरं यान्ति गर्हयन्तः स्ववंशजम् ॥

मार्कण्डेय उवाच ।

पितृलोकस्थितानां च स्वर्गस्थानामपि क्षुधा ।
पिपासा च तथा राजन् तेषां सञ्जायतेऽधिका ॥

यावन्नरत्रयं राजन् पितृतो मातृतस्तथा ।
उद्धृता ये गया श्राद्धे ब्रह्म लोकेषु ते शुभम् ॥

भुञ्जते क्षुत्पिपासा वा न तेषां जायते क्वचित् ।
न चापि पतनं तस्मात् स्थानात् भवति भूमिप ॥

वंशोच्छेदात् पुनः सर्वे निपतन्ति महीतले ।
आगत्यास्मात् ततो मर्त्या निपत्य जगतीतले ॥
पापाः पापं समायान्ति योविश्रेष्ठं शुभान्विताः ॥

तदेवमुपपन्ना, पितृणां श्राद्धदत्तेन हविषा तृप्तिः, दिव्यपितृणाञ्च फलदातृत्वमिति ॥

तत्र केचिदाहुः । हविःप्रत्युद्देश्यत्वं देवतात्वम् , नतु हविर्भोक्तृत्वं फलदातृत्वं वा । "ग्रावभ्यः स्वाहे"त्यादिष्व-चेतनस्यापि देवतात्वदर्शनात् । इन्द्रादीनामपि विग्रहादिमत्त्वेन

देवत्वानभ्युपगमात् । यत्किञ्चिद्रूपाणां पित्रादीनामुद्देश्यत्व-सम्भवात् देवतात्वोपपत्तेः । फलहेतुत्वन्तु कर्मणएव ।
तत् साधनभूतायां देवतायां स्तुत्यर्थमर्थवादरूपे वाक्ये उपचर्यते । तृप्तिवाक्यमपि चेतनत्वादिगुणं गमयत् प्राशस्त्य परमेवेति ॥
तन्न – श्रुतिस्मृतीतिहासपुराणादिषु सर्वत्र पितृतृप्तिप्राधान्येनैव श्राद्धारम्भ दर्शनात् फलदातृत्वस्यापि विधिमन्त्रयोरादिमध्या-वसानेषु अनेकशोऽभिधानादभियुक्ततराणां शिष्टानां तादृग्धी-दार्ढ्यात् लोकस्यायथाविचिकित्साप्रतीतेः तृप्तिफलदातृत्वयो-रलीकत्वकल्पनाऽनुपपत्तेः ॥

यथा ह्येतानि स्मृतिपुराणेषु पितृतृप्त्याद्यनेकफलप्रति-पादकानि श्राद्धविषयानि, वाक्यानि दर्शितानि । तथा तदकरणे प्रत्यवायप्रतिपादकान्यपि लिख्यन्ते ।

नागरखण्डे ।

तर्पयन्ति न ये पापाः स्वान् पितॄन् नित्यशो नृप ।
पशवस्ते नरा ज्ञेया द्विपदाः शृङ्गवर्जिताः ॥

अल्पप्रयासं महाफलं श्राद्धमकृत्वा प्रत्यवायरूपमनर्थमङ्गीकुर्वा-णास्तमोगुणावृतज्ञाना हिताहितमप्रतिपद्यमानाः पशुसाम्यात् पशवः ।

तथा । जलेनापि च न श्राद्धं शाकेनापि करोति यः ।
अमायां पितरस्तस्य शापं दत्वा प्रयान्ति च ॥

हारीतस्मृतौ ।

न तत्र वीरा जायन्ते नारोगा न शतायुषः ।
न च श्रेयोधिगच्छन्ति यत्र श्राद्धं विवर्जितम् ॥

अपिमूलैः फलैर्वाऽपि तथाह्युदकतर्पणैः ।
अविद्यमाने कुर्वन्ति नैव श्राद्धं विवर्जयेत् ॥

ब्रह्मपुराणे ।

न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते मोहात् तस्य रक्तं पिबन्ति ते ॥

इत्येवं श्राद्धप्रशंसाद्वारेण श्राद्धमाहात्म्यमुक्तम् । अथेदानीं श्राद्धदेवतारूपपितृप्रशंसाद्वारेण श्राद्धमहिमोच्यते ।

ब्रह्मवैवर्ते ।

न हि योगगतिः सूक्ष्मा न पितॄणां परागतिः ।
तपसापि न दृश्याऽसौ किं पुनः मांसचक्षुषा ॥

मात्स्य-पाद्मादिषु ।

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
राज्यञ्चापि प्रयच्छन्ति प्रीताः पितृगणा नृप ॥

रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तता ।
दानशक्तिः सविभवा रूपमारोग्य सम्पदः ॥

श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्म समागमः ।

तथा अन्यान्यपि श्राद्धविशेषजन्यानि फलानि भवन्ति । तद्यथा आभ्युदयिके अभ्युदयः । कर्माङ्गे कर्मसाद्गुण्यम् । तीर्थयात्राङ्गे यात्रा । स्वतन्त्रेषु प्रत्यवायानुत्पत्तिरुपात्तदुरितक्षयश्च । गयादि तीर्थश्राद्धेषु पितॄणां विशिष्टलोकावाप्तिः । पितृतृप्तिस्तु सर्वेष्वपि श्राद्धेषु प्रयोजनम् ॥

श्राद्धविधिपाठस्यापि फलं हारीतेनोक्तम् ।

इमं श्राद्धविधिं पुण्यं कुर्याच्चापि पठेच्च यः ।
स सर्वकामसंयुक्तो ह्यमृतत्वं च विन्दति ॥

बृहस्पतिना तु श्राद्धविधिज्ञानोपदेष्ट्रनुमन्तृणामपि फलमुक्तम् ।

य एवं वेत्ति मतिमान् तस्यश्राद्धफलं भवेत् ।
उपदेष्टानुमन्ता च लोके तुल्य फलौ स्मृतौ ॥

इति चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे श्राद्धविधिफल-प्रशंसाप्रकरणं नाम प्रथमोऽध्यायः ॥

## अथ द्वितीयोऽध्यायः ।

### पितृनिरूपणप्रकरणम् ।

उक्तमुक्ते प्रकरणे श्राद्धैराराधितानां पितॄणां फलदातृत्वम् । अथैतेषामुत्पत्यादिभिर्निरूपणं कर्तुं प्रकरणान्तरमारभ्यते तत्र तावत् प्रकरणप्रतिपाद्योऽर्थः प्रश्नभङ्ग्याप्रस्तूयते ।

ब्रह्मवैवर्त - ब्रह्माण्डपुराणयोः ।

क एते पितरो नाम वर्तन्ते क्व च ते प्रभो ।
पुराश्च के स्मृतास्तेषां कथञ्च पितरः स्मृताः ॥
कथं वा ते समुत्पन्नाः कस्य पुत्राः किमात्मकाः ।
स्वर्गे वै पितरोऽन्ये तु देवानामपि देवताः ॥
स्वर्गे च के तु वर्तन्ते पितरो नरके तु के ।
किमर्थं ते न दृश्यन्ते तत्र किं कारणं स्मृतम् ॥

के च कैः पितरः पूज्याः कान् यजामो वयं पुनः ।
देवा ह्यपि पितॄन् स्वर्गे यजन्तीति हि नः श्रुतम् ॥
एतद्वेदितुमिच्छामो विस्तरेण बहुश्रुत ।
स्पष्टाभिधानमर्थन्तु तद्भवान् वक्तुमर्हति ॥

तदेतत्सर्वमुच्यते । तत्र तावदुत्पत्तिः । सा च द्विधा पुराणेषु दृश्यते । क्वचित् साक्षात् ब्रह्मशरीराः, क्वचिद्व्यवधानेन । तत्र तावत् साक्षादभिधीयते ।

वराहपुराणे ।

पूर्वं प्रजापतिर्ब्रह्मा सिसृक्षुः विविधाः प्रजाः ।
एकाग्रमानसः सर्वास्तन्मात्रान् मनसो बहिः ॥
कृत्वा परमकं ब्रह्म ध्यायन् स्वर्गमगाच्च वै ।
तस्यात्मनि तदा योगं गतस्य परमेष्ठिनः ॥
तन्मात्रा निर्ययुर्देहात् धूमवर्णकृतत्विषः ।
पिबाम इति भाषन्तः खादाम इति चासकृत् ॥
ऊर्ध्वं जिगमिषन्तो वै वियत्संस्थास्तपस्विनः ।
तान् दृष्ट्वा सहसोवाच ब्रह्मा विश्वपितामहः ।
भवन्तः पितरस्सन्तु सर्वेषां गृहमेधिनाम् ॥

वायुपुराणे ।

ऋतमग्निस्तु यः प्रोक्तः स तु संवत्सरो मतः ।
जज्ञिरे ऋतवस्तस्मादृतुभ्यश्चार्तवास्तथा ॥
आर्तवा ह्यनुमासाख्याः पितरो ह्यनुसूनवः ।
ऋतुः पितामहा मासा आर्तवाश्चास्य सूनवः ॥
प्रपितामहास्तु वै देवाः पञ्चाब्दाः ब्रह्मणः सुताः ॥

अत्र संवत्सरकालाभिमानिन्यो देवताः पितृशब्देनोच्यन्ते, न कालमात्रम्। फलदातृत्वस्य चेतनधर्मस्य तत्रासम्भवात्। संवत्सरादिशब्दास्तु संवत्सराद्यभिमानिनीषु देवतासु लाक्षणिकाः।

आदित्यपुराणे।

> ऋतवः पितरो ज्ञेया ऋतात्पश्चाभवन् सुताः।
> मनुष्याणां पशूनां च पक्षिणश्च सरीसृपाम्॥
> स्थावराणां च ^:श्चानां पुष्पं कालर्तवः स्मृताः।

इत्यभिधानात्। कालिकापुराणे तु ऋतुसंज्ञाः पितरः षडुक्ताः 'षड्मध्वादयः ते ऋतवः पितरो देवा' इति वैदिकी श्रुतिः। मधुमाधवौ वसन्तौ। शुचिशुक्रौ शुष्मिणौ। नभो नभस्यौ वार्षिकावृतू। इषोर्जौ शरदृतुः। सहस्सहस्यौ हेमन्तऋतुः। तपस्तपस्यौ शिशिरौ। ऋतवो ब्रह्मण आत्मजाः, तैः षड्भिः संवत्सरः। स प्रजापतिः संवत्सरोऽग्निऋतमुच्यते। ऋताच्च ऋतवो जज्ञिरे तेभ्यः स्थावरजङ्गमाः। ऋतुः कालः तस्मात् सर्वमुत्पद्यते। तस्मात् पितरश्चेति॥ इति ब्रह्मशरीरात् साक्षात् पितृणाना-मुत्पत्तिः उक्ता।

अथ ब्रह्मशरीरात् व्यवधानेनैवोत्पत्तिः—कालिकापुराणे।

> अव्यक्त जन्मनः पुत्रा ये मरीच्यादयः स्मृताः।
> तेषां पितृगणा मुख्या जातास्तेभ्य श्च देवताः॥
>
> देवेभ्यश्च जगत्सर्वं त्रैलोक्यं सचराचरम्।
> विद्धि तत्वं परं वत्स ऋषीणां पितरः स्मृताः॥

तत्र या ब्रह्मशरीरात् पितृणां साक्षादुत्पत्तिः पुराणेषु दृश्यते, सा मरीच्यादीनां पितृत्वमपेक्ष्य, या तु ब्रह्मशरीरव्यवधानेन सा मरीच्यादिपुत्राणां पितृत्वमपेक्ष्येति विवेक्तव्यम् । अतो न विरोधः ।

एवञ्च सति मरीच्यादीनां ये पुत्रास्ते पितरः, मरीच्यादयः पितामहाः, ब्रह्मा प्रपितामह इति गम्यते यश्च ब्रह्मा स प्रजापतिशब्दवाच्यः संवत्सरः प्रपितामहः । मरीच्यादयश्च ऋतवः पितामहाः मासाश्चार्त्तवाः पितर इति न कश्चिद्विरोधः पुराणानाम् ।

मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः ।
तेषामृषीणां सर्वेषां पुत्राः पितृगणाः स्मृताः ॥

इति मनुवक्ये यन्मरीच्यादीनांअपि ब्रह्मशरीराव्यवधानेन जन्मोक्तं तदपि कल्पभेदेन सृष्टिभेदादुपपन्नं ॥ अथैषां पितृणां नामरूपादिभेदाः – तत्र विष्णुधर्मोत्तरे—

पितृणां हि गणाः सप्त नामतस्तु निबोध मे ।
सुभास्वरा बर्हिषद अग्निष्वात्तास्तथैव च ॥

क्रव्यादाश्चोपहूताश्च आज्यापाश्च सुकालिनः ।
मूर्तिहीनास्त्रयश्चैषां चत्वारश्च समूर्तयः ॥

सुभास्वरा बर्हिषद अग्निष्वात्तास्तथैव च ।
त्रयो मूर्त्तिविहीनास्ते राजन् पितृगणाः स्मृताः ॥

क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः ।
मूर्तिमन्तः पितृगणाश्चत्वारः परिकीर्तिताः ॥

**ब्रह्मवैवर्त-ब्रह्माण्डपुराणयोः ।**

तेषां सप्त समाख्याता गणास्त्रैलोक्यपूजिताः ।
अमूर्तयस्त्रयस्तेषां चत्वारश्च समूर्तयः ॥
उपरिष्टाच्च ये तेषां वर्तन्ते ते ह्यमूर्तयः ।
तेषामधस्तात् वर्तन्ते चत्वारः सूक्ष्ममूर्तयः ॥

**ब्रह्मपुराणे ।**

अमूर्ता मूर्तिमन्तश्च पितरो द्विविधा स्मृताः ।
नन्दीमुखास्त्वमूर्तास्यु. मूर्तिमन्तोऽथ पार्वणाः ॥
एकोद्दिष्टाशिन. प्रेता. पितॄणां निर्णयस्त्रिधा ।

उक्ताः सत्कर्मभिः देवपितृसाम्यं प्राप्ताः मनुष्यपितरः । अथ दुष्कर्मभिरधोगतिं प्राप्ता मनुष्यपितरोऽभिधीयन्ते ।

तेभ्योऽपरे तु येऽप्यन्ये सङ्कीर्णाः कर्मयोनिषु ।
भ्रष्टाश्चाश्रमधर्मेभ्यः स्वधास्वाहाविवर्जिताः ॥
भिन्नदेहा दुरात्मानः प्रेतभूता यमक्षये ।
स्वकर्माण्येव शोचन्ति यातना स्थानमागताः ॥
दीर्घायुषोऽतिशुष्काश्च श्मश्रुलाश्च विवाससः ।
क्षुत्पिपासापरीताश्च विद्रवन्ति ततस्ततः ॥
सरित्सरस्तडागानि वापीश्चैवाभिलिप्सवः ।
परान्नानिचलिप्सन्ते कामयानास्ततस्ततः ॥
स्थानेषु पच्यमानाश्च यातना निरयेषु वै ।
शाल्मली वैतरण्याञ्च कुम्भीपाकेषु तेषु च ॥

करम्भवालुकायां च असिपत्रवनेषु च ।
शिलासम्पेषणे चैव पात्यमाना स्व कर्मभिः ।
तत्र स्थानानि तेषां वै दुःखितानामनेकशः ॥

उक्ताः नरकस्थाः मनुष्यपितरः ॥

अथ भूमिस्थाः ।

अप्राप्ता यातनास्थानं श्रेष्ठा ये भुवि पञ्चधा ।
पश्चात्तु ये स्थावरान्ते भूतानां केषु कर्मसु ॥
नानारूपासु जाता ये तिर्यग्योन्यादि जातिषु ॥

वाह्लीकाश्चोष्मपाश्चैव दिवाकीर्त्याश्च ते स्मृताः ।
कृष्णपक्षस्त्वहस्तेषां शुक्लःस्वप्नाय शर्वरी ।

वराहपुराणे ।

एष ते पैतृकः सर्ग उद्देशेन महामुने ।
कथितो नान्त एवास्य वर्षकोट्या हि दृश्यते ॥

याज्ञवल्क्यस्मृतौ ।

वसुरुद्रादितिसुताः पितरश्राद्धदेवताः ॥ इति ।

अथ गुह्याः पितर उच्यन्ते नन्दिपुराणे । अग्निष्वात्तादीन् पितृ-भेदानभिधाय महेश्वरेणोक्तम् ।

अथामराश्चपितरो गुह्याः शृणु नरोत्तम ।
विष्णुः पिताऽस्य जगतो दिव्यो यज्ञः स एव च ॥
ब्रह्मा पितामहो ज्ञेयो ह्यहश्च प्रपितामहः इति ।

एते ब्रह्म-विष्णु-महेश्वरा अपि पितरः । विश्वसृष्टिहेतुत्वात् । पितृपितामहाद्यधिष्ठानभूताग्निष्वात्ताद्यधिष्ठानत्वेन श्राद्धे पितरो देवतारूपाः तद्रूपेणानुसन्धीयमानाः श्राद्धस्य कामपूर्विकां ऐहिकामुष्मिकफलोत्पादिकां शक्तिं जनयन्तीति सर्वेषु श्राद्धकल्पेषु गोपितत्वेन श्रद्धोपदेशोपनिषन्निरूप्या । अग्निष्वात्तादिवत् पितृत्वेनाप्रसिद्धाश्चेति गुह्याः अपूर्वां शक्तिं जनयन्तीत्येतदेव दर्शितम् ।

उद्दिश्य विष्णुः यैरिष्टः पितरः तैस्तु तर्पिताः ।
ब्रह्मा समिष्टः प्रीणाति पुंसः सर्वान् पितामहान् ॥

प्रपितामहानुद्दिश्य त्विष्टोऽहं यैर्महात्मभिः ।
न यान्ति नरके घोरे तेषां वै प्रपितामहाः ॥

मनुस्मृतौ ।

विराट् सुताः सोमसदः साध्यानां पितरः स्मृताः ॥
अग्निष्वात्ताश्चदेवानां मरीच्या लोकविश्रुताः ।
दैत्यदानव यक्षाणां गन्धर्वोरगरक्षसाम् ॥
सुपर्णकिन्नराणाञ्च स्मृता बर्हिषदोऽत्रिजाः ।
सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः ।
वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः ॥
सोमपास्तु कवेः पुत्रा हविष्मन्तोऽङ्गिरः सुताः ।
पुलस्त्यस्याज्यपाः पुत्रा वसिष्ठस्य सुकालिनः ॥
अनग्निदग्धाग्निदग्धान् काव्यान् बर्हिषदस्तथा ।
अग्निष्वात्ताश्च सौम्यांश्च विप्राणामेव निर्दिशेत् ॥

अस्य वाक्यस्य मनुभाष्यकृताव्याख्योच्यते ।

विराट्सुता. विराजः सुताः सोमसदो नाम । ते च साध्या-नां देवविशेषाणां पितरः, तेषां पूज्याः । अनेनैतत् सूच्यते—ईदृशमिदं पित्र्यं कर्मावश्यं कर्तव्यम्, यत्कृतकृत्यैरपि साध्य-नामकैः देवैः क्रियत इति । अग्निष्वात्तास्तु देवानामग्नौ पक्वं चरुपुरोडाशादि स्वदन्ते इत्यग्निष्वात्ता । देवानामिन्द्राग्न्या-दीनां पितरः तेषां पूज्याः अनेनावश्यकर्तव्यता सूच्यते । एव-मुत्तरत्रापि वेदितव्यम् ।

दैत्य-दानव-यक्षाणां बर्हिषदो नाम पितरः, अत्रेर्जाता अत्रिजाः । सुपर्णाः पक्षिणः । किन्नराः अश्वमुखाः । एतेषां तिर-श्चामपि पितरोऽर्चनीयाः किमुतकर्माधिकारिणां मनुष्याणामिति श्राद्धस्यावश्यकर्तव्यतैव सूचिता ।

सोमपा नामेत्यादि । सोमं पिबन्तीति सोमपाः । ज्योति-ष्टोमादिदेवताः इन्द्रवाय्वाद्याः । हविर्भुजः पुरोडाशादिभुजः दर्शपूर्णमासादिदेवताः, आज्यपाः आघाराज्यभागादिदेवताः । सुकालिनः कालयन्ति अपवर्जयन्ति समापयन्ति कर्मेति सुका-लिनः । कर्मापवर्गहोमादिदेवताः । "अथाश्चाग्नेस्यनभिशस्ति पाश्च" इत्यादिविहिताः । सोमपास्तु कवेरित्यादि । हविर्भुज एव हविष्मन्तः ।

अनग्निदग्धेत्यादि । अनग्निदग्धः सोमः; न हि अग्नि-नाऽस्य पाकोऽस्ति । तेन या देवता इज्यन्ते ता अपि तत्सम्बन्धे-नानग्निदग्धा इत्युच्यन्ते । एवमग्निदग्धा इत्यग्निना पच्यमान-पुरोडशादि हविः सम्बन्धिन्यः ।

अत्रैवमभिसम्बन्धः क्रियते । येऽग्निदग्धा उच्यन्ते तानग्निष्वात्तानिति विनिर्दिशेत् । येऽनग्निदग्धाः तान् सौम्यान् सोमपानेन विनिर्दिशेत् । एवं काव्यान् बर्हिषद इति । कवेः पुत्राः काव्याः । तेन सोमपास्तु कवेः पुत्रा इत्युक्ताः । बर्हिषदोऽत्रिजा उक्ताः । नायमेवकारो यथादेशं द्रष्टव्यः । यथादेशत्वे ह्ययमर्थः स्यात् । विप्राणामेवैते पितरो न क्षत्रियादीनाम् । तच्च प्रागुक्तेन विरुध्यते, न चैते वर्णभेदेन पितृत्वेनोक्ताः, येन तत आच्छिद्य ब्राह्मणसम्बन्धितैषामुच्येत । तस्मादपकृष्यैवकारः सम्बन्धनीयः । अग्निष्वात्तानेव, सौम्यानेवेति । विप्रग्रहणमनुवादत्वात् - क्षत्रियादिप्रदर्शनार्थम् ।

एवं नामानश्च पितरो वेदे श्रूयन्ते 'अग्निष्वात्ताः पितरः ये अग्निदग्धा येऽनग्निदग्धा." इति । तान् मन्त्रान् नानाप्रकारेण सुहृद्भूत्वा विवृतवान् इति ज्ञेयम् । वराहपुराणे ब्राह्मणान् प्रतीत्थं व्यवस्थावाक्यमुक्तम् ।

ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ।
वृद्धिश्राद्धेषु सततं पूज्याः श्रुतिविधानतः ॥

अग्निः पुरस्कृतो यैस्तु तान् द्विजास्त्वग्निहोत्रिणः ।
नित्य-नैमित्तिकैः काम्यैः पार्वणैस्तर्पयन्तु तान् ॥

आज्यं पिबन्ति ये चात्र तानर्चन्तिविशः सदा ।

अग्निहोत्रिण इति । एवं क्षत्रियवैश्यैरपि सम्बध्यते । एवं च साग्निकानां त्रैवर्णिकानां पितृभागमभिधायानग्निकानाम् अप्याह—

अनाहिताग्नयो ये च ब्रह्मक्षत्रविशो जनाः ॥
सुकालीनास्तेऽर्चयन्तु लोकाग्निषु रताः सदा ।
इत्येवं पूजिता यूयमिष्टान् कामान् प्रयच्छथ ॥

इति चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे पितृनिरूपण-प्रकणं नाम द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः

### देवतानिर्णयप्रकरणम् ।

अथैतेषां श्राद्धे देवतात्वं निर्णीयते । तत्र तावदिदं सन्दिह्यते । किमेतान्यग्निष्वात्तादिप्रतिपादकानि वाक्यान्यर्थवादाः उतविधयः । विधित्वेऽपि किं? गृहीत्वा गोत्रनामनी श्राद्धं कुर्यादित्येवं विधिवाक्यैः सामान्यतो गोत्रेषु विहितेष्वग्निष्वात्ता, सोमपादिसंज्ञक गोत्रविशेषनियमविधयः । उक्तश्राद्धदेवतारूपेषु यजमानस्य पितृपितामहादिष्वग्निष्वात्ताद्यभेददृष्टिविधयः । मनुस्मृतौ—

अक्रोधनाः शौचपराः सततं ब्रह्मवादिनः ।
न्यस्तशस्त्रा महाभागाः पितरः पूर्वदेवताः ॥

उताग्निष्वात्तादीनां श्राद्धे देवतात्वस्य विधयः इति । तत्र तावत् विधित्वासम्भवात् मेधातिथिरेषां वाक्यानामर्थवादत्वं मन्यते । तथाहि— न तावदेते सोमपादयो गोत्रविधयः । यतो नामनिर्देशोऽयं न गोत्रनिर्देशः; सोमपा नामेति श्रवणात् । गोत्रनामत्वेऽपि नामशब्दः उपपद्यत एवेति चेत् - एवं तर्हि गोत्रनिर्देशे वैयधिकरण्यं स्यात् । पितॄणां सोमपागोत्रमिति ।

न तु सामानाधिकरण्यं पितरः सोमपा इति। अथाभेदोपचारेण गोत्रेण सन्तानाभेद व्यपदेशो दृष्टः, यथा वक्त्रमिन्दुः इति। अत्रोच्यते। इदमिह निरूप्यम्। किमेतदगोत्रं नामेति। विद्या-वित्तशौर्यौदार्यादिगुणयोगात् विख्याततमेन येन कुलं व्यपदिश्यते स कुलसंज्ञाकारी आदिमः पुरुषः गोत्रमिति। एवं हि सर्वेषामेव ब्राह्मणादीनामवान्तरगोत्रभेदास्सन्ति। स्मरन्ति च तादृशम् तत्सन्तानजाः पुरुषा वयममष्य कुले जाता इति। अतः तेनैव व्यपदेशो युक्तः। नहि सोमपा वयमिति कश्चित् गोत्रत्वेन सोमपान् स्मरन्ति यथा भृगुगर्गगालवान्। ब्राह्मणानाञ्च तैरेव गोत्रैर्व्यपदेशो युक्तः। तानि हि मुख्यानि गोत्राणि रूढिरूपेण हि तत्र गोत्रशब्दः प्रवर्तते। न हि तेषां गोत्रत्वे एतल्लक्षणम्। आदिमः पुरुषः संज्ञाकारी गोत्रमिति अनादित्वादेव गोत्राणां ब्राह्मणजातिवत्। न हि पराशरान्मुनेरूर्ध्वं पराशरव्यपदेशः। एवं सति आदिमत्ता वेदस्य प्रसज्यते। अतो नित्यत्वादेतस्य गोत्रव्यपदेशस्य श्राद्धतर्पणादौ तदवगोत्रं श्रावयितव्यम्। न हि नित्ये सम्भवति अनित्यस्योपादानं वैदिके कर्मणि युक्तम्। अतो ब्राह्मणैर्यथागोत्रं गर्गगोत्राय अमुकशर्मण इत्येवमुद्देशंकृत्वा श्राद्धादि कर्तव्यम्। क्षत्रियादीनान्तु नैतादृशो गोत्रव्यवहारो विद्यते। न हि यथा ब्राह्मणा गोत्रं नियतं स्मरन्ति एवं क्षत्रि-यादयः। तस्मात्तेषां लौकिकमेव गोत्रमादिपुरुषः संज्ञाकारी ख्याततम इति। अतस्तेन गोत्रेण ते श्राद्धादौ व्यपदिश्यन्ते, न तु हविर्भुज इत्यादि गोत्रैः। आदिमत्तापि नामधेये नास्ति। ननु यद्येवं पुरुषविशेषस्य गोत्रत्वमभ्युपगम्यते तर्हि क्षत्रियादिषु

तावदशास्त्रीयं गोत्रव्यवहारमुत्सृज्य शास्त्रस्थैरेव हविर्भुजादिभिर्गोत्रव्यवहारः प्रवर्त्तताम्। न हि हविर्भुजादीनां गोत्रत्वे प्रमाणाभावात्। स्वायम्भुवेक्ष्वाकु नहुष नाभाग भरतर्षभ भगीरथादिवत् तेषां गोत्रत्वेनाप्रसिद्धेः। शिष्टापरिग्रहाच्च। तस्मान्न गोत्रविषयः॥ नापि श्राद्धदेवतारूपेषु यजमानस्य पितृपितामहादिष्वग्निष्वात्ताद्यभेदवृष्टिविषयः। तदनुगुणानां श्रुतिलिङ्गवाक्यादीनामदर्शनात् न हि "आदित्यो ब्रह्मेत्युपासीत" इतिवत् पित्रादिषु सोमपादिदृष्टिः कर्त्तव्येति दृश्यते। यदपि च मनुदेवल शातातपस्मृतिषु—

वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः।
प्रपितामहास्तथादित्याः श्रुतिरेषा पुरातनी॥

—यदपि च मनुस्मृतौ।

वसून् वदन्ति वै पितॄन् रुद्रांश्चैव पितामहान्।
प्रपितामहांस्तथादित्यान् श्रुतिरेषा सनातनी॥

यदपि नन्दिपुराणादिषु।

विष्णुः पिताऽस्य जगतो दिव्यो यज्ञेश एव च।
ब्रह्मा पितामहो ज्ञेयो ह्यहश्च प्रपितामहः॥ इति।

यदपि चादित्यपुराणे।

मासाश्च पितरो ज्ञेया ऋतवश्च पितामहाः।
संवत्सरः प्रजानां वै सुमेकः प्रपितामहः॥

इति वस्वादि-विष्ण्वादि-मासादीनां पित्रादिभिः सह अभेदाभिधानं, तदपि न वस्वादिदृष्टिः कर्त्तव्येत्येवं परम्। आदित्यो

मूर इतिवत् प्राशस्त्यपरतयाप्युपपत्तेः । न च सम्भवत्यर्थवादस्ते विधिकल्पनायुक्ता । तदेवं प्रमाणाभावात् नाभेददृष्टिविषयः । चाप्यग्निष्वात्तादीनां श्राद्धदेवतात्वस्यापि विषयः ।

यतः । स पुत्रः पितरं यस्तु जीवन्तमनुवर्तते ।
संस्थितं तर्पयेत् भक्त्या श्राद्धेन विधिना च ॥

इत्यादयः श्राद्धविधयो मृतमनुष्यतृप्त्यर्था एवेति मनुष्याणामेव देवतात्वमापादयन्ति, देवतैव हि त्यज्यमानेन हविषा तर्पणीया भवति । बहवश्च ते तृप्तिसमर्थनप्रकरणे प्रदर्शिताः श्लोकाः । ये मृतमनुष्याणां श्राद्धेषु तर्पणीयत्वं प्रतिपादयन्ति ।

अथैवं मन्यसे, त्यज्यमानहविः प्रत्युद्देश्यत्वं देवतात्वं न तर्पणीयत्वं, तच्चतुर्थ्यादिप्रमाणकमिति । तदपि तर्हि मनुष्येषु विद्यत एव । पित्रे पितामहाय मात्रे मातामहाय पिण्डान्निर्वपेत् इत्यादेः वाक्यस्य अधिकारप्रकरणे बहुशो दर्शनात् ।

अपि नः स्वकुले भूयाद्यो नो दद्यात् त्रयोदशीम् ॥
पायसं मधु संयुक्तं वर्षासु च मघासु च ॥

इत्यादि मृतमनुष्याणां स्वकुलोत्पन्नश्राद्धकर्तृपुरुषप्रार्थनादर्शनात् श्राद्धदेवतारूपाणां प्रशंसाप्रकरणोक्तफलदातृत्वं मृतमनुष्येष्व-सम्भावितञ्चेन्मन्यसे - तन्न । देवभूयं गतेषु मनुष्येषु सम्भवात् तदेवं मृतमनुष्याणां पित्रादीनां श्राद्धेषु देवतात्वमवगम्यमानमग्निष्वात्तादीनां देवतात्वं बोध्यते इति नाग्निष्वात्तादिप्रति-पादकानि वाक्यानि देवतात्वस्य विषयः । न च पित्रादिभिः सहाग्निष्वात्तादीनां विकल्पः सम्भवति । यतः पितृपितामहा-

विभ्यः श्राद्धं कुर्यात् । तथा पित्रे पितामहाय पिण्डान्निर्वपेत्, तथा अत ऊर्ध्वं पुत्रास्त्विभ्यो दद्युरित्येवमादिषु श्राद्धोत्पत्तिविधिवाक्येषु पुत्रादिभिः कर्तव्यमिति श्रूयते । पुत्रादिशब्दाश्च सम्बन्धिशब्दाः । अतः पित्रादीनामुत्पत्तिशिष्टत्वात् अग्निष्वात्तादीनां तत्र विधानासम्भवात् । नह्युत्पत्तिशिष्टगुणावरुद्धे कर्मणि तद्विरुद्धं गुणान्तरं विधातुं शक्यम् । शुद्धानुवादे तदप्रत्यभिज्ञानात् । विशिष्टानुवादे गुणान्तरानुक्तताविरोधात् । न च देवतान्तरविशिष्टं श्राद्धविध्यन्तरमेवेदमिति वाच्यम् । विहितविधानासंभवात् कर्मान्तरत्वप्रसङ्गात् ।

तथा च हरिवंशे ।

पितॄणामादिसर्गन्तु सर्वेषां द्विजसत्तम ।
तस्मादेवं स्वधर्मेण श्राद्धं देयं वदन्ति वै॥

एवमग्निष्वात्तादीनुद्दिश्य ब्राह्मणादिभिरपि श्राद्धं देयम् । स्वधर्मेणेति स्वेन स्वेन धर्मेण यथा ब्राह्मणादिभिः पक्वेनान्नेन शूद्राणां आमान्नेनैवमादिना प्रकारभेदेन इत्यर्थः ।

मनुस्मृतावपि पार्वणस्य शुद्धैवोत्पत्तिः ।

पितृयज्ञन्तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
कृत्वान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ इति ।

अनेकेषु च श्राद्धकल्पेषु नित्यश्राद्धामावास्याश्राद्धादीनां पितृभ्यो दद्यादित्येवंविध एवोत्पत्तिविधिर्दृश्यते । अग्निष्वात्तादयोऽपि च पितृशब्दवाच्या इत्यग्निष्वात्तादीनामप्युत्पत्तिशिष्ट-

त्वात् देवतात्वेनोत्पत्तिशिष्टगुणावरोधदोषः। यानि पुत्रैकोद्दिष्टानि प्रेतश्राद्धादि सपिण्डीकरणसांवत्सरिके च पार्वणविकृतिभूते तत्रोत्पत्तिशिष्टमृतमनुष्यदेवताविरोधात् माभूदग्निष्वात्तादीनां देवतात्वम्। तस्मादस्तु उत्पत्तिशिष्टदेवतानवरुद्धेषु क्वचिदमावास्योपरागादिषु पुण्यकालादिविहितेषु नित्यनैमित्तिककाम्येषु श्राद्धेष्वग्निष्वात्तादीनां वैकल्पिकं देवतात्वम्। अस्ति च वसुरुद्रादित्यानां श्राद्धे देवतात्वस्य विधिः।

याज्ञवल्क्यस्मृतौ।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः। इति।

पैठीनसिरित्याह। य एवं विद्वान् पितॄन् यजते वसवो रुद्रा आदित्याश्चास्य प्रीता भवन्ति। क एते पितरो नाम येभ्यो दत्तमिहाक्षयं भवति। वसवः पितरो रुद्राः पितामहा आदित्याः प्रपितामहाः तेभ्यो दत्तमिहाक्षयं भवति।

अत्र मृतमनुष्योद्देशेन निर्वर्त्यनैव श्राद्धेन वस्वादयः तर्पिता अधिष्ठातृत्वेनैव मृतमनुष्यस्य तृप्तिं कुर्वन्तीति बोद्धव्यम्। एतच्च तृप्ति समर्थनप्रकरणे विस्तरेणाभिहितम्।

यदपि च नन्दिपुराणे पितृगणान् अभिधायोक्तम्।
शुभाशुभगतिं प्राप्ता नाना योनिषु ये नराः।
तैः तैस्तु पुरुषैरिष्टाः पितरस्तर्पयन्तितान्॥
पुत्रैः पौत्रैश्च येषां हि स्विष्टास्तु पितरः सुराः।
पितॄन् पितामहांस्तेषां तर्पयन्ति सुरास्तु तान्॥ इति।
तदपि याज्ञवल्क्येनैव व्याख्यातम्।

अथ के कुत्र कियत्संख्या उद्देश्या इत्यपेक्षायामुच्यते । तत्र तावत् मुख्ये पार्वणे पितृ-पितामह-प्रपितामहास्त्रयः । मातामह-प्रमातामह-वृद्धप्रमातामहाश्च त्रयः : इति । एवं षट् मनुष्य-ब्राह्मणभोजने पिण्डदाने च सपत्नीका उद्देश्याः ।

तथा च वायुपुराणे ।

प्राग्दक्षिणाभिमुखो दद्यात् पिण्डान् पिण्डादनन्तरम् ।
पिण्डानिति बहुवचनात् बहुत्वेऽवगते प्रथमातिक्रमणे कारणा-भावादिति न्यायात् वसन्ताय कपिञ्जलानालभत इति वत् त्रीने-वेत्यवगम्यते ।

त एते त्रयः पिण्डाः पित्रे पितामहाय-प्रपितामहाय इत्येवं विभ्योदेयाः । इति ।

तथा च शातपथीश्रुतिः ।

असावेतत्त इन्येव यजमानस्य पित्रेऽसावेतत्त इति पिता-महायासावेतत्त इति प्रपितामहायेति ।

मत्स्यपुराणेऽपि पित्रादीनां त्रयाणां पिण्डभागित्वमुक्तम् ।

लेपभागाश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् । इति ।

अथ चतुर्थो वृद्धप्रपितामहः स आद्यो येषां ते तदाद्याः तद्गुण-संविज्ञानो बहुव्रीहिः । तस्य अतद्गुणसंविज्ञानात् बलीयस्त्वात् । तद्गुणे हि श्रुतग्रहणम् । अग्रहणमतद्गुणे । तस्मात् चतुर्थ-पञ्चम-षष्ठास्त्रयः पुरुषाः लेपभागिनः । पित्राद्याः पितृ-पिता-मह-प्रपितामहास्त्रयः, एते पिण्डभागिनः ॥

स्मृतिमहार्णवे आह बुधः ।

> गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत् ।
> एकादशे क्षत्रियो ग्रीष्मे । द्वादशे वैश्यो वर्षास्विति ।

स्मृत्यन्तरे तु उपनेयव्यतिरिक्तानामप्यधिकारिणां स्वयमशक्तानामन्यप्रवर्तकत्वमुपलभ्यते । यदाह यमः । "गर्भाष्टमेऽब्दे ब्राह्मणमुपनाययेत् । एकादशे तु राजन्यमुपनाययेत् । वैश्यास्तु द्वादशे वर्षे उपनाययेदिति" । मनु शंख व्यासाः ।

> गर्भाष्टमे वै कुर्वीत ब्राह्मणस्योपनायनम् ।

एतच्च हेतुमण्णिजन्तमुपनायनशब्दं व्याचक्षणैः अपरार्कादिभिः उपपादितम् । तस्मात् उपनयनादिषु उपनेयादीनामस्त्यधिकार इति । अतएव सत्यकामो नाम जाबालो मातरमामन्त्र्यात्मानमुपनाययितुं गौतममाजगामेति छन्दोग्योपनिषदि श्रूयते ।

कन्यानां च स्वयमपि स्वविवाहकर्तृत्वं कारयितृत्वं च दृश्यते । अतस्तासामपि स्वार्थप्रतिघातके स्वविवाहे अस्त्यधिकारः । तदानीमन्येषां तदधिकारनिर्वर्तकत्वेनैव कर्तृत्वकारयितृत्वे । पितृ-मातृ-भ्रात्रादीनां त्वन्यप्रेरितानां विधित एवाधिकारनिर्वर्तकत्वम् । अनिर्वर्तकत्वे दोषश्रवणात् । तदन्येषां विध्यभावात् कन्याप्रेरणसहकृतपाणिग्रह इति तत्र तानि वचनानि ।

"गम्यन्त्वभावे दातॄणां कन्या कुर्यात् स्वयंवरम्" इत्यादीनि याज्ञवल्क्याद्युक्तानि । अतो मातृ-मातुलादिना क्रियमाणेऽपिविवाहे कन्याया एव पित्रादिवर्गेभ्यो वृद्धिश्राद्धं कुर्यादिति ।

ननु मातृ-मातुलादीनामपि विवाहकर्तृत्वोपदेशात् अकरणे च दोषाभिधानात्तेषामप्यधिकारे तदीयपितृभ्योऽपि श्राद्धं देयमेव। नैतदेवम्। न हि प्रत्यधिकारमङ्गावृत्तिः। प्रधाने नैक्यात्। सत्र इव तत्र हि प्रत्येकमधिकारभेदेऽपि प्रधानमेकमेव समुच्चितानां कर्तृत्वविधेः। नचात्र वैपरीत्यं विकल्पो वास्त्विति शङ्कनीयम्। फलभागित्वेन कन्यानामेव मुख्याधिकारित्वात्। न चैवं सति विवाहाख्य प्रधानैक्यात्। कन्यादातृ-प्रतिग्रहीत्रोरप्येकमेव नान्दीमुखं श्राद्धं स्यात्। न पुनः पृथक् श्राद्धद्वयम्। द्वे एवैते प्रधाने य एष प्रतिग्रहो दानं च। कन्यापुत्रविवाहे चेति पृथग्विधानाच्च। अन्यथा विवाह इत्येवोच्यते। तस्मात् कश्चिदाचार्यः परपुत्रमुपनयन्नुपनेयपितृभ्य एव नान्दीश्राद्धं कुर्यात्। मातृ-मातुलादिश्च कन्याविवाहं कुर्वन् कन्यापितृभ्य एवेति। अत एव संस्कार्यस्यैव पितृभ्यः श्राद्धकरणे प्राप्ते यदा पितुः संस्कारकत्वं तदा संस्कारकस्य पितृभ्यः एव श्राद्धमित्याह कात्यायनः।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्॥

इति। यदि पुनः सर्व एव कर्ता स्वपितृभ्यो दद्यात् तदेतन्नवक्तव्यं स्वपितृभ्यः पितेति।

ननु संस्कारकर्मसु पितृभ्यः पिण्डान् दद्यात् इत्येतावन्मात्रं विधीयते। अन्यदनूद्यते इत्यतः पिता चेत् स्वपितृभ्यः इत्येवं सम्बन्धो न विधीयते। नैवम्। गुणविधौ हि प्रधानानुवादः

तादर्थ्यादुपयुज्यते, न प्रधानविधौ गुणानुवादः। गुणानां चानुवादः प्रधानविधिना अर्थादुपस्थापितानां वक्तव्यः। स चायं विध्येकवाक्यताऽनुपपत्तेरयुक्तः। पर्यवसितेहि प्रधानविधायकव्यापारे गुणानां प्राप्तिः, तत्पर्यवसानं च स्व सहचरितपदार्थानुवादपूर्वकम्, अतः प्रधानोत्पत्तिवाक्ये गुणानुवादे परस्पराश्रयः, अनेकवाक्यता, विरम्यव्यापारः, एकस्मिन्नेववाक्ये एकस्यैव विधित्वानुवादत्वे चेति, एते दोषाः प्रसज्येरन्। विध्यनुवादयुक्ते च वाक्ये पूर्वमनुवादिकं पश्चाद्विधिः। यतः तदुद्दिश्य विधिर्भवति। ननु विध्यनुवादमन्तरेणैव तावत्पदानि स्वार्थाभिधानेनैकार्थपराणि सन्त्येकवाक्यतामनुभवन्ति पश्चात् प्राप्ताप्राप्तविवेकेन शब्दप्राप्त्यप्राप्तिविवेकेन वा विध्यनुवादरूपताम्।

नैवम्। विधित्वानुवादत्वप्रतीतिमन्तरेण वाक्यार्थस्यैवानवगमात्। प्राप्ताप्राप्तविवेकादिना यत्पश्चात् विधर्यविवेचनं क्रियते तदपि पूर्वप्रतीतविपरीतविध्यनुवादभावविवृत्यर्थ, सन्देहनिवृत्यर्थं वा। अविवर्तमानाहि तस्मिन् अन्यादृश विध्यनुवादभावमाश्रित्यैव वाक्यार्थं प्रतिपादयन्ति। तस्यामवस्थायां तु विरोधमावहन्त्येव। अत एव कर्मोत्पत्तिवाक्ये श्रूयमाण गुणः सोमादिः, नानुवादोऽस्त्येव गुणविधिः। आ उद्वाहनादित्ययं तु गुणो विधीयताम्। उद्वाहात्परेषु सुतसंस्कारेषु पितुरधिकाराभावात् तस्य तेषु वृद्धिश्राद्धाप्राप्तेः तन्निवृत्यर्थ. विधिरनर्थकः। प्राप्तार्थत्वाच्चाविधिरेव जह्यात्। अतः पिता चेत् स्वपितृभ्य एष सम्बन्धो विधीयते नान्य इति। अत एव तस्याभावे तु तत्कर्मादित्ये तदुपपद्यते पितुरभावे अन्योऽपि यः कश्चित् संस्कारं कुर्यात् सः तत्क्रमात्

तं पितरमारभ्य यः संस्कार्यस्य पितॄणां क्रमः तेन क्रमेण दद्यात्। न तु स्वकीयेभ्यः पितृभ्यः इति।

ननु नायमस्यार्थः। किन्तु तत्क्रमादनन्तराधिकारिक्रमा-दिति। नैवम्। एवं हि सति तुशब्दापातितपूर्वविहितवैपरीत्या-नगविपर्यालोचनया पूर्वं पितुः कर्तृत्वं विहितमिति मन्तव्यम्। तथा चानर्थक्यं पितृकर्तृकेषु सुतसंस्कारेषु अन्यस्य श्राद्धकर्तृत्वा-प्राप्तेः। प्रधानेऽधिकृतोऽङ्गेऽधिक्रियत इति न्यायात् पितुः प्राप्तेश्च तदनन्तराधिकारिक्रमादित्येवं विधं चार्थं गृह्यमाणं असन्नि-हितपरामर्शः प्रसज्येत। किञ्च अस्मिन् पक्ष वचनान्तरावगतः क्रमोऽनुसन्धीयमानोऽनुवाद एव स्यात्। नान्वद वचन पितृ-व्यतिरिक्तैः मातृ-मातुलादिभिर्विवाहसंस्कारं कुर्वाणै. स्वपितृभ्य एव श्राद्धं कर्तव्यमित्यमुमर्थं विधत्त। कथ? स्वपितृभ्य इत्य-स्यानुषङ्गात्। भवेदेव यदि तत्क्रमादित्यत्र कर्तृक्रम उच्येत पितृतस्त्वेष इति व्याख्यातत्वात्। किञ्च यदि सर्वेऽपि कर्तारः स्वपितृभ्यो दद्युः तदा स्वपितृभ्य. पितति नवक्तव्यं स्यात्।

तस्मादाचार्य - मातृ - मातुलादय. संस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युः न स्वपितृभ्य इति॥

अथात्र पारमार्थिकः पक्षोऽभिधीयते। यदा पिता पुत्रा-देर्विवाहोपनयनादि कुर्यात् स्वेभ्य एव दद्यादिति वचनात्। यदाचान्ये वचनलब्धाधिकाराः पितामह-भ्रातृ-सकुल्य-जनन्या-दयः तदापि स्वपितृभ्यः, तस्याभावे तु तत्क्रमादित्यत्र स्वेभ्य एवेत्यनुषङ्गात् प्रधानेऽधिकृत एवाङ्गेऽधिक्रियते। मातृ-पितृ-

मातामहानां श्राद्धं कुर्यादित्येवं विधश्च विधिः मात्रादिशब्दानां सम्बन्धिशब्दत्वादधिकारिणमेव सम्बन्धिनमुपादाय पर्यवस्यतीति। ये पुनः केचनाहत्यवचनेनानुक्ताधिकारास्ते तदीयेभ्यः श्राद्धं कुर्युरिति । इत्याभ्युदयिकश्राद्धे देवताः ॥

अथेदानीं तेष्वेव श्राद्धेषु अधिकारिविशेषप्रयुक्तदेवता-निर्णयः । तत्र तावत् द्व्यामुष्यायणमधिकृत्योच्यते । नारदस्मृतौ ।

> द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् ।
> रिक्थादर्द्धं समादद्युः बीजिक्षेत्रिकयोस्तथा ॥

अत्र पृथगित्यभिधानादेकैकस्मिन् पितृवर्गे त्रयस्त्रयः पिण्डाः इत्येवं षट्पिण्डाः प्रदेया इत्युक्तं भवति ।

अत एव देवलस्मृतौ ।

> द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् ।
> षण्णां देयास्तु षड्पिण्डा एवं कुर्वन्न मुह्यति ॥ इति ॥

बोधायनादयस्तु षट्दैवत्यास्त्रय एव पिण्डा इत्याहुः ।

> द्विपितुः पिण्डदानं स्यात् पिण्डे पिण्डे च नामनी ।
> त्रयश्च पिण्डाः षण्णां स्युरेवं कुर्वन्न मुह्यति ।। इति ।।

आपस्तम्बोऽपि ।

यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेत् इति तदेवं षण्णां षट्पिण्डाः त्रयोवेति विकल्पः । यथा गृह्यं व्यवस्था-चेत्यवगन्तव्यम् । अत्र देवल-बोधायनादिस्मृतिषु पिण्डशब्दः श्राद्धोपलक्षणपरः । अतएव प्रवराध्याये द्व्यश्राद्धे कुर्यादेकं श्राद्धं

वा पितॄनुद्दिश्यैकपिण्डे द्वावनुकीर्तयेत् प्रतिग्रहीतारं चोत्पादयितारं च आ तृतीयात् पुरुषादिति । अत्र पितृवर्गद्वयस्य द्वे श्राद्धे कुर्यात् षट्पिण्डांश्च प्रदद्यात् । अथवा वर्गद्वयस्यैकमेव श्राद्धं कुर्यादेकैकस्मिन् ब्राह्मणे द्वौ द्वौ पितरौ पितामहौ प्रपितामहौ च सम्बन्ध नाम गोत्रैरनुकीर्तयेत् इत्यनुसन्धेयम् । हारीतसूत्रे तेषामुत्पादयितुः प्रथमः प्रवरो भवति । द्वौ द्वौ निर्वापे दद्युरेकस्मिन् एव वा द्वावनुकीर्तयेयुः । द्वितीये पुत्रः । तृतीये पौत्र इति ।

अथेदानीं जीवत्पितृकाधिकारिकेषु श्राद्धेषूच्यन्ते । तत्राह विष्णुः पितरि जीवति श्राद्धं कुर्यात् येषां पिताकुर्यात् तेषां कुर्यात् । पितरि पितामहे च जीवति येषां पितामहः । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात् । यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं विधाय प्रपितामहात्परं द्वाभ्यां दद्यात् । यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्वा पितामह पितामहाय दद्यात् । यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वभ्यां दद्यात् । यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्वा पितामहपितामहाय दद्यात् ।

मातामहानामप्येवं कुर्यात् श्राद्धं विचक्षणः ।
संख्योहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥

अस्यार्थः । पितरि जीवति श्राद्धं कुर्यात् येषां पिता कुर्यात् । पितर्येव जीवति अन्येषु प्रमीतेषु इति प्रथमः पक्षः । पितरि पितामहे च जीवति अन्येषु प्रमीतेषु इति द्वितीयः । त्रयो जीवन्तीति तृतीयः । यस्य पिता प्रेतः स्यात् पितामह-प्रपितामहौ जीवत इति चतुर्थः । यस्य पिता पितामहश्च प्रेतौ स्यातां प्र-

पितामहश्च जीवतीति पञ्चमः । पितामह-पितामहौ वृद्धप्रपितामहः । यस्य पितामहः प्रेतः स्यात् पिता प्रपितामहश्च जीवतः इति षष्ठः । यस्य पिता प्रपितामहश्च प्रेतौ स्यातां पितामहश्च जीवति इति सप्तमः ।

अयमत्राशयः ।

अन्तर्हितेभ्योऽनन्तर्हितेभ्यो वा प्रेतेभ्यः त्रिभ्यः क्रमेण श्राद्धं कर्तव्यमितिन्यायप्राप्ते ऊहे पुनर्वचनं एकप्रयोगतया तदप्राप्त्याशङ्कायां शेषाणां मन्त्रवर्जितमिति । पितृ-मातामह-व्यतिरिक्तानां ऊहितमन्त्रवर्जितम् । पितृपदवानेव मन्त्रः स्यादित्यर्थः । अत्र च संख्योहवचनं लिङ्गं, न पुनः पितृव्यादि श्राद्धमन्त्रनिषेधः । कुर्यादिति यच्छब्दायोगादकरणे न जीवत् पितृकस्य प्रत्यवायः । किन्तु कुर्वाणस्य फलविशेषो भवतीति ।

## अथ संन्यासाङ्गभूतश्राद्धेषु देवताः ।

तत्र देवश्राद्धे ब्रह्म-विष्णु-महेश्वराः । ऋषिश्राद्धे देवर्षि-ब्रह्मर्षि-क्षत्रर्षयः । क्वचिद्ग्रन्थे देवर्षि-क्षत्रर्षिमनुष्यर्षयः । दिव्यश्राद्धे वसुरुद्रादित्याः । मनुष्यश्राद्धे सनक-सनन्दन-सनातनाः । भूतश्राद्धे पृतृव्यादीनि भूतानि चक्षुरादीनि करणानि चतुर्विधभूतग्राम इति तिस्रः । पितृश्राद्धे पितृ-पितामह-प्रपितामहा-मातामह प्रमातामह - वृद्धप्रमातामहाश्च । मातृश्राद्धे मातृपितामही-प्रपितामह्यः । आत्मश्राद्धे आत्म-पितृ-पितामहाः । एते च सर्वे नान्दीमुखविशेषणवन्तो देवताः । यतः शौनकप्रोक्ते संन्यासविधौ पठ्यते ।

## अथातः संन्यासविधिं व्याख्यास्यामः ।

पूर्वेद्युर्नान्दीमुखश्राद्धं कुर्यात् । देवऋषि-दिव्य-मनुष्य-भूत-पितृ-मात्रा-त्मादीनां पृथक् पिण्डदानैः युग्मैः ब्राह्मणैरष्टौश्राद्धानि कुर्यात् इति । एषां च श्राद्धानां संन्यासार्थत्वेन कर्माङ्गत्वा-दिष्टिश्राद्धे क्रतुर्दक्ष इति विश्वेदेवाः, सत्यवसु संज्ञका वा 'सत्यो नान्दीमुखे वसु.' इति वचनात् । इति संन्यासाङ्गश्राद्धे देवताः ॥

तदेवमुक्ताः श्राद्धशब्दार्थान्तर्गतब्राह्मणभोजन - पिण्ड-निर्वापणात्मक प्रधानकर्मद्वयसम्बन्धिन्यो देवताः ।

अथेदानीं श्राद्धान्तर्गता ग्नौकरणसंज्ञक प्रधानकर्मसम्ब-न्धिन्योऽभिधीयन्ते । तत्रावच्छातपथे पिण्डपितृयज्ञप्रकरणे ।

स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः । देवान्वा एष उपावर्तते य आहिताग्निर्भवति । यो दर्शपौर्णमासाभ्यां यजतेऽथैतत् पितृयज्ञेनेवाचारीत्तदु देवेभ्यो निह्नुते स देवैः प्रसूतोऽथैतत् पितृभ्यो ददाति । तस्मादुद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्यः स वा अग्नये च सोमाय च जुहोति ।

अथेदानी वैश्वदेविकाख्याङ्ग समवायिन्योऽभिधीयन्ते ।
तत्र विश्वेषां देवानामुत्पत्तिः ब्रह्माण्ड-ब्रह्मवैवर्तयोः ॥
दक्षस्य दुहिता साक्षाद्विश्वानामेतिविश्रुता ॥
विधिना सा तु धर्मज्ञ दत्ता धर्माय धीमते ॥
तस्याः पुत्रा महात्मानो विश्वेदेवा इति श्रुतिः ।
विख्यातास्त्रिषु लोकेषु सर्वलोकनमस्कृताः ॥

एतेषां स्वरूपं गरुडपुराणे ।

विश्वायां दक्षकन्यायां जाता धर्मान्महात्मनः ।
विश्वेदेवा इति ख्याता देववर्या महाबलाः ॥

शक्रेण सह योद्धारो विजेतारस्तु रक्षसाम् ।
यन्नामस्मरणादेव प्रद्रवन्त्यसुराः क्षणात् ॥

बाणबाणासनधरा द्विभुजाः श्वेतवाससः ।
केयूरिणः कुण्डलिनः किरीटकटकान्विताः ॥

धैर्य सौन्दर्य संयुक्ता दिव्यस्रगनुलेपनाः ।
इन्द्रस्यानुचराः सर्वे गोप्तारस्त्रिदिवस्य ते ॥

यमसंहितायाम् - विश्वेऽपि विश्वेदेवास्तु दक्षिणे बाणपाणयः ।
द्विहस्ता वामभागे तु शरासन परायणाः ॥

पद्मपुराणे ।

विश्वांस्तु देवान् शरचापपाणीन् ।
ध्यायेद्विचित्राभरणान् सुवेषान् ॥ इति ।

एतेषां श्राद्धदेवतात्वे इतिहासस्तु ब्रह्माण्ड-ब्रह्मवैवर्तयोः ।

समाः ववमहात्मानश्चेरुरुग्र महत्तपः ।
हिमवच्छिखरे रम्ये देवर्षि गणसेविते ॥

सर्वाप्सरोभिश्चरिते नित्यं गन्धर्वसेविते ॥
शुद्धेन मनसा प्रीताः पितरस्तानथाब्रुवन् ॥

वरं वृणीध्वं प्रीताः स्म कं कामं करवामहै ।
ब्रह्माचाह महातेजास्तपसाऽस्मी सुतर्पितः ॥

प्रीतोऽस्मि तपसानेन कं कामं वितरामि वः ।
एवमुक्तस्तदा विश्वे ब्रह्मणा विश्वकर्मणा ॥

ऊचुः ते सहिताः सर्वे ब्रह्माणं लोकपावनम् ।
श्राद्धमस्माक भवद्दय स ह्येष काङ्क्षितो वरः ॥

प्रत्युवाच ततो ब्रह्मा तान् वै त्रिदशपूजित. ।
भविष्यत्येवमेवेति काङ्क्षितो यो वरस्तु यः ॥

पितृभिश्च तथेत्युक्त मेवमेतन्न संशयः ।
सहास्माभिस्तु भोक्तव्य यत् किञ्चित् पच्यते त्विह ॥

.स्माक कल्पत श्राद्ध भवन्तोऽग्र्याशिनो हि वै ।
भविष्यन्ति मनुष्येषु सत्यमेतदुदाहृतम् ॥

माल्यगन्धैस्तथान्नेन युष्मांश्चैवार्चयन्तु वै ।
दत्ते दत्ते तु युष्मभ्यमस्मभ्यन्दास्यते ततः ॥

विसर्जनमथास्माकं पूर्वं पश्चात्तु दैवतम् ।
रक्षणञ्चैव श्राद्धस्य अतिथेस्तु विधिश्च यः ॥

भूतानां देवतानां च पितृणां श्राद्धकर्मणि ।
एवं कार्यं च सम्यक् तु सर्वमेतद्भविष्यति ॥

एवं दत्वा वरं तेषां ब्रह्मा पितृगणैः सह ।
भूतानुग्रहकृद्देवः स चचार यथासुखमिति ॥

तथा क्रतुस्मृति-भविष्यत्पुराणयोः ।

सदैवं भोजयेच्छ्राद्धं तत् पूर्वञ्च प्रवर्तयेत् ।
अन्यथा ह्यवलुम्पन्ति सदेवासुरराक्षसाः ॥

अत्र विश्वान्देवानुद्दिश्य क्रियमाणं श्राद्धाङ्गभूतं कर्म दैवमित्युच्यते । तेन सहितं सदैवं, सदैवमिति नियमेन तत्पूर्वं दैवपूर्वं, प्रवर्तयेत्, कुर्यात् । यदि तन्न क्रियते तदा श्राद्धफलं रक्षांस्यपघ्नन्ति । स्वयं वा आददते । अत्र खलु दैवेन कर्मणा सह वर्तते श्राद्धशब्दवाच्यं कर्मेति समासार्थावगमात्, श्राद्धाङ्गदेवाप्रधानत्वेन च दैवस्य व्यपदेशादङ्गत्वमवगम्यते । श्राद्धरक्षणार्थत्वाभिधानेनोपकारकत्वावगमात् ।

मनुस्मृतावपि ।

> देवकार्यात् द्विजातीनां पितृकार्यं विशिष्यते ।
> दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम् ॥
>
> तेषामारक्षभूतं तु पूर्वं दैवं नियोजयेत् ।
> रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् ॥

अस्यार्थः । पितृकार्यं विशिष्यते प्रधानतया श्रेष्ठतां लभते । कथमित्यत आह । दैवं हि पितृकार्यस्य पूर्वं क्रियमाणं विघ्नकारकराक्षसनिवारणद्वारेणाप्यायनं निर्वाहकं भवतीति । अनेनापि वैश्वदेविकमङ्गकर्मेवेति ज्ञायते । पित्रादिदैवत्य-मातामहदैवत्य-प्रधानद्वयवत्यमावास्या श्राद्धप्रयोगे "तन्त्रं वा वैश्वदेविकम्" इति याज्ञवल्क्येन प्रधानप्रवृत्तत्वाभिधानाच्च तत्पूर्वं प्रवर्तयेदित्युक्तम् । अतो वक्ष्यमाणान् पदार्थान् प्रत्येकं वैश्वदेवस्थाने कृत्वा पितृस्थाने कुर्यात् ।

अथेदं चिन्त्यते । किं पुरूरव-आर्द्रवयोः पार्वणप्रयोगे समुच्चितयोः प्रयोगः उत विकल्पितयोरिति । एवमिष्टिश्राद्धे

क्रतुदक्षयोः। एवं नान्दीमुखादिविहितसत्यवस्वादिषु युग्मेष्वपि विकल्पनीयम्। तत्र तावत् विकल्पितयोरिति गृह्यते। व्यवस्थापने क्रतुर्दक्ष इति पृथगेकैकस्य कर्मसम्बन्धावगमात्। न त्वेकैकस्य पृथग्देवतात्वात् द्रव्यदेवतासम्बन्धभेदात् कर्मण एव भेदः स्यात्। को विकल्पस्यावकाशः। एककर्मान्वयिनोर्ह्येकद्वारत्वे विकल्पाभिधा। अस्तु नाम कर्मभेदः। एकप्रयोगान्वयभावेण विकल्पाभिधा। वस्तुतस्तु न देवताभेदात् कर्मभेदः। शब्दान्तराभ्यास-संख्या-गुण-प्रक्रिया-नामधेयानां कर्मभेदकत्वाभिधानात्। ननु देवतापि गुण इति भेदिका भवितुमर्हति। मैवम्। न हि गुण इत्येव भेदकः किन्तु एकस्मिन् कर्मणि अलभमानोऽन्वयम्। अन्यथा द्रव्यविकल्पो देवताविकल्पः तयोः समुच्चयो वा क्वचिन्न स्यात्। दृश्यते चाग्निहोत्रादीनां द्रव्यादौविकल्पः समुच्चयश्च। सोमे च देवता समुच्चयः।

न च वाच्यम्।

यथा सप्तदशप्राजापत्यानित्यत्र पृथक्त्वनिवेशिन्या संख्यया द्रव्यदेवतासम्बन्धभेदः, एवमत्रापि देवताभेदेन सम्बन्धभेदात् कर्मभेदइति। यत एवं मन्यमानो भवान् इन्द्रवाय्वाद्यनेकदेवतान्वितं सोमयागमेव स्मरतु। ननु स्मृत एव, किन्तु तत्रे न्द्रावाय्वादीनामेकयागसम्बन्धित्वेनावगतद्रव्यसम्बन्धावगमात् न कर्मभेदकत्वम्। इह तु न तथेति भेदकत्वमिति। न। उत्पत्ति वाक्ये हि श्रूयमाणो गुणो भेदकः। नतूत्पन्ने कर्मणि गुणं विधातुं प्रवृत्ते वाक्ये, तस्य हि कर्मभेदकत्वे न क्वापिविकल्प-समुच्चयौ स्याताम्। अतो विकल्पितयोः प्रयोग इति प्राप्ते, उच्यते।

"यत्तत्क्रियते कर्म पैतृकैः ब्राह्मणान् प्रति ।
तत्सर्वं तत्र कर्तव्यं वैश्वदेविकपूर्वकम्" ॥

इत्यादिषु देवत्रादिवाक्येषु वैश्वदेविकं कर्तव्यमित्येवंविधे उत्पत्तिविधावर्वगते विश्वेषां देवानामेकपदोपादानादन्योन्यसहितानां देवतात्वेऽवगते सति, तेषां समुच्चयोऽवगम्यमानो न गुणवाक्यस्थेन पृथक् प्रयोगेन बाधितुं शक्यते । नन्वेकपदोपादानेन स्वरसतः सर्वेषामेव विश्वेषां देवानां साहित्यमवगतम् । तच्चेद्, व्यवस्थावचनेन त्रिचतुरादिषु विश्वदेवेषु भग्नं, तदा भग्नमेवास्य साहित्यप्रतिपादनपरत्वमिति कथं समुच्चयः ।

उच्यते । सामान्यतोऽवगम्यमानो वचनार्थो यावत्यंशे वचनान्तरेण बाधितः तदन्यस्मिन्नंशे व्यवतिष्ठत इति समुच्चितयोर्देवतात्वम् ।

अस्त्वेव विदन्तु सन्दिह्यते । किमेकैकं स्वेन स्वेन नाम्ना पृथग्विभक्त्यन्तेनोद्दिश्यैकैको वैश्वदेविक पदार्थोऽनुष्ठेयः । उत द्वौ द्वौ द्वन्द्वसमासप्रयुक्तेन नामद्वयेनोद्दिश्येति ।

तदर्थमिदं विचिन्त्यते । किं सहितयोर्देवतात्वम् । उत देवतयोः साहित्यमिति । यदि देवतयोः साहित्यं तदा प्रत्येकं देवतात्वात् प्रत्येकमुद्देशे तत्सम्पूर्वत्वात् पृथक् पृथक् चतुर्थ्यादिप्रयोगं कृत्वापदार्थोऽनुष्ठेयः ॥ उक्तं हि ॥

एतस्या इति सङ्कल्प-उद्देशोऽत्राभिधीयते ॥ इति ।।

यदा तु सहितयोः देवतात्वं तदा पुरूरव-आर्द्रवसंज्ञकयोः, अग्नीषोमयोरिव एकदेवतात्वरूपाधिष्ठानभूतत्वात् द्वन्द्वसमासेनो-

द्देशं कृत्वा प्रयोगो विधेयः ॥ तत्र "इष्टिश्राद्धेक्रतुर्दक्षः सङ्कीर्त्यो वैश्वदेविके" ॥ इत्येवं विधेन शंखादि वचनेन देवताविधिः । वैश्वदेविकपूर्वकमित्येवं विधेन देवतादिवचनेन कर्मविधिः, कर्मविधिर्वा वैश्वदेविकशब्दः तत्प्रख्यन्यायेन नामधेयमिति वा मन्यमानः एकैकस्य पृथग्विभक्त्यन्तेन नाम्नोद्देशमाह ।

## अथ विकिर भुक्तोच्छिष्टयोर्देवताः ।

मनुविष्णू ।

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥

हारीतः ।

अरूढदन्ता ये नाम मृता गर्भाद्विनिःसृताः ।
मृता ये चाप्यसंस्कारास्तेषां भूमौ प्रदीयते ॥

मार्कण्डेयपुराणे ।

अन्न प्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।
तेन तृप्ति मुपायान्ति ये पिशाचत्वमागताः ॥

ये चादन्ताः कुले बालाः क्रियायोग्या ह्यसंस्कृताः ।
विपन्नास्तेऽन्नविकिरसम्मार्जन जलाशिनः ॥

इति चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे देवतानिर्णय-प्रकरणं नाम तृतीयोऽध्यायः ॥

## अथ चतुर्थोऽध्यायः ।

### श्राद्धदेश कथनप्रकरणम् ।

तदेवमुक्ते प्रकरणे श्रद्धया पित्रादिरूपदेवतोद्देशेन ब्राह्मणभोजनादिश्राद्धपदार्थ इत्येतत्सिद्धवत्कृत्योद्देश्यपित्रादिनिर्णयः कृतः । अथामुमेव श्राद्धशब्दार्थं विचार्य निश्चेतुं प्रकरणान्तरमारभ्यते । तत्र तावत् श्राद्धनिर्वचनेन विचार्योऽर्थः प्रस्तूयते । बृहस्पतिस्मृतौ ।

> संस्कृतं व्यञ्जनाढ्यं च पयो-मधु-घृतान्वितम् ।
> श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते ॥

नागरखण्डे ।

> श्राद्धे श्रद्धा यतो मूलं तेन श्राद्धं प्रकीर्तितम् ।
> तस्मिन् प्रक्रियमाणे तु न किञ्चित् व्यर्थतां व्रजेत् ॥

मूलमिति । श्रेष्ठमङ्गम् । तथाच कात्यायनकृते श्राद्धकल्पे । श्रद्धान्वितः श्राद्धं कुर्वीतेति विहितम् । न ह्यत्र श्रद्धा निमित्तत्वेन चोद्यते, किन्तु यः श्राद्धं कुर्वीत स श्रद्धान्वितः सन् कुर्वीतेति श्रद्धायाः श्राद्धाङ्गत्वमुच्यते । तथा च बार्हस्पत्यपाराशरेण तृतीयाविभक्त्या श्राद्धविशेषणत्वेन श्रद्धोक्ता ।

> देशे काले च पात्रे च विधिना हविषा च यत् ।
> तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ।

अत एव मनुस्मृतौ श्रद्धायोगेन वैशिष्ट्यमुक्तम् ।

> यद्यद्ददाति विधिवत् सम्यक् श्रद्धा समन्वितः ।
> तत्पितॄणां च भवति परत्रानन्तमक्षयम् ॥ इति ।

अतएव यमस्मृतौ श्रद्धाऽभावेन वैगुण्यमुक्तम् ।

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणं ।
अश्रद्धया हुतं दत्तं तद्वै रक्षांसि भुञ्जते ॥

बोधायनोऽप्याह ।

श्रद्धया बोध्यते बुद्धिः श्रद्धया शोध्यते मनः ।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापविमोचनी ॥
तस्मादश्रद्दधानस्य हविर्नाश्नन्ति देवताः । इति ।

ननु सर्वस्यापि सत्कर्मणः श्रद्धाऽङ्गम् । तत् केन विशेषेणास्यैव श्राद्धशब्दोऽयम् । तथाच विष्णुधर्मोत्तरे ।

श्रद्धान्वितेन मनसा यद्यत् किञ्चित् समाचरेत् ।
तत्तद्बहुफलं तस्य जायते लोकयोः द्वयोः ॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।
देवश्रद्धा नरा देवाः कथिता देवभाजिनः ॥
पितृश्रद्धाश्च पितरो दैत्यश्रद्धा दितेः सुताः ।
पापश्रद्धास्तथा पापा विज्ञेया नरकङ्गमाः ॥
तस्माच्छ्रद्धां समास्थाय धर्मं धर्मी समाचरेत् ।
पुण्यं बहुफलं तस्य श्रद्धामास्थाय यत्कृतम् ॥

तदेवं सर्वस्यापि सत्कर्मणः श्रद्धारूपाङ्गयुक्तत्वात् कथमस्यैव श्राद्धशब्दो नामधेयमिति । उच्यते । त्रिविधा शब्दस्यार्थेषु वृत्तिः, रूढ्या, योगेन, योगरूढ्या चेति । तत्र यः समुदायशक्त्या वर्तते स तत्र प्ररूढ इव भवतीति रूढ्या वर्तते । यस्त्ववयव शक्त्या यावद्योगं वर्तते स तु अवयवार्थयोगात् वर्तत इति

योगेव वर्तत इत्युच्यते । यस्त्ववयवशक्त्या वर्तमानोऽपि नियत-प्रयोगात् यावत् योगं वर्तते स योगरूढ्या वर्तत इत्युच्यते । तथा च श्राद्धशब्दो योगरूढ्या वर्तत इत्यस्यैव नामधेयम् ॥

ननु विप्रतिषेधात् न योगरूढिः घटते । यद्यवयवशक्त्या वर्तते न तर्हि समुदायशक्त्येति विप्रतिषेधः ॥ सत्यम् । अवयव-शक्त्यैव वर्तमानः प्रयोगनियमात् सङ्कुचितावयवशक्तित्वेन नात्यन्तयोगपरतन्त्र इति रूढ्यैव वर्तत इति गौणवादादविरोधः ।

आपस्तम्बवचनादपि कर्मनामत्वमवगम्यते ।

अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजानिश्रेयसार्थं तत्र पितरो देवताः" इति एवं स्थिते विचार्यते । किमिदं पिण्डदानस्य ब्राह्मणभोजनस्य वा केवलस्य नामधेयम् उत प्रकृतानां पिण्ड-दान-ब्राह्मणभोजना-ग्नौकरणरूपाणां कर्मणां समुदायस्येति । तत्र तावत् कर्कोपाध्यायाः पिण्डदानस्यैव नामधेयमित्याहुः । तथा हि प्रधानस्यहि इदं नामधेयमधिकारवाक्यगतत्वात् । पिण्ड-दानं प्रधानतया अस्मिन् प्रकरणेऽवगम्यते। तथा च लिङ्ग दर्शनम् ।

अपि नः स कुले भूयात् यो नो दद्यात् त्रयोदशीम् ।
पायसं मधुसर्पिभ्यां वर्षासु च मघासु च ॥ इति ।

अत्र खलु श्राद्धदेवतानां पितॄणां पिण्डविषये प्रार्थनातिशयदर्श-नात् पिण्डदानं प्रधानमवगम्यते । महाभारते गयायां पिण्डे प्रदीयमाने पिण्डग्रहणाय पितॄणां हस्तोत्थानस्याभिधानाच्च । तथा श्राद्धकर्तव्यतायाः विवक्षायां स्मृतिषु पिण्डनिर्वापणस्य कर्तव्यतोक्ता—

सहपिण्डक्रियायां तु कृतायामस्य धर्मतः ।
अनयैवाऽवृताकार्यं पिण्डनिर्वापणं सुतैः ॥

इत्यादिना वचनेन ब्राह्मभोजनासम्भवे पिण्डदानमात्रविधानाच्च । तदेवमेतैः लिङ्गदर्शनैः पिण्डदानस्य प्राधान्यावगमादस्यैव श्राद्धशब्दो नामधेयमिति[1] ।

ननु ब्राह्मणभोजनस्यापि पितृरूपप्रधानदेवताभिसम्बन्धात् प्राधान्यमस्त्येव । नैवम् । भोजनस्य "यद्येकं भोजयेत् श्राद्धे" इति वचनात्, भोजनक्रियासामर्थ्याच्च साक्षात् ब्राह्मणसम्बन्धात् पित्रर्थत्वे प्रमाणाभावात् । नन्वेवं सति पिण्डपितृयज्ञवदुपचारः इति पित्र्यत्वाभिधानं न स्यात् । न । श्राद्धार्थं ब्राह्मणार्थत्वेन तदुपपत्तेः । ननु पिण्डदानमात्रे श्राद्धशब्दार्थे पिण्डाभोजनेऽपि श्राद्धमनेन भुक्तमिति प्रयोगः कथम् ?

लक्षणया श्राद्धाङ्गभूतभुज्यर्थं इति ब्रूमः । तत् सिद्धं पिण्डदानस्यैव नामधेयमिति । एवञ्च क्वचित् प्रयोगे पिण्डदानानिष्पत्तौ प्रयोगे विघ्ने समुत्पन्ने सति पिण्डदानार्थं पुनः ब्राह्मणभोजनस्यावृत्तिः प्रधानार्थत्वादङ्गानाम् । अङ्गं हि तद्दानस्य ब्राह्मणभोजनादि ॥

अन्ये त्वाहुः । ब्राह्मणभोजनमेव प्रधानमिति । तस्यैव श्राद्धशब्दो नामधेयमिति । तथा चापस्तम्बसूत्रे । 'अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजा निःश्रेयसार्थं तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे' इति । आहवनीयकार्ये - प्रक्षिप्यमाणहविर्धारणलक्षणे वर्तते । न चाभुञ्जानाः ते तत्कार्यं कर्तुं

1. तीर्थादौ विप्रालाभे पिण्डमात्रं ददति शिष्टा इदानीमपि ।

शक्नुवन्तीत्यर्थात् ब्राह्मणभोजनपर्यन्तताऽस्य वाक्यस्य भवति ।

अत एव याज्ञवल्क्यः ।

ततो यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ इति ।

तदेवं ब्राह्मणभोजनात्मकप्रयोज्यव्यापारविषयकस्य प्रयोजकव्यापारस्य गौणावहवनीयप्राप्तिपर्यन्तत्वात् अधिगतहोमाभिधानस्य श्राद्धशब्दो नामधेयमिति विश्वरूप-मेधातिथि वामदेव" प्रभृतीनां मतम् । विहितश्चायं व्यापारविशेषः फलसम्बन्धित्वेन श्राद्धप्रकरणे बह्वीष्वपि स्मृतिषु ।

एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति तस्माद्यत्नेन भोजयेत् ॥ इति ।

शौनकगृह्येऽपि । नवावरान् श्रोत्रियान् भोजयेदयुजो वेति ।

मनुस्मृतावपि ।

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥ इति ।

तदेवं यजमाननिष्ठस्य ब्राह्मणभोजनाख्यस्य प्रयोजकव्यापारस्य श्राद्धशब्दो नामधेयम् ।

अथ श्राद्धदेशाः ।

तत्र मनुः ।

[1]शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ।
अगारेषु विविक्तेषु प्रयत्नेनोपपादयेत् ॥

---

1. शुचिं - अस्थ्यङ्गारायनुपहतं । कुल्लूकभट्टः ।
 श्रा. चि. 35

अवकाशेषु [1]चोक्षेषु नदीतीरेषु चैव हि ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥

यमः । शुचिं देशं परीक्ष्याशु गोमयेनोपलेपयेत् ।
अगारेषु विविक्तेषु तीर्थेषु च नदीषु च ॥

स्कान्दे ।

तुलसी काननच्छाया यत्र यत्र भवेत् द्विज ।
तत्र श्राद्धं प्रदातव्यं पितृणां तृप्तिहेतवे ॥

देवलः ।

श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च
नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च ।
विविक्तेषु च तुष्यन्ति दत्तेनेह पितामहाः ॥

शङ्खस्मृतौ ।

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गया शीर्षे वटे श्राद्धं यो नो दद्यात् समाहितः ॥
एष्टव्या बहवः पुत्रा यद्यकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ इति ।

अथ निषिद्धदेशाः ।

वायुपुराणे ।

कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ।
प्रणष्टाश्रमधर्माश्च देशा वर्ज्याः प्रयत्नतः ॥ इति ॥

---

1. चोक्षेषु - स्वभावशुचयोऽरण्यादिप्रदेशाः तेषु ॥ कुल्लूकभट्टः ।

कारस्करो देशविशेषः। कीकटो मागधः।

ब्रह्मपुराणे।

परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जडः।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात्॥

यमस्मृतौ।

परकीयप्रदेशेषु पितॄणां निर्वपेत्तु यः।
तद्भूमिस्वामिपितृभिः श्राद्धकर्मविहन्यते॥
अटव्यः पर्वताः पुण्या नद्यस्तीर्थानि यानि च।
सर्वाण्यस्वामिकान्याहु नं हि तेषु परिग्रहः॥

इति चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे श्राद्धदेशकथनं नाम चतुर्थोऽध्यायः॥

## अथ पञ्चमोऽध्यायः। श्राद्धकाल निर्णयप्रकरणम्।

अथाधिकरणत्वेन कृत्स्नप्रयोगाङ्गत्वेन च सारूप्यात् देशानन्तरं श्राद्धकालोऽभिधीयते।

गरुडपुराणे।

विश्वं सृजत्यवत्यत्ति कालात्मैव जनार्दनः।
अतोऽर्थं कालमेवेह परमं कारणं विदुः॥
नहि कालमनाश्रित्य लोके वेदेऽपि कुत्रचित्।
विधयः प्रतिषेधाश्च सम्भवन्ति विशाम्पते॥
कालएव ततः साध्यः साधनं पुण्यपापयोः।
तस्मात् कर्माणि पुण्येषु कुर्यात् कालेषु धार्मिकः॥
नाकाले विदुषा किञ्चित् कर्तव्यमिति निश्चयः॥

पुण्येषु पुण्यसाधनत्वेनाम्नातेषु, कालेषु कालावयवेषु। नन्वत्र अमूर्तत्व नित्यत्व-विभुत्वैर्हेतुभिः निरवयवत्वात् कालस्य कथ-मवयवा इत्येतच्छङ्का परिहारः।

देवीपुराणे।

> नित्योविभुः स्थितः कालो ह्यवस्थास्तत्र हेतुजाः।
> निमित्तादिविशेषैः स लोके पुण्यफलप्रदः॥ इति॥

अस्यार्थः। सत्यमस्य न सन्त्येवावयवाः स्वाभाविकाः यतोऽयं नित्यः। ते चानित्यस्यैव भवन्ति। यतः सावयवं नामावयव-जन्यम्। [1]जन्यं च विनाशादन्यद्विनश्यत्येव॥

नन्ववयवसमवेतमात्रं सावयवं न तु तज्जन्यम्। नैवम्। [2]सामान्यस्यापि सावयवत्वप्रसङ्गात्। किञ्च कालस्यावयवास्त-ज्जातीया अवयविनमपेक्ष्य वाऽल्पपरिमाणा वक्तव्याः तथा चास्य विभुत्वैकत्वयोर्हानिः। लिङ्गविशेषाच्च। अस्यैकत्व-विभुत्वे कणादाक्षपादादिमुनिसम्मते। स्मृति-पुराणादिप्रसिद्धे चेति। अतो न सन्त्येवास्यावयवाः स्वाभाविकाः। तथाप्यौपाधिकाः सम्भवन्तीत्याह "अवस्थास्तस्य हेतुजा" इति। अवस्थाः पूर्वाह्ण मध्याह्ना-पराह्ण-दिवस-क्षपा-पक्ष-मास-ऋत्व-यन-संवत्सरादिरूप विभागात्मिकाः। हेतुः रविपरिस्पन्दप्रचयविशेषरूपोपाधिभेदः, तज्जाः, तदवच्छेदविबन्धनाः। ताश्चास्य नित्य-नैमित्तिक-काम्य-कर्माङ्गत्वोपाधिभेदेन त्रिविधाः। अतोऽयं कालो नित्यो नैमि-

---

1. अन्यस्यापि ध्वंसस्य अविनाशित्वात्, विनाशात् अन्यत् इत्युक्तम्॥
2. सत्ताजातेः।

त्तिकः काम्य इति त्रिधाव्यपदिश्यते । सोऽयमेवं त्रिधाविभक्तः पुण्यफलप्रद इति । अत्र शतपथश्रुतिः । वसन्तो ग्रीष्मो वर्षाः ते देवा, ऋतवः, शरद्धे-मन्तः शिशिरस्ते पितरो, य एवापूर्यतेऽर्द्ध-मासः, सदेवा, योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्ना, पूर्वाह्णो देवा अपराह्णः पितर इति । अत्रोत्तरायण-दक्षिणायन-शुक्ल-कृष्णपक्षाहो-रात्र-पूर्वाह्णापराह्णविभागेन देव-पितृसम्बन्धः कालस्योच्यते ।

हारीतोऽप्याह । "संवत्सरः प्रजापतिस्तस्योदगयनं शुक्लो-ऽहः पूर्वाह्णश्च देवानाम् । दक्षिणायनं तामिस्रो रात्र्यपराह्णश्च तत् पितृणां । नान्यभावः कृत्स्नभावादुभयथा इज्यन्ते व्यामि-श्रत्वादहरहरथाप्यत्रोदाहरन्ति । यस्येमे वर्त्मनी हव्यकव्ये वहतो, देवा यस्यार्द्धं, पितरोऽर्द्धं, तथैव निमेषा ऋतवो यस्यमूलं तं वै यजन्तममृतमियादिति" ।

अस्यार्थः । योऽसौ प्रजापतिर्नाम देवताविशेषः श्रूयते स एवायं संवत्सरात्मकः कालः । तस्यैतस्य भागद्वयं भवति । तत्रो दगयनं शुक्लो अहः पूर्वाह्णः इत्येको भागः । उदगयनं सूर्योप-भुज्यमानमकरादिराशिषट्कोपलक्षितः कालः । शुक्लः पक्षः । अमावास्योत्तरां प्रतिपदमारभ्य पौर्णमासीपर्यन्तः कालः । अह-र्दिनम् । पूर्वाह्णो द्विधाकृतस्याह्नः पूर्वो भागः ।

तथा च स्कन्दपुराणे ।

आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम् । इति । आङ्-मर्यादायाम् । आवर्तनात् छायायाः परिवर्तनं मर्यादीकृत्य यः

कालः स पूर्वाह्णः । तदेतत् संवत्सरावयवजातं देवानाम् । अत्र दैविकानि कर्माणि कर्तव्यानीत्यर्थः ॥ दक्षिणायनं तामिस्रो रात्रिश्चेति द्वितीयो भागः । दक्षिणायनं सूर्योपभुज्यमानकर्कटकादिराशिषट्कोपलक्षितः कालः । तामिस्रः कृष्णपक्षः पौर्णमास्युत्तरां प्रतिपदमारभ्यामावास्यापर्यन्तः कालः । रात्रिः मेरुव्यवहितसूर्यादर्शनावच्छिन्नः कालः । तदेतत् संवत्सरावयवजातं पितॄणाम् अत्र पित्र्यं कर्म कर्तव्यमित्यर्थः ॥

एवं दैवत्वेन पित्र्यत्वेन च द्वैविध्यमेव कालस्य नान्यभावः नान्यरूपत्वम् । कस्मादित्याह कृत्स्नभावात् । यस्मात्संवत्सरातिरिक्तकालाभावात् एतावानेव सर्वः कालः । अतः देवपित्र्यरूप पूर्वाह्णापराह्णात्मक कालव्यामिश्रत्वात् दैवपित्र्यरूपत्वेन देवाश्च पितरश्चोभयथा पूर्वाह्णापराह्णविभागेनाहरहः प्रतिदिनं इज्यन्ते ॥ त्यज्यमानस्यहव्यस्य कव्यस्य च उद्देश्यत्वं प्राप्यन्ते (प्रार्थ्यन्ते) ।

अत्र अस्मिन्विषये पूर्वे महर्षयः उदाहरन्ति पठन्ति चेत्यर्थः । यस्य इमे वर्त्मनी हव्यकव्ये वहतः । यस्य संवत्सरात्मकस्य प्रजापतेः । देवान् पितॄंश्च प्रति हव्यकव्ये वहतः । उत्तरायणदक्षिणायनात्मके देवयान पितृयानात्मकेवा, द्वे वर्त्मनी द्वौभागौ। यस्य अर्धं देवाः अर्धं च पितरः यस्य च मूत्रं निमेषाः । निमेष काष्ठा कलादयः । मूलं अवयवरूपत्वेन आरम्भकाः इत्यर्थः । तथा यस्य ऋतवः मूलम् ॥ ऋतवः षट् । ते च श्रुतौ उक्ताः मधुश्चमाधवश्च वासन्तिकावृत् इत्यादि ॥

'देवांश्च पितॄंश्च वै यजन्त ममृतमियात्' । यजन्तं-पुरुषं । अमृतं - मोक्षादि, फलाभिमुखेन । इयात् - आगच्छतीत्यर्थः ॥

अथ श्राद्धविशेषः । अमावास्यानिरूपणम् । तत्र याज्ञवल्क्यः ।

अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत् सूर्यसङ्क्रमः ॥

व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥

अमावास्यादिकालाः स्वस्वप्रकरणे एकैक शो वक्ष्यन्ते । रुचिरिच्छा सा यदा श्राद्धानुष्ठानविषया भवति तदुपलक्षितोऽपि कालः श्राद्धाङ्ग भवति । अस्यानिमित्तत्वं पूर्वोक्तश्रद्धानिमित्तत्वनिराकरणन्यायेनैव निराकरणीयम् । तत्राऽमावास्योच्यते । अमावास्या कृष्णपक्षस्य पञ्चदशीतिथिः । अस्याश्च लक्षणं गोभिलेनोक्तम् । यः परमः सन्निकर्षः साऽमावास्येति । तत्रामावास्याशब्दनिर्वचनं शतपथश्रुतौ । 'ते देवा अब्रुवन् । न वा इममन्यत्सोमाद्धिनुयात्सोममेवास्मै सम्भरामेति । तस्मै सोमं समभरन् एषवै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्दृशे तदिमं लोकमागच्छति । स इहैवापश्चौषधीश्च प्रविशति । स वै देवानां वस्वन्नं ह्येषां तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नामेति' ।

अत्र प्रथमवाक्ये वृत्रवधानन्तरं प्रोषितेन्द्रसमागमे देवानामुक्ते वसुनेन्द्रेण, अमा-सह, निवासादमावास्येति । द्वितीयवाक्ये तु वसोः चन्द्रमसोऽस्यां रात्रावस्मिन् लोके निवासादमावास्येति द्विधा निर्वचनम् । इत्यमावास्या निरूपणम् ॥

अथाष्टकाः। अष्टकाशब्देन मार्गशीर्षादिमासचतुष्टयापरपक्षाष्टम्यः। हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका' इति शौनकस्मरणात्। केषांचिन्मते तिस्रएवाष्टकास्तिस्रश्चान्वष्टकाः। तथा च विष्णुः। 'अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः। इति। अष्टकामनु पश्चाद्भवन्तीत्यन्वष्टकाः। अष्टकानामुपरितना नवम्यः।

ब्रह्मवैवर्त-वायुपुराणयोः।

अथ काल प्रवक्ष्यामि श्राद्धकर्मणि पूजितम्।
काम्य-नैमित्तिकाजस्रश्राद्धकर्मविधायिभिः॥
पुत्रदा धर्ममूलं स्युरष्टकास्तिस्र एव च।
कृष्णपक्षे विशिष्टा हि पूर्वा चैन्द्री उदाहृता।
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी।
आद्याऽपूपैः सदा कार्या मांसैरन्या भवेत्तदा॥
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः।

अत्र शाक-मांसा-पूपशब्दा श्राद्धे विहितस्य सर्वस्यापि भोज्यस्य तत्तद्द्रव्यप्रधानत्वप्रतिपादनपराः। न तु द्रव्यान्तरनिवृत्तिपराः। यतो विधेरेकविध्यन्तराबाधेनैव तावत् गतिं न्याय्यां मन्यन्ते। किमु बहुतर विध्यन्तराबाधेव दृष्टाविरोधेन च। दृष्टं हि शाकप्रधानस्य भोज्यस्य तर्पकत्वम्। न तु केवलस्य शाकस्येति।

अत्र स्मृतिः।

अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा।
मातृश्राद्धं पृथक् कुर्यात् अन्यत्र पतिना सह॥

इत्यष्टकानिरूपणम्।

अथ वृद्धिश्राद्धम् । वृद्धिर्नाम पुत्रजन्मादिविभित्तोपलक्षितः कालः । तथा च वृद्धवसिष्ठः ।

पुत्रजन्म-विवाहादौ वृद्धिश्राद्धमुदाहृतम् । इति ।

जाबालिः ।

यज्ञो-द्वाह-प्रतिष्ठासु मेखलाबन्ध मोक्षयोः ।
पुत्रजन्म-वृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥ इति ।

कात्यायनः ।

स्वपितृभ्य. पिता दद्यात् सुतसंस्कारकर्मसु ।
पिण्डानाद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥ इति ।

अथ संस्काराः गर्भाधान-पुंसवन-सीमन्तोन्नयन-व्रतचर्याऽध्ययन-समावर्तन-विवाह-यज्ञ-दानादयः । तत्रैतेषु सुतसंस्कारेषु पिता स्वपितृभ्यो दद्यात् । शेषेषु संस्कारेषु स्वयमेवाधिकारीत्येतद्वि-स्तरेणोक्तमेवाधिकारनिरूपणे ।

इति वृद्धिश्राद्धनिरूपणम् ।

अथ कृष्णपक्ष. । तत्र वाजसनेयसूत्रे कात्यायन. ।

अपरपक्षे श्राद्ध कुर्वीतोर्द्धं वा चतुर्थ्या यदहः सम्पद्येतेति । अपरपक्षे प्रतिपत् प्रभृत्यमावास्यान्ते कृष्णपक्षे ऊर्ध्वं वा चतुर्थ्या यस्मिन् वा अहनि श्राद्धसाधनसम्पत्तिस्तस्मिन्नहनि श्राद्धं कुर्वी-तेति ।

गौतमोऽपि । अथ श्राद्धं अमावास्यायां पितृभ्यो दद्यात् पञ्चमी प्रभृतिवाऽपरपक्षस्य यथाश्रद्धं सर्वस्मिन् वा द्रव्य-देश-

ब्राह्मण-सन्निधानेवा कालनियमः शक्तित इति[1]। अपरपक्षे एक-स्मिन्नहनि श्राद्धमित्येकः पक्षः। प्रत्यहमित्यपरः। कालनियमः शक्तित इति तृतीयः। यथा सामर्थ्यं कालव्यवस्था इत्यर्थः। अत्र नित्यं श्राद्धम्। तथा च कात्यायनः। "शाकेनापि नापर-पक्षमतिक्रामेत्" इति ॥

अथ भाद्रपदापरपक्षः। अत्र यद्यप्यपरपक्षे श्राद्धं कुर्वीत, शाकेनापि नापरपक्षमतिक्रामेदित्यादिभिर्द्वादशापरपक्षग्राहकैः सामान्यवचनैः भाद्रपदापरपक्षोऽपि गृहीत एव। तथापि तस्य पुण्यतमत्वप्रतिपादनार्थं तदतिक्रमे प्रत्यवायप्रतिपादनार्थं च स्मृतिपुराणादिषु विशेषतस्तस्याभिधानं कृतम्।

तद्यथा विष्णुधर्मोत्तरे।

उत्तरादयनाद्राजन् श्रेष्ठं स्याद्दक्षिणायनम्।
याम्यायनाच्चतुर्मासं तत्र सुप्ते तु केशवे ॥

पौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः।
पञ्चम्यूर्ध्वन्तु तत्रापि दशम्यूर्ध्वन्ततोप्यति ॥
मघायुक्ता तु तत्रापि शस्ता राजंस्त्रयोदशी। इति।

उत्तरायणाद्दक्षिणायनं श्राद्धकरणे श्रेष्ठम्। सर्वस्माद्दक्षिणायना-दपि तन्मध्यवर्त्युपेन्द्रनिद्रादिनादाषढ्याः पौर्णमास्याः प्रभृति मासचतुष्टयं श्रेष्ठम्। तस्मादपि सर्वस्मात् प्रोष्ठपदस्य मास-स्यापरपक्षः। तत्रापि पञ्चम्या ऊर्ध्वं दशदिवसाः। तत्रापि दशम्या ऊर्ध्वं पञ्च। तत्रापि मघायुक्ता त्रयोदशीति ॥

---

1. गौतमधर्मसूत्रम्-शक्ति इति उत्तरब्रान्वय. हर-पक्ष; प्र-२ अ-६।

आदित्यपुराणे ।

प्रावृटकृतौ यमः प्रेतान् पितृंश्चाथ यमालयात् ।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥
क्षुधार्ताः कीर्तयन्तश्च दुष्कृतं ते स्वयं कृतम् ।
काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ॥
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु ।
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ॥
ग्रासमात्रं परगृहादन्नं यः प्राप्नुयान्नरः ।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम् ॥
यो वा सन्धारयेद्देहं प्रत्यहं स्वात्मविक्रयात् ।
श्राद्धं तेनापि कर्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ॥ इति ।

नागरखण्डे पितॄन् प्रति ब्रह्मवचनम् ।

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम् ।

ब्रह्मपुराण मार्कण्डेयपुराणयोः ।

दिव्य-भौमाऽऽन्तरिक्षाणि स्थावराणि चराणि च ।
पिण्डमिच्छन्ति पितरः कन्याराशिगते रवौ ॥
कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ॥
राजसूयाश्वमेधाभ्यां य इच्छेद्दुर्लभं फलम् ।
अप्यम्बुशाकमूलान्नैः पितॄन् कन्यागतेऽर्चयेत् ॥

यद्यपि कन्यागते मासमात्रं भवति तथाप्यपरपक्षस्यैव पैत्र्यत्वाद्वचनान्तरसंवादाच्च तत्रैव श्राद्धमित्यनुसन्धेयम् ।

नागरखण्डे ।

आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति ।
शाकेनापि दरिद्रोऽपि सोऽन्त्यजत्वमुपेष्यति ॥
आसनं शयनं भोज्यं स्पर्शनं भाषणं तथा ।
तेन सार्धं न कर्तव्यं हव्यं कव्यं कदाचन ॥
ये न श्राद्धं करिष्यन्ति ते ते पापतरा नराः ।
भविष्यन्ति न सन्देहः सन्तत्या च विवर्जिताः ॥
न सुखं धन-धान्यञ्च तेषां भावि कदाचन ॥ इति ॥

ब्रह्मपुराणे ।

सूर्ये कन्यागते कुर्यात् श्राद्धं यो न गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृनिःश्वासपीडया ॥
न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥

अथैतद्भाद्रपदापरपक्षश्राद्धं मलमासे न कर्तव्यमित्युच्यते ॥

काठकगृह्ये ।

यस्मिन् मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
मलमासः सविज्ञेयो मासे त्रिंशत्तमे भवेत् ॥

बार्हस्पत्ये ज्योतिः शास्त्रे ।

यस्मिन्मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
संसर्पांहस्पतीमासावधिमासश्च निन्दितः ॥

सत्यव्रतः ।

मलिम्लुचस्तु यो मासः समासः पापसंज्ञितः ॥

स चैषां वचनानां पितृकार्यव्यतिरिक्तविषयत्वं मन्तव्यम् । 'हव्यकव्यक्रियाहन्ते'ति गर्हितः पितृदेवेभ्यः' इति च पितृकार्यस्यापि निषेधात् ।

तथा च स्मृतिः । 'अनन्यगतिकं नित्यं कुर्यान्नैमित्तिकं तथा' इति

यस्य नित्यस्य मुख्यकालातिक्रमे जघन्यस्य कालान्तरस्याननुज्ञानादत्यन्तलोपः प्रायश्चित्तञ्च प्रसज्यते तत्कर्मानन्यगति। तत् मलमासेऽपिकुर्यात् । भाद्रपदापरपक्षश्राद्धस्य उत्तरकालाभ्यनुज्ञादर्शनान्नानन्यगतिकत्वम् । अतो मलमासे न कर्तव्यम् । अत एवास्य मलमासे स्पष्टोनिषेधो दृश्यते । यत्तु ज्योतिःसिद्धान्ते ।

घट-कन्यागते सूर्य वृश्चिके वापि धन्वनि ।
मकरे वाथ कुम्भे वा नाधिमासो विधीयते ॥ इति ।
तत् संवत्सरमध्ये मलमासद्वये सति वेदितव्यम् ।

तथा च ब्रह्मसिद्धान्ते ।

मासद्वयेऽब्दमध्ये तु सङ्क्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्रपूर्वः स्यादधिमासस्तथोत्तरः ॥

अत्र सिंहसङ्क्रान्तिमारभ्य मीनसङ्क्रमणावधिके काले यो मासः पूर्वः स प्राकृत एव । तत् पुनः वैकृतो मलमासो भवतीत्यर्थः । "चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेत्" इत्य-

स्यापि ब्रह्मसिद्धान्तवचनस्यायमेवार्थो व्याख्येयः। तस्मात् मलमासान्तर्गते महालया परपक्षे श्राद्धं न कर्तव्यमिति स्थितम्।

ननु किं तदा लुप्यत एव तत्, कालान्तरेवा क्रियमाणमपुण्य-कालं स्यात्। न हि। यतस्तदुत्तरकाले कर्तव्यमिति। अत्र आह पराशरः।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः।
तत्र यद्विहितं कर्म उत्तरे मासि कारयेत्॥

ज्योतिःशास्त्रेऽपि।

षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः।
पूर्वमर्धं परित्यज्य उत्तरार्धं प्रशस्यते॥

अमावास्याद्वयं यत्र रविसङ्क्रान्ति वर्जितम्।
मलिम्लुचः सविज्ञेयः उत्तरस्तूत्तमाभिधः॥

अथ मलमासे श्राद्धकर्मणा प्रतिप्रसवः।

आह यमः।

गर्भे वार्द्धुषिके कृत्ये श्राद्धकर्मणि मासिके।
सपिण्डीकरणे नित्ये नाधिमासो विधीयते॥

तीर्थस्नानं जपो होमो यव-व्रीहि-तिलादिभिः।
जातकर्मा-न्त्यकर्माणि नवश्राद्धं तथैव च॥

मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश।
चन्द्र-सूर्यग्रहे स्नानं श्राद्ध-दानजपादिकम्॥

कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा।

अथायनादयः श्राद्धकालाः ॥

तत्र यद्यपि याज्ञवल्क्यवचने द्रव्य-ब्राह्मणसम्पत्तिभ्यां व्यवधाय अयनविषुवत्सङ्क्रान्तयो निरूपिताः, तथाप्यत्र सङ्क्रान्तित्व-साधर्म्यादव्यवधानेन निरूप्यन्ते ।

तत्र विष्णुपुराणे ।

उपप्लवे चन्द्रमसो रवेश्च [1]त्रिष्वष्टकास्वप्ययनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत् पितरो वदन्ति ।

अत्र किल पानीयमपीति वचनादावश्यकता श्राद्धद्वयस्योच्यत इति मन्यन्ते ।

अत्रायनद्वयं विषुवत्सूर्यसङ्क्रम इत्यस्मिन् याज्ञवल्क्य-वचने च अयनयोर्विषुवतोश्च सङ्क्रान्तिपदेनैव सङ्ग्रहसिद्धावपि द्वयोरपि यत् पृथगभिधानं तत् सङ्क्रान्त्यन्तरेभ्यो विषुवं[2] विषुवादयनमिति यथापूर्वं प्राशस्त्यातिशयप्रतिपादनार्थमिति मन्तव्यम् ।

तथाच विष्णुधर्मोत्तरे ।

श्राद्धं सङ्क्रमणे भानोः प्रशस्तं पृथिवीपते ।
विषुवद्वितयं तत्राप्ययने द्व विशेषतः ॥

आह वसिष्ठः ।

सङ्क्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥

---

1. त्रिष्वित्ति आर्षप्रयोगः । 2. विषुवं-श्रेष्ठम् ।

अत्र त्रिशन्नाड्यः पूर्वं पञ्चदश, पश्चात् पञ्चदशेत्येवं सङ्क्रमयथा द्रष्टव्याः। एवं हि सति देवीपुराणेन सह संवादो भवति। ब्रह्मवैवर्ते।

मेषादिराशिषु रविः क्रमाद्गच्छति सङ्क्रमात्।
द्वादशैव भवन्त्येषां द्विज नामानि मे शृणु॥
एकं विष्णुपदं नाम षडशीति मुखं तथा।
विषुवच्च तृतीयं च अयने दक्षिणोत्तरे॥

अत्राह वसिष्ठः।

अह्नि सङ्क्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्।
रात्रौ सङ्क्रमणे पुण्यं दिनार्धं स्नान-दानयोः॥ इति॥

अनेन सङ्क्रमण सन्निहितोऽपि रात्रिरूपः पुण्यकालो न भवति। किन्तु दिनार्धरूप एवेत्युक्तं भवति। सोऽपि यः सङ्क्रमण-सन्निहितः स एव ग्राह्यः। तदाह गोभिल.।

रात्रौ सङ्क्रमणेभानोः दिवाकुर्यात्तु तत्क्रियाम्।
पूर्वस्मिन् परतोवाऽपि प्रत्यासत्तेश्च तत्फलम्॥ इति॥

प्रत्यासत्तेरित्यनेनेदमुक्तम्। यदि पूर्वरात्रे सङ्क्रमणं भवति तदा पूर्वस्य दिनस्योत्तरार्धं पुण्यम्। यद्यपररात्रे तदा अपरस्य दिनस्य पूर्वार्धमिति। यदि मध्यरात्रे तदा विशेषग्रहणाभावात् पूर्वस्योत्तरार्धमुत्तरस्य च पूर्वार्द्धमित्येतद्वयमपि पुण्याहमिति। तदाह वसिष्ठः।

अर्धरात्रादधस्तस्मिन् मध्याह्नस्यो परिक्रिया।
ऊर्ध्वं सङ्क्रमणे भानोरुदयात् प्रहरद्वयम्॥

पूर्णे चेदर्धरात्रे तु यदा सङ्क्रमते रविः ।
तदा दिनद्वयं पुण्यं मुक्त्वा मकर-कर्कटौ ॥ इति ।

भविष्यत्पुराणे ।

रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः ।
नैमित्तिकन्तु कुर्वीत स्नानं दानं च रात्रिषु ॥

विष्णुः ।

विवाह-व्रत-सङ्क्रान्ति-प्रतिष्ठा-ऋतु-जन्मसु ।
तथो परागपातादौ स्नाने दाने निशाशुभा ॥

ऋतुः - गर्भाधानम् । चन्द्रार्कदृष्टिसन्निपातसमयः पातः ।

गोभिलः ।

राहुदर्शनसंङ्क्रान्तिविवाहात्यय वृद्धिषु ।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च ॥

अत्ययः - बन्धुमरणम् । अत्र सङ्क्रान्तिशब्देन मकरकर्कटावेव गृह्येते । रात्रौ सङ्क्रमणे दिनस्य पुण्यतां वदता वसिष्ठेन "मुक्त्वा मकर-कर्कटा"वित्यभिधानात् । अतो मकर-कर्कटयो-रेव रात्रौ-स्नानादेः प्रतिप्रसव इति गम्यते । सङ्क्रान्त्यन्तरेषु गोभिलादिवचनानुसारादस्त्येव रात्रौ स्नानादेर्निषेध इति । अत्र मन्यन्ते । "मुक्त्वा मकर-कर्कटावि"त्येष पूर्वदिनोभयग्रहणा-पवादः । न तु सर्वात्मना दिनापवादेन रात्रिग्रहणोपदेशः । बोधायनादिवचनेषु रात्रौ मकरसङ्क्रमणे परदिनस्यैव पुण्याह-त्वाभिधानात् । दिनार्द्धग्रहणवचनानि तु केनचित् प्रकारेण रात्रौ सङ्क्रमणसन्निहितषोडशनाडिकादिपरिमितकाले स्नानदानाद्य-सम्भवे व्यवहितमपि दिनार्धं ग्राह्यमित्येवं पराणीति सर्वास्वपि

सङ्क्रान्तिषु रात्रौ स्नानदानादिप्रतिप्रसव इत्याहुः ॥ अन्ये तु रविसङ्क्रमणे दिनं पुण्यम् । ग्रहान्तरसङ्क्रमणे तु रात्रिरेव पुण्येत्याहुः । ग्रहान्तरसङ्क्रमणसमयस्यापि पुण्यतामाह जैमिनिः ।

इन्दोः एका घटिका । कुजस्य चतस्रो घटिकाः इत्याद्याकरे द्रष्टव्यम् ॥ इति सङ्क्रान्तिनिरूपणम् ॥

अथ व्यतीपातः । तत्र प्रशंसादि याज्ञवल्क्यः ।

शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ॥
व्यतीपातोऽत्र विष्कम्भादिषु योगेषु सप्तदशो योगः ।

अस्योत्पत्तिमाह गालवः ।

चन्द्रार्कयोर्नयनवीक्षणजातमूर्तिः
कालानलद्युतिनिभः पुरुषोऽतिरौद्रः ।
अस्त्रोद्यतोऽनुनिपतंश्च निरीक्ष्यमाणः
कघातयेयमिति च व्यतिपातयोगः ॥

अस्य चोत्पत्ति - भ्रमण - पतनसमयेषु पतनानन्तरं च क्रियमाणं स्नानदानश्राद्धादिकं महाफलं भवति । वृद्धमनुना तु प्रकारान्तरेण व्यतिपातो दर्शितः ।

श्रवणाश्वि धनिष्ठार्द्रानागदैवत मस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतमाश्लेषा। मस्तक इति श्रवणादिभिः प्रत्येकं सम्बध्यते । केचित्तु मस्तकं मृगशिर इति व्याचक्षते । अमा - अमा-

वास्या । सा यद्येतेषु नक्षत्रेष्वादित्यवारयुक्ता भवति तदा स एव योगो व्यतीपात संज्ञो भवति । इति व्यतीपातनिरूपणम् ।

अथगजछाया । स्कन्दपुराणे ।

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणी या च गजच्छायेति सा स्मृता ॥

इन्दुः चन्द्रमाः । पितृदैवत्ये नक्षत्रे - मघायाम् । हंसः - सूर्यः । करः - हस्तः । तिथिर्वैश्रवणी - त्रयोदशी ।

ब्रह्मपुराणे ।

योगो मघात्रयोदश्योः कुञ्जरच्छाय संज्ञकः ।
भवेन्मघायां संस्थे च शशिन्यर्के करस्थिते ॥ इति ।

अयमर्थः सूर्ये हस्तस्थिते चन्द्राधिष्ठिताभिर्मघाभिः त्रयोदश्या योगे गजच्छाया संज्ञकः । स च भाद्रपदापरपक्षे सम्भवति ।

[1]'विभाषासेनासुराच्छाये'ति छायाशब्दस्य नपुंसकत्वम् ।
अत्र श्राद्धभोक्तुः दोषः स्मृत्यन्तरे दर्शितः ॥

कृष्णाजिनप्रतिग्राही विक्रयी चैव रेतसः ।
गजच्छायाश्रितो भुक्त्वा न भूयः पुरुषो भवेत् ॥ इति ।

ब्रह्मपुराणेप्युक्तम् ।

मृतके सूतके चैव ग्रहणे चन्द्रसूर्ययोः ।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत् ॥ इति ।

इति गजच्छायानिरूपणम् ।

---

1. एतदन्तः तत्पुरुषः क्लीबं वास्यात् ब्राह्मणसेनं ब्राह्मणसेना इत्यादि २-४-२५

अथ चन्द्र-सूर्ययोर्ग्रहणम् ॥ तत्र प्रशंसादि शातातपः ।

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरीं रात्रिमन्यत्र तस्मात्तां परिवर्जयेत् ॥

देवलः । यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

व्यासः । सर्वं भूमि समं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥

इन्दोर्लक्षगुणं पुण्यं [1]रवेर्दशगुणं ततः ।
गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश ॥

व्यासः । सूर्यवारे भवेद्भानोः सोमे सोमग्रहस्तथा ।
चूडामणिरिति ख्यातः तत्रानन्तं फलं भवेत् ॥

वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ।
तत्पुण्यं कोटिगुणितं योगे चूडामणौ स्मृतम् ॥

विष्णुपुराणे ।

राहोश्च दर्शने दत्तं श्राद्धमाचन्द्रतारकम् ।
गुणवत् सर्वकामीयं पितृणामुपतिष्ठते ॥

ऋष्यशृङ्गः ।

राहुग्रस्तेतु वै सूर्ये यस्तु श्राद्धं प्रकल्पयेत् ।
तेन वै सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

---

1. अत्र दशशब्दः दशलक्ष दशकोटि परः ।

लिङ्गपुराणे शातातपः ।

सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥

शातातपः ।

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव तु ॥

षट्त्रिंशन्मते ।

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥

इति ग्रहणनिरूपणम् ॥

अथ युगादयः । भविष्यत्पुराणे ।

वैशाखस्य तृतीया या नवमी कार्तिकस्य तु ।
पौर्णमासी च माघस्य नभस्ये च त्रयोदशी ॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारिकाः ।

नभस्यो भाद्रपदः । अत्र त्रयोदशीव्यतिरिक्ताः सर्वाः शुक्लाः
भविष्योत्तरे ।

वैशाखस्य तृतीया या समा कृतयुगेन सा ।
नवमी कार्तिके या तु त्रेतायुगसमा तु सा ॥
त्रयोदशी नभस्ये तु द्वापरेण समा मता ।
माघे पञ्चदशी राजन् कलिकालसमा स्मृता ॥
एताश्चतस्रो राजेन्द्र युगानां प्रभवाः शुभाः ।
युगादयस्तु कथ्यन्ते तेनेताः पूर्वसूरिभिः ॥

उपवासस्तपो दानं श्राद्धं होमो जपस्तथा ।
यदत्र क्रियते किञ्चित् सर्वं कोटिगुणं भवेत् ॥

कृतयुगेन समेति । समग्रेऽपि कृतयुगे प्रत्यहं क्रियमाणेन कर्मणा यावत् पुण्यं भवति तावदस्यामेव तिथावित्यर्थः । कोटिशब्दोऽत्र-बाहुल्यातिशयपरः । इति युगादयः ।

अथ मन्वन्तरादयः । तत्र मत्स्य-ब्रह्मपुराणयोः ।

आश्वयुक् शुक्लनवमी द्वादशी कार्तिकस्य च ।
चैत्रस्य तु तृतीया या तथा भाद्रपदस्य तु ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ।
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढस्य पूर्णिमा ॥
आषाढस्य तु दशमी माघमासस्य सप्तमी ।
कार्तिकी फाल्गुनी चैत्री ज्यैष्ठे पञ्चदशी तथा ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ।
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥
सर्वमेवाक्षयं विद्यात् कृतं मन्वन्तरादिषु ॥

अमावास्याऽष्टमी व्यतिरेकेण सर्वाः शुक्लाः एव ॥

नारदीयपुराणे । श्रावणस्यामावास्या भाद्रपदस्य कृष्णाष्टमी मन्वन्तरादय इति प्रतिपादितम् ।

नागरखण्डे - माघशुक्लतृतीयाऽपि मन्वन्तरादिरित्युक्तम् ।

मन्वादिरपि ते वत्स ताःशृणुष्व नराधिप ।
पितॄणां वल्लभा नित्यं सर्वपापक्षयावहाः ॥

यासु तोयमपि क्षमायां प्रदत्तं तिलमिश्रितम् ।
पितृभ्योऽक्षयतां याति श्रद्धापूतेन चेतसा ॥

मात्स्य-ब्रह्मपुराणयोः ।

यस्यां मन्वन्तरस्यादौ रथमाप दिवाकरः ।
माघमासस्य सप्तम्यां सा तु स्यात् रथसप्तमी ॥

पानीयमप्यन्नतिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतोमनुष्यः ।
श्राद्धं कृतं तेन समां सहस्रं रहस्यमेतत् पितरो वदन्ति ॥

इति मन्वन्तरादयः ।

अथ द्रव्य, ब्राह्मण, सम्पत्योपलक्षितः कालः ।

तत्र हारीतः ।

तीर्थद्रव्योपपत्तौ तु न कालमवधारय ।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ॥

तीर्थं - गयादि । द्रव्यम् - अन्नादि वक्ष्यमाणम् । श्रोत्रियेत्यादिविशेषणविशिष्टं च ब्राह्मणं प्राप्य न कालान्तरं प्रतीक्षेत । किन्तु तस्मिन्नेव काले श्राद्धं कुर्यात् । अत्र सद्य इति वचनादावश्यकत्वं प्रतीयते ।

मार्कण्डेयपुराणे ।

विशिष्टब्राह्मणप्राप्तौ सूर्येन्दुग्रहणेऽयने ।
श्राद्धार्हद्रव्यसम्पत्तौ तथा दुःस्वप्नदर्शने ॥
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छया ॥ इति ।

अत्रेच्छापदं यथा नित्यत्वेन न विरुध्यते तथा व्याख्यातमेव ग्रहणप्रकरणे ।

अथ काम्यश्राद्धकालाः । तत्र तावत्तिथयः ।

आह कात्यायनः । अथ काम्यानि भवन्ति । स्त्रियः प्रतिरूपाः प्रतिपदि । द्वितीयायां स्त्रीजन्म । अश्वाः तृतीयायाम् । चतुर्थ्यां क्षुद्रपशवः । पुत्राः पञ्चम्याम् । षष्ठ्यामध्वभागी । कृषिः सप्तम्याम् । वाणिज्यमष्टम्याम् । एकशफं नवम्याम् । दशम्यां गावः । परिचारका एकादश्याम् । द्वादश्यां धनधान्यम् कुप्यं ज्ञातिश्रैष्ठ्यम् । हिरण्यानि त्रयोदश्याम् । युवानः शस्त्रहतस्य चतुर्दश्याम् । अमावास्यायां सर्वमिति । इति काम्याः प्रकीर्णकालाः ।

अथ वैशेषिकाः श्राद्धकालाः ।

तत्र याज्ञवल्क्यवचनोपबद्धकालप्रक्रममनुसरद्भिरस्माभिः वृद्धिश्राद्धकालाः पूर्वमेव निरूपिताः । अथेदानीं सांवत्सरिकश्राद्धकालाः कथ्यन्ते । तत्र तावत् क्षयाहनिर्णयः ।

ब्रह्मपुराणे ।

प्रतिसंवत्सरं कार्यं मातापित्रोर्मृताहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥

मात्रादीनां श्राद्धं कार्यमित्यनेन, अर्थात् पुत्रादीनां कर्तव्यमित्युक्तम् । एतच्चाधिकारमात्रोपलक्षणार्थम् । भ्रातुरित्यत्रापुत्रस्येत्यनुषञ्जनीयम् । ज्येष्ठस्येत्यनेन कनिष्ठस्य भ्रातुर्नावश्यकं सांवत्सरिकमिति दर्शितम् ।

तथा च । "न पुत्रस्य पिता दद्यान्नानुजस्य तथाऽग्रजः" । इति नियताधिकारनिराकरणात् । स्नेहादिना त्वनियतेनाधिकारेणापुत्रस्य कनिष्ठस्यापि सांवत्सरिकं कर्तव्यमेव ।

प्रभासखण्डे ।

मृतेऽहनि पितुर्यस्तु न कुर्यात् श्राद्धमादरात् ।
मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि ॥
नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः ।

तदाह व्यासः ।

मास-पक्ष-तिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तत्तथाभूतं क्षयाहं तस्य तं विदुरिति ॥

तथाभूतमित्युपलक्षणत्रयोपेतम् । अत्र मास-पक्षा-होरात्राणि चान्द्राण्येव ग्राह्याणि । न सौर सावनानि । सन्ति च तानि ब्रह्मसिद्धाते निरूपितानि ।

दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसङ्क्रान्तिविशिष्टः सौरो मासो निगद्यते तज्ज्ञैः ॥

व्यासः । विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च मासश्चान्द्रमसः स्मृतः ॥ इति ।

लघुहारीतः ।

चक्रवत्परिवर्तेत सूर्यः कालवशाद्यतः ।
अतः सांवत्सरं श्राद्धं कर्तव्यं मासचिह्नितम् ।
मासचिह्नं तु कर्तव्यं पौषमाघाद्यमेव हि ॥

इति क्षयाहनिर्णयः

अथ क्षयाह द्वैधनिर्णयः ।

तत्रक्षयाहश्राद्धतिथिद्वैधे, कर्मकालव्यापिनी ग्राह्या । यदाहव्यासः ।
कर्मणोयस्य यः कालस्तत्कालव्यापिनी तिथिः ।

तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

यदा तु तिथिसाम्ये द्वयोरपि तिथ्योरपराह्णसम्बन्धस्तदानीं पार्वणेतिकर्तव्यताके सांवत्सरिके पूर्वैव तिथिः ।

अपराह्णे पितॄणां तु याऽपराह्णानुयायिनी ।
सा ग्राह्या पितृकार्ये तु न पूर्वाह्णानुयायिनी ॥

अत एव शिवरहस्य-ब्रह्मवैवर्त-सौर-नारदीयपुराणेषु ।

दर्शे च पौर्णमासे च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥ इति ॥

क्षयाहमेव विषयीकृत्य, आह बोधायनः ।

अपराह्णद्वयव्यापिन्यतीतस्य यदातिथिः ।
क्षये पूर्वा तु कर्तव्या वृद्धिकार्ये तथोत्तरा ॥

यत्तु व्याघ्रेण विधिसाम्येऽपि परतिथिग्रहणमुक्तम् ।

खर्वो दर्पस्तथा हिंस्रा त्रिविध तिथि लक्षणम् ।
खर्व-दर्पौ परौ पूज्यौ हिंस्रा स्यात् पूर्वकालिकी ॥ इति ॥

खर्वः साम्यम् । दर्पः - वृद्धिः । हिंस्रा—क्षयः । तदेतत्साम्यशास्त्रं क्षयाहव्यतिरिक्त तिथिविषयमित्यास्ताम् ।

तदेवं पार्वणैकसम्बन्धः अपराह्णस्पर्शपराधीननिर्णयः । पार्वणेतिकर्तव्यताकस्य सांवत्सरिकस्यायमङ्गभूतः कालः विवेचितः । एकोद्दिष्टस्य माध्याह्निकत्वात् पूर्वोत्तरयोर्मध्याह्नस्पर्शपुरस्कारेणैव एकोद्दिष्टविधि निर्वर्त्य सांवत्सरिकश्राद्धाङ्गकालनिर्णयो विधेयः । इति क्षयाहद्वैधनिर्णयः ।

## अथ मृताहापरिज्ञाने सांवत्सरिक श्राद्धकालाः ।

आदित्य उवाच ।

मृताहं यो न जानाति मानवो विनतात्मज ।
तेन कार्यममावास्यां श्राद्धं सांवत्सरं नृप ॥

यस्य प्रोषितस्याप्रोषितस्य वा मृतस्य तिथिर्न ज्ञायते तस्य तन्मासामावास्यायां सांवत्सरिकं कार्यमित्यर्थः ।

अस्मिन्नेव विषये एकादश्यां श्राद्धमाह मरीचिः ।

श्राद्धविघ्ने समुत्पन्ने ह्यविज्ञाते मृताहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥

अत्र विशेषत इति कृष्णपक्षस्य प्रशस्ततरत्वाभिधानेन शुक्लपक्षोऽप्यनुज्ञायत इति गम्यते । ततश्च शुक्ल-कृष्णैकादश्यो-र्विकल्पे प्राप्ते एवं व्यवस्था । मासे पक्षे च विज्ञाते तिथि-मात्रस्यापरिज्ञाने तस्य मासस्य तत्पक्षस्थितायामेकादश्यां श्राद्धं कार्यम् । विज्ञायमानपक्षपरित्यागे कारणाभावात् । पक्षस्या-प्यपरिज्ञाने कृष्णैकादश्यां तदलाभे शुक्लैकादश्यामपीति ।

यस्य तु मृताहः परिज्ञायते मासस्तु न ज्ञायते तस्य मार्ग-शीर्षे भाद्रपदे माघे वा तस्मिन्नहनि श्राद्धं कार्यम् ।

तदाह बृहस्पतिः ।

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु ।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत् ॥

यदा तु प्रोषितमृतस्य दिन-मासावुभावप्यविज्ञातौ स्यातां तदा तत्प्रस्थानकालिकयोर्दिन-मासयोस्तत्सांवत्सरिकं कार्यम्। तदाह बृहस्पतिः।

दिन-मासौ न विज्ञातौ मरणस्य यदा पुनः।
प्रस्थानदिन-मासौ तु ग्राह्यौ पूर्वोक्तया दिशा ॥

इति। अस्यायमर्थः। प्रस्थानतिथ्यज्ञाने तन्मासज्ञाने च। तन्मासवर्तिन्यमावास्यायां सांवत्सरिकम्। प्रस्थानतिथिज्ञाने मासाज्ञाने च मार्गशीर्षे माघे वा तस्यामेव तिथौ कुर्यात्। प्रस्थानतिथि-मासयोरुभयोरप्यज्ञाने तु तन्मरणश्रवणकालिकयोस्तिथि-मासयोः कुर्यात्। तदाह प्रचेताः।

"अविज्ञातमृते अमावास्यायां श्रवणदिवसे वा"। इति। श्रवणदिवसे - मरणवार्ताऽऽकर्णनतिथौ।

यस्य तु प्रोषितस्य मरणवार्ता तज्जीवनवार्ताऽपि वागता पञ्चदशवर्षपर्यन्तमागमनं नास्ति तस्य तदूर्ध्वं पालाशीभिः समिद्भिः कुशैर्वा शरीरप्रतिकृतिं कृत्वा यथाविधि दाहसंस्कारं निर्वर्त्य तदानीन्तनपक्ष-मास-तिथिस्पृष्टेऽहनि सांवत्सरिकं कर्तव्यमित्याह जातूकर्णः।

पितरि प्रोषिते यस्य न वार्ता नैव चागतिः।
ऊर्ध्वं पञ्चदशाद्वर्षात् कृत्वा तु प्रतिरूपकम् ॥

कुर्यात्तस्य च संस्कारं यथोक्त विधिना ततः।
तदादीन्येव सर्वाणि शेषकर्माणि सञ्चरेत् ॥

एतच्च प्रोषितमृतश्राद्धप्रयोगप्रकरणे विस्तरेण दर्शयिष्यते । इति क्षयाहापरिज्ञाने सांवत्सरिकदिनकालः । इति सांवत्सरिककालनिरूपणम् ।

### अथ प्रेतश्राद्धानां कालाः ।

तत्र तावन्नवसंज्ञकानां श्राद्धानाम् । तत्रचान्तर्दशाहं क्रियमाणानां नवश्राद्धसंज्ञां विवेशयन्नाश्वलायनो दशाहपर्यन्तं नवश्राद्धसंज्ञकत्वमाह ।

नागरखण्डे भर्तृयज्ञः ।

त्रीणि सञ्चयनस्यार्थे तानि वै शृणु सांप्रतम् ।
यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं प्रकल्पयेत् ॥

एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ।
ततः सञ्चयनस्थाने तृतीयं श्राद्धमिष्यते ॥

पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ।
दशमैकादशे चैव नवश्राद्धानि तानि च ।
वैतरण्यामसंप्राप्तः प्रेतस्तृप्तिमवाप्नुयात् ॥

आह शङ्खः ।

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तत्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

आद्यं - नवम् ॥

पैठीनसिः ।

सद्यः शौचे प्रदातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥

बृहस्पतिः ।

यदिष्टञ्जीवतश्चासीत्तद्द्यात्तस्य यत्नतः ।

तस्य प्रेतस्य जीवतो यत्किञ्चिदभीष्टमासीत्तद्द्यादित्यर्थः ।

इति नवश्राद्धकालाः ।

अथ षोडश श्राद्धानीत्येवं प्रसिद्धानां प्रेतश्राद्धानां कालाः ।

तत्र ब्रह्मपुराणे ।

पितॄणां त्यक्तदेहानां श्राद्धं षोडश सर्वदा ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥

ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया ।
कर्त्तव्याः श्रुतितस्तेषां तत्र विप्रांश्च तर्पयेत् ॥

जातूकर्णः ।

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चैव इत्येतच्छ्राद्ध षोडशम् ॥

षाण्मासिके इत्यनेन विहितयोः श्राद्धयोर्निरूपणार्थमाह ।

एकाहेन तु षाण्मास्या यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सराश्चैव स्यातां षण्मासिके तदा ॥

एकेनाह्ना त्रिभिर्वा यदा षण्मासाः, न्यूनाः स्युः संवत्सराश्च तदा षण्मासाब्दिके कार्ये इत्यर्थः ।

सपिण्डीकरणादर्वाक् कुर्यात् श्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥

ब्रह्मपुराणे ।

द्वादशेऽहनि मासे च विपक्षे च ततः परम् ।
मासि मासि तु कर्तव्यं यावद्वावत्सरं द्विजाः ॥
ततः परतरं कार्यं सपिण्डीकरणं क्रमात् ।
कृते सपिण्डीकरणे चरमं प्रोच्यते पुनः ॥
ततः प्रभृति निर्मुक्तः प्रेतत्वात् पितृतां गतः ॥

इति षोडश श्राद्धानीत्येवं प्रसिद्धश्राद्धानां कालाः ॥

अथ सपिण्डीकरण कालाः ।

तत्र यथाकालं द्वादशसु मासिकेष्वनुष्ठितेषु पूर्णे संवत्सरे तदूर्ध्वमौत्सर्गिकोऽवग्निकसपिण्डीकरणस्य कालः । तथा च मार्कण्डेयपुराणे मासिकान्तानि श्राद्धान्युक्त्वाभिहितम् ।

अथ संवत्सरे पूर्णे यथावत् क्रियते नरैः ।
स पिण्डीकरणं सम्यक् तत्रापि विधिरुच्यते ।

आधानाङ्गभूतात् नान्दीश्राद्धात् प्रागपकर्षणमभिप्रेत्याहोशनाः ।

पितुः सपिण्डीकरणं वार्षिकं मृतवत्सरे ।
आधानाद्युपसंप्राप्तावेतत् प्रागपि वत्सरात् ॥

अत्रचापकृष्यमाणसपिण्डीकरणे तदन्तमपकर्षं स्यादिति न्यायात् पूर्वाणि मासिकान्यपकृष्य सपिण्डीकरणं कर्तव्यम् ।

वृद्धवसिष्ठोऽप्याह ।

श्राद्धानि षोडशादत्वा न तु कुर्यात् सपिण्डनम् ।
तद्भावो तु यतः प्रेतः पितृत्वं न प्रपद्यते ।

अपकर्षपक्ष एवैतत् । अनपकर्षे क्रमविधानादेव तत्सिद्धेः ।

अत एव शाट्यायनिः ।

प्रेतश्राद्धानि सर्वाणि स पिण्डीकरणं तथा ।

अपकृष्य प्रकुर्वीत कर्तुं नान्दीमुखं द्विजः ॥

यत्तु लौगाक्षिवचनम् ।

यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत् ।

मासिकं सोदकुम्भं च देयं तस्यापि वत्सरम् ॥

इति । तत्तु तदन्तापकर्षन्यायेन कृतेष्वपि मासिकेषु तान्येव तु पुन.कुर्यादिति कल्पसूत्रकारवचनोक्तपुनरनुष्ठानविषयत्वेन व्याख्येयम् ।

व्याघ्रस्तु, अग्निरहितानामपि सह षोडशभिः श्राद्धैः सपिण्डीकरणस्य द्वादशाह एव प्रशस्तः काल इत्याह ।

आनन्त्यात् कुलधर्माणां पुंसां चैवायुषःक्षयात् ।

अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ।

इत्यनग्निकसपिण्डीकरणकालाः ।

## अथ साग्निक पिण्डीकरणकालाः ।

तत्राह लघुहारीतः ।

अनग्निस्तु यदावीर भवेत् कुर्यात्तदागृही ।

प्रेतश्चेदग्नि सान्यस्तु त्रिपक्षे वै सपिण्डनम् ॥

आह कात्यायनः ।

एकादशाहं निर्वर्त्य पूर्णं दर्शंयथाविधि ।

प्राक् कुर्वीताग्निमान् विप्रो मातापित्रोः सपिण्डताम् ॥

अस्याभिप्रायः ॥

अग्निमता हि अमावास्यायां पिण्डपितृयज्ञः पिण्डान्वाहार्य्यकं कर्तव्यम् । तच्च प्रमीतमातापितृकस्य सपत्नीक पित्रादि दैवतम् । न च अकृतसपिण्डीकरणयोः तयोर्दर्शश्राद्धादौ देवतात्वमुपपद्यते तस्य सपिण्डीकरणोत्तरकालिकत्वस्मरणात् ।

अतः पिण्डपितृयज्ञ श्राद्धयोर्लोपो माभूत् इति मत्वा अग्निमान् विप्रः एकादशाहकर्तव्य प्रेतकार्यं निर्वर्त्य दर्शात्प्रागेव यस्मिन्कस्मिन्नप्यहनि मातापित्रोः सपिण्डीकरणं कुर्यादिति । विप्रग्रहणमुपलक्षणम्, क्षत्रियादिष्वपि न्यायस्य तुल्यत्वात् ॥ इति साग्निक सपिण्डीकरणकालः ।

### अथ शूद्रस्य सपिण्डीकरणकालाः ।

तत्र सपिण्डीकरणं कर्तव्यमित्यनुवृत्तौ विष्णुः ।

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्तितम् । इति ।

अमावास्याश्राद्धकारिशूद्रविषयमेतदिति वृद्धाः । वचनबलादाशौचमध्ये एव श्राद्धकरणम् । इति शूद्रस्य सपिण्डीकरणकालाः । इति स पिण्डीकरणकालाः ।

### अथ देवताप्रकरणं निरूप्यते ।

तदेवमेते सपिण्डान्वाहार्यक-साधारणसंज्ञकोभयविधपार्वणवृद्धिकर्माङ्ग-काम्य-सांवत्सरिकश्राद्धानां नवश्राद्धषोडशश्राद्धानीत्येवं प्रसिद्धानां सपिण्डीकरणस्यचास्मिन् प्रकरणे कालाः प्रतिपादिताः । अथान्येषां श्राद्धकालेषु वक्तव्येष्विदमुच्यते । तीर्थश्राद्ध-शुद्धिश्राद्ध-दैविकश्राद्ध-यात्राश्राद्ध-जीवच्छ्राद्ध-गोष्ठीश्राद्धा-

नां त्वधिकारवाक्योपदिष्टा एव काला इति । ते विशेषाधिकार-प्रकरणे एव निरूपिताः । तत्र च अकाले काले वा तीर्थप्राप्तिः । तदनन्तरमेव तीर्थश्राद्धकालः । "अकालेऽप्यथ काले वा तीर्थश्राद्धं यथा नरैः" । इति मत्स्यपुराणस्मरणात् । पापक्षयार्थकृच्छ्रादि व्रतसमाप्तौ शुद्धिश्राद्धकालः ।

श्राद्धं कुर्यात् व्रतान्ते तु गोहिरण्यान्नदक्षिणाः ।

इति जाबालवचनात् । प्रीणनीय तत्तद्देवताधिष्ठितं तिथिवा-रादिकं दैविकश्राद्धस्य कालः । सन्न्यासाङ्गानां षोडशश्राद्धानां देवादि श्राद्धाष्टकदिनात् प्राचीनदिनमेवकालः । "देवादीनान्तु सन्न्यासादि" इत्यादिस्मरणात् ॥

इति देवताप्रकरणं निरूपितम् । इति वैशेषिकश्राद्धकालाः ॥

## अथ मुख्यकालातिक्रमकालाः ।

ते च गौणाः वाचनिका आनुकल्पिकाश्चेति द्विप्रकाराः । तत्रैवं तावत् विचार्यते । मुख्यकालासम्भवे गौणकालग्रहणं कार्यं न वेति । ननु को मुख्यः को वा गौणः? । यो विहितः समुख्यः । यथा वृद्धिश्राद्धादौ प्रातरादिः । यश्चाविहितः तत्समीपवर्ती तेष्वे वाङ्गभावं नीयमानः सङ्गवादिगौणः । तदाह त्रिकाण्डमण्डनः ।

स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः ।
यद्वाऽऽगामिक्रियामुख्यकालस्याप्यन्तरालवत् ॥
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि ॥ इति ॥

अस्यार्थः पूर्वोत्तरयोः कर्मणोर्यः स्वकालस्तस्मादुपरितनः, उत्तर-कर्मस्वकालाच्च पूर्वभावी पूर्वापरयोः कर्मणोरन्तरालकाल इति यावत्। स पूर्वस्मिन् कर्मणि गौणोज्ञेयः। यद्वा यथोक्तान्तराल-वदागामिक्रियामुख्यकालस्यापि पूर्वस्मिन् कर्मणि गौणकालतां मन्यन्त इति। कथं पुनरुत्तरकर्मकालस्य पूर्वकर्मानुष्ठानग्रहण-माशङ्क्येत येन स्वकालात् प्रच्युतं पूर्वं कर्म तावद्विनष्टप्रायं उत्तरं च स्वकालाप्रच्युतत्वादविनष्टरूपम्। तत्र यद्युत्तरकर्म-काले पूर्वं क्रियते तदा विनष्टसमाधानार्थमविनष्टविनाशनं प्रसज्येत। तन्मृतजीवनाशया जीवनमरणस्योपक्रमः सत्यम्।

उत्तरकर्मकालेद्वयोरवकाशे सतीदमुच्यते न पुनरसत्यपि तस्मिन्निति॥

तदाह त्रिकाण्डमण्डनः।

मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्र दृशो भवेत्॥ इति॥

ईदृशः - मुख्यकालसदृशः। अनेनास्य प्रतिविधित्वयो-ग्यता दर्शिता। स्मृतयोऽपि गौणकालग्रहणं दर्शयन्ति।

यथाकथञ्चित्कर्तव्यं नित्यं कर्मविजानता।
न प्राप्तेऽस्य विलोपोऽस्ति पैतृकस्य विशेषतः॥ इति।

तथा - दिवोदितानि कर्माणि प्रमादादकृतानि वै।
यामिन्याः प्रहरं यावत्तावत्कर्माणि कारयेत्॥
सन्ध्यारात्र्योर्नकर्तव्यं श्राद्धं खलु विचक्षणैः॥

अपत्नीकः प्रवासी च यस्यभार्या रजस्वला।
सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते।

अस्य आमद्रव्य श्राद्धविधेः क्वचिदुपसंहारपूर्वकं अपवादः ।

श्राद्धविघ्ने समुत्पन्ने ह्यामश्राद्धं प्रकीर्तितम् ।
अमावास्यादि नियतं माससंवत्सरादृते ॥

इति मासिकसांवत्सरिकविषये आमश्राद्धनिषेधः । मृताहे प्राप्ते यस्य भार्या रजस्वला तस्मिन्नेव दिने अन्नेनैव श्राद्धं कुर्यात् । न आमेन । कालान्तरे वा ।

स्मृत्यन्तरे ।

आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला ।
पञ्चमेऽहनि तच्छ्राद्धं न कुर्यात् तन्मृतेऽहनि ॥

तत् भर्तुः प्रत्याब्दिके अपुत्रा पत्नी स्वयमेव श्राद्धकर्त्री यदि ।

अपुत्रा तु यदा भार्या सम्प्राप्ते भर्तुराब्दिके ।
रजस्वला भवेत्सा हि तत् कुर्यात् पञ्चमेऽहनि ॥

इति गौतमस्मरणात् । यत् भार्यारजोदर्शनादिरूपे श्राद्धविघ्ने सत्या मश्राद्धं कर्तव्यमिति प्रकीर्तितम्, तत् अमावास्यादि-कालिकमेव न तु यन्मृताहकालिकं मासिकं सांवत्सरिकं च तदपीत्यर्थः । तत्पक्वान्नेनैव कर्तव्यम् ।

## अथ निषिद्धकालाः ।

तत्र व्याघ्रपाद आह ।

स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौतकर्मणि तत्काले स्नानात् शुद्धिमवाप्नुयात् ॥

राहुसूतकादन्यस्मिन् सूतके स्मार्तं श्राद्धादिकर्म न कुर्वीत। श्रौतं तु दर्शपूर्णमासाग्निहोत्रादि स्नात्वा सद्य एव कुर्यादित्यपरार्कः। स हि जननाशौचे राहुग्रस्तचन्द्रार्कसाक्षात्पूर्वकाले च मृते सूतकशब्दप्रयोगोऽस्तीत्यभिप्रेत्यैवं व्याख्यातवान्। अन्यथा एवं व्याचक्षते, सूतके, जन्माशौचे सर्वकर्मत्यागः कर्तव्यः। "स च राहोरन्यत" स च राहुदर्शननिमित्तात्मककर्माणि विहायेत्यर्थः। तत्र प्रथमव्याख्याने जन्ममरणाशौचयोः, द्वितीयव्याख्याने तु जन्माशौचे श्राद्धं न कर्तव्यमिति सिद्धं भवति। कर्मशब्दश्च प्रेतपिण्डक्रियाव्यतिरिक्तकर्मविषयः।

तथा च पैठीनसिः।

> दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च।
> प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्तयेदिति॥

मनु - शातातपौ।

> रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा।
> सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते॥ इति।

रक्षांसि अस्यां चरन्ति, बलवन्ति वा भवन्तीति राक्षसीत्युच्यते। तस्यां हि रक्षोभिः श्राद्धमवलुप्यते। पूर्वापरयोरपि सन्ध्ययोः श्राद्धं न कर्तव्यम्। सन्ध्ययोर्मानन्तु याज्ञवल्क्य आह।

> उदयात् प्राक्तनी सन्ध्या मुहूर्तद्वयमुच्यते।
> सा च सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः॥ इति।

सूर्ये चैवाचिरोदित इति यदुक्तं तत्सन्ध्यासमीपकालस्योपलक्षणम्। तेनास्तमयसन्ध्यासमीपोपि कालो लभ्यते। तद-

मेव प्रातःकालविहितं पूर्वसन्ध्या-तत्समीपकालयोः प्रसक्तं वृद्धि-श्राद्धं विषिध्यते । अपराह्णविहितं च पार्वणं पश्चिमसन्ध्या-तत्समीपकालयोश्च प्रसक्तं निषिध्यते । मध्यमसन्ध्या-तत्समी-कालयोस्तु कुतपत्वान्न क्वचिन्निषेधः । इति निषिद्धकालाः ।

इति चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे श्राद्धकाल-निरूपणम् नाम पञ्चमोऽध्यायः समाप्तः ।

## अथ षष्ठोऽध्यायः ।

अथ ब्राह्मणाः निरूप्यन्ते ।

अत्र देशकालानन्तरं श्राद्धप्रयोगे निरूपणीये हविःप्रक्षेपा-धिकरणभूताहवनीयस्थानीयानां प्रथमसम्पाद्यत्वात् द्रव्यादिभ्यः पूर्वं निरूपणं क्रियते । तत्र चतुर्भिरपिवर्णैः क्रियमाणेषु श्राद्धेषु ब्राह्मणानामेवाऽऽमन्त्रणीयत्वेन विहितत्वात् त एव नियोज्याः ।

तत्र ब्राह्मणप्रशंसा ।

तत्र तैत्तिरीयश्रुतिः । "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति, तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नम-स्कुर्यात् नाश्लीलं कीर्तयेत्, एता एव देवताः प्रीणाति" ॥ इति । नमस्कारोऽत्र पूजोपलक्षणार्थः ।

भविष्यत्पुराणे ।

ब्राह्मणादैवतं भूमौ ब्राह्मणा दिवि दैवतम् ।
ब्राह्मणेभ्यः परं नास्ति भूतं किञ्चिज्जगत्त्रये ॥
अदेवं दैवतं कुर्युः कुर्युर्दैवमदैवतम् ।
ब्राह्मणा हि महाभागाः पूज्यन्ते सततं द्विजाः ।

ब्राह्मणेभ्यः समुत्पन्ना देवाः पूर्वमिति श्रुतिः ।
ब्राह्मणेभ्यो जगत्सर्वं तस्मात्पूज्यतमाद्विजाः ॥
येषामश्नन्ति वक्त्रेण देवताः पितरस्तथा ।
ऋषयश्च तथा नागा किम्भूतमधिकं ततः ॥

याज्ञवल्क्यः ।

तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥

मत्स्यपुराणे ।

नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात्परः शत्रुर्नास्ति विप्रात्परो विधिः ॥

विष्णुधर्मोत्तरे भगवद्वाक्यम् ।

ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ।
निर्भर्त्सितैश्च निर्भर्त्स्यस्तैरहं सर्वकर्मसु ॥
विप्राः परा गतिर्मह्यं यस्तान्पूजयते नृप ।
तमहं स्वेन रूपेण प्रपश्यामि युधिष्ठिर ॥

स्कन्दपुराणे देवीं प्रति ईश्वरवचनम् ।

श्रुतीनां आकारा ह्येते रत्नानामिव सागराः ।
विप्राः [1]विप्राधिपमुखि पूजनीयाः प्रयत्नतः ।
अपि नारायणोऽनन्तो ब्रह्मा स्कन्दोऽनिलः शिखी ।
तत्कर्म नाभिनन्दन्ति यत्र विप्रा न पूजिताः ॥

---

1. विप्राधिपमुखि = चन्द्रमुखि इति संबोधनम् ।

येषां प्रसादात् सुलभमायुर्धर्मः सुखं धनम् ।
श्रीर्यशः स्वर्गवासश्च तान् विप्रानर्चयेत् बुधः ॥

इति ब्राह्मणप्रशंसा ।

अथ ब्राह्मण लक्षणम् । अत्राहुराचार्याः ।

ब्राह्मणत्वजात्याश्रयो ब्राह्मण इति । अत्र यद्यप्युपदेशा-नपेक्षाक्षिसन्निपातमात्रानुभवनीय-क्षत्रिय-वैश्यादि-व्यावृत्त· ब्रा - ह्मणत्वाभिमतव्यक्तिमात्रानुवृत्त-द्रव्यगुणकर्मसंस्थानादिकृत वैल· क्षण्याभावान्मनुष्यत्वावान्तरसामान्याभिव्यञ्जकस्थूलतरकारणा सम्भवः, तथापि विशुद्धमातापितृसन्ततिजत्वोपदेशसापेक्ष-बुद्धि-विशेषसमुद्भासित, सूक्ष्मतरसौशील्याद्यात्मक-ब्राह्मणत्वाभिव्य–ञ्जकसम्भवः, परीक्षकापरीक्षकसाक्षिकोऽस्त्येव । अभ्युपगत-श्च रत्नादावुपदेशसापेऽक्षोदि सामान्याभिव्यञ्जकावभासः सर्वैः । ननु विशुद्धमातापितृसन्ततिजत्वं नाम ब्राह्मणजातीयमातापितृ-जत्वमेव । तथा चोपदेशे ज्ञप्तिप्रतिबन्धकं अन्योन्याश्रयत्वमा-पद्यते । उपदेशार्थज्ञानाधीनं ब्राह्मणत्वज्ञानं, ब्राह्मणत्वज्ञानाधी· नमुपदेशार्थज्ञानमिति । मैवम् । अयमत्रोपदेशार्थः । ब्राह्मण-त्वसामान्यवान् ब्राह्मणः इति । ब्राह्मणत्वव्यवस्थापकन्तु तज्जन्यमिति ।

अथोच्यते । अनादाविह संसारे दुर्वारे मकरध्वजे ।
कुले च कामिनीमूले का जातिपरिकल्पनेति ॥

तन्न । प्रतिकुलं कुलाभिमानिभिः पुरुषैः तादृग्विधाभिः स्त्रीभिश्च रक्ष्यमाणानि कुलान्यनुपप्लुतान्येवानुवर्तमानानि दृश्यन्ते । प्रप-ञ्चितश्चायमर्थः तेषु तेषु शास्त्रेष्विदमुपरम्यते ।

यत्तु वह्निपुराणे वृत्तान्येव ब्राह्मणलक्षणमित्युक्तम् ।

न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न वा ।
कारणानि द्विजत्वस्य वृत्तमेव हि कारणम् ॥

किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः ।
क्रिमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥

नैकमेकान्ततो ग्राह्यं पठनं हि विशां पते ।
वृत्तमन्विष्यतां तात रक्षोभिः किं न पठ्यते ॥

यमः । सत्यं दानं क्षमा शीलमानृशंस्यं दया घृणा ।
दृश्यन्ते यत्र लोकेऽस्मिन् त देवा ब्राह्मणं विदुः ॥

घृणा, कुत्सितविषये विवादः । तदेतत्सर्वं न ब्राह्मणत्वजातिविराकरणेन शीलवृत्तादेव ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वप्रतिपादनपरम् । किन्तु हव्यकव्य भोक्तृत्वार्हतापादकब्राह्मणगतप्राशस्त्य प्रतिपादनपरम् ।

'अपशवो वा अन्ये गो अश्वेभ्य', पशवो गोअश्वाः'
इत्येतद्यथा गो अश्वेभ्यः, प्राशस्त्यप्रतिपादनपरम्[1] ।

इति ब्राह्मणलक्षणम् ॥

---

1. अ-१-पा-४-अ-१६ ।

अत्र गवाश्व भिन्नेषु अजादिषु यद पशुत्वमुक्तं तत् अजादिषु पशुत्वनिषेधकं न भवति यतः अजावयोऽपि पशव एव, किन्तु गवाश्वेषु प्राशस्त्यप्रतिपादकं यथा, तथा वृत्तस्वाध्यायवतां प्राशस्त्यं प्रतिपादयति, न त्वन्येषां ब्राह्मणत्वं निराकरोति इति ।

## अथ पात्रीभूतब्राह्मणलक्षणम् ॥

याज्ञवल्क्यः ।

न विद्यया केवलया [1]तपसा वाऽपि पात्रता ।
यत्र वृत्तिमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥

अङ्ग-स्मृति-पुराण-न्याय-मीमांसासहिता वेदविद्या । तपो-लक्षणमाह देवलः । अथ तपोविधिं व्याख्यास्यामः । तद्यथा व्रतोपवास-नियमैः शरीरोत्तापनं तप इति । व्रतादीन्यपि तेनैव दर्शितानि । तत्र ब्रह्मचर्यं सत्यवचनं मधुमांसवर्जनं मौनमशायन-मृतुकालाभिगमनमित्येवमादीनि व्रतानि । अनशनमुपवासः । स्वाध्यायशीलनम्, मातापितृ-गो-ब्राह्मणशुश्रूषा, पुण्यक्षेत्राभि-गमनं, तीर्थावगाहनं, शीतोष्णातपावश्या[2]याबाधप्रतीकारः इत्या-दयो नियमाः ॥

वसिष्ठः । किञ्चिद्वेदमयं पात्रं शूद्रान्नं यस्य नोदरे ।

बृहस्पतिः ।

ब्रह्मचारी भवेत्पात्रं पात्रं वेदस्य पारगः ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥

व्यासः । किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।
असङ्कीर्णं तु यत्पात्रं तत्पात्रं परमं स्मृतम् ॥

योनिसङ्कर-वृत्तिसङ्कर-पतितादिसंसर्गरहितम् असङ्कीर्णम् ॥

शूद्रद्रव्यप्रतिग्रहसम्पादितमन्नं शूद्रान्नम् । साक्षाच्छूद्रान्नस्य वर्जने हि का नामातिपात्रता ।

इति पात्रीभूत ब्राह्मणलक्षणम् ।

---

1. निजवर्णाश्रमविहितधर्मानुष्ठानं तपः । इति वि-र:
2. अवश्यायस्तुनीहारः इत्यमरः अतः हिममित्यर्थः ।

अथ पात्रसंज्ञाभिधानप्रसंगात् उत्तम-मध्यमा-धमविभाग-ज्ञानोपयोगिन्यः कुल-शील-वृत्तादियोग-वियोगनिबन्धना अन्या अपि ब्राह्मणानां संज्ञाः कथ्यन्ते ।

तदाह देवलः ।

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपः परः ।
अनूचानस्तथा भ्रूण ऋषिकल्पो ऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ।
तेषां तपःपरः श्रेष्ठो विद्या-वृत्तविशेषतः ॥

विद्यावृत्तातिशयकृतात् वैशिष्टयात् हेतोरित्यर्थः । उद्देशक्रमेणैव तेषां लक्षणान्याह स एव ।

ब्राह्मणानां कुले जातो जातिमात्रो यदाभवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ।

अनुपेतः - उपनयनरहितः ।

एकदेशमतिक्रम्य वेदस्याचारवान् द्विजः ।
स ब्राह्मण इति प्रोक्तो निवृत्तः सत्यवान् घृणी ॥

एकदेशातिक्रमः - वेदस्य किञ्चिन्न्यूनस्याध्ययनम् । निवृत्तः - शान्तः ।

एकां शाखां सकलां वा षड्भिरङ्गैरधीत्य वा ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥

यमोऽपि ।

ॐकारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति ।
चरित ब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते ॥

ॐकारपूर्विकाः महाव्याहृतीरिति शेषः ।

ब्रह्मवैवर्तेऽपि श्रोत्रियलक्षणमुक्तम् ।

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया चापि विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

देवलः ।

वेदवेदाङ्ग तत्वज्ञ. शुद्धात्मा पापवर्जित· ।
शिष्टः श्रोत्रियतां प्राप्त· सोऽनूचान इति स्मृतः ॥

अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते शिष्टै शेषभोजी जितेन्द्रियः ।

वैदिकं लौकिकं चैव सर्वं ज्ञानमवाप्य यः ।
आश्रमस्थो वनी नित्यमृषिकल्प इति स्मृतः ॥

लौकिकं - अर्थार्जनादि ज्ञानम् ।

ऊर्ध्वरेतास्तपस्युग्रो नियताशी न संशयः ।
शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषि ॥

सत्या, सन्धा - अभिसन्धिः, अभिप्रायो यस्य, असौ सत्यसन्धः । सत्यसङ्कल्प इत्यर्थः ।

निवृत्तः सर्वतत्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दाता विशुक्लश्च स्मृतो मुनिः ॥

निवृत्तः - निषिद्ध-काम्यकर्मभ्यः । निष्क्रियः - अर्थार्जनादि-क्रिया रहितः ।

एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः ।
[1]त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु ॥

संवर्तः । उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स भवेद्वेदपारगः ॥

महाभारते ।

अध्यापयेत्तु यः शिष्यं कृतोपनयनं द्विजः ।
सरहस्यं च सकलं वेदं भरतसत्तम ।
तमाचार्यं महाबाहो प्रवदन्ति मनीषिणः ॥

आह बृहस्पतिः ।

आचिनोति च शास्त्राणि आचारे स्थापयत्यपि ।
स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते ॥

इति प्रशस्त ब्राह्मणसंज्ञाः ।

अथाब्राह्मणाः । आह शातातपः ।

अब्राह्मणास्तु षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥

व्यासः । ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः ।
जातिमात्रोपजीवी च भवेदब्राह्मणस्तु सः ॥

इत्यब्राह्मणाः ।

---

1. कुलं, विद्या, वृत्तं एतत्त्रितयं शुक्लं यस्य ।

अथ दुर्ब्राह्मणाः।

अत्राह हारीतः।

पक्षि-मीन-मृगघ्ना ये सर्प-कच्छपघातिनः।
नानाजन्तुवधासक्ताः प्रोक्ता दुर्ब्राह्मणाहि ते॥

तथा। अथ वेदश्च वेदी च त्रियुगं यस्य सीदति।
स वै दुर्ब्राह्मणः प्रोक्तो ब्रह्मवादिषु गर्हितः॥

वेदः वेदाध्ययनम्। वेदी-वेदसाधनका दर्शपूर्णमासादयो यागाः। त्रियुगं–प्रपितामहप्रभृति पितृपर्यन्तं मिथुनत्रयं यावत्। सीदति अवसीदति उच्छिद्यत इत्यर्थः।

आह यमः।

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम्।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः॥

अथ वृषलीपति प्रभृतयः।

अत्र वृषलीपतिशब्देन शूद्रापतिरेव योगसामर्थ्याल्लभ्यते। तस्य च निन्दा त्रयोदशविध पुत्रप्रकरणे विस्तरेण विवृता। पारिभाषिकं तु वृषलीपतिमाहोशनाः।

वन्ध्या च वृषलीज्ञेया वृषली च मृत प्रजा।
अपरा वृषली ज्ञेया कुमारी या रजस्वला॥
यस्त्वे तामुद्वहेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः।
अश्रद्धेयमपाङ्क्तेयं तं विद्यात् वृषलीपतिम्॥

प्रभासखण्डे।

ऊढा याश्च स्वगोत्राः स्युः वृषल्यः सम्प्रकीर्तिताः,
पितुर्गृहे तु याकन्या रजः पश्यत्यसंस्कृता॥

पतन्ति पितरस्तस्याः सा कन्या वृषली भवेत् ।
यस्तु तां वरयेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्रद्धेयमपाङ्क्तेयं तं विद्यात् वृषलीपतिम् ॥

परदाराभिगो मोहात् पुरुषोऽज्ञान उच्यते ।
स एव पतितो ज्ञेयो यः सदा सेवते गृहे ॥

अथ शूद्रतुल्याः ।

तत्र देवलः ।

अनुपासितसन्ध्या ये नित्यमस्नानभोजनाः ।
नष्टशौचाः पतन्त्येते शूद्रतुल्याश्च सर्वतः ॥

वसिष्ठः। उदक्याऽन्वसते येषां ये च केचिदनग्नयः ।
कुलश्चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥

उदक्या रजस्वला । सा येषां स्नान भोजन-देवपूजादिकाले समीपे तिष्ठति ।

अथ ब्राह्मण ब्रुवादयः ।

व्यासः । गर्भाधानादिभिर्युक्त तथोपनयनेन च ।
न कर्मवान् न चाधीते स भवेत् ब्राह्मणब्रुवः ॥

संवर्तः । अव्रतीवैश्यराजन्यौ शूद्रश्चाब्राह्मणास्त्रयः ।
वेदव्रतविहीनश्च ब्राह्मणोब्राह्मणब्रुवः ॥

अथ कुण्डगोलकादयः ।

मनु शातातपौ ।

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः ॥

तौ तु जातौ परक्षेत्रे प्राणिनां प्रेत्य चेह वै ।
विनुक्तौ हव्यकव्यानि नाशयेतां प्रदायिनाम् ॥

पराशरः ।

जीवतो जारजः कुण्डो मृतेभर्त्तरि गोलकः ।
यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते ॥

कुण्डगोलकावभिधायाह मनुः ।

यस्तयोरन्नमश्नाति स कुण्डाश्युच्यते द्विजः ।

अथ वैडाल व्रतिकादयः ।

यमः । यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते ।
पाप व्रतेन प्रच्छाद्य वैडालं नाम तद्व्रतम् ॥
तीर्थं च विपुलं गृह्य हित्वा लिङ्गं निवर्तयेत् ।
आश्रमान्तरितं रक्षेत् वैडालं नाम तद्व्रतम् ॥

यो ह्यन्यायेन विपुलमर्थं सङ्गृह्य राजादिभिस्तदपहारमाशङ्कमानः पूर्वाश्रमलिङ्गानि परिवर्त्य अतिमाननीय यत्याश्रमस्वीकारेण तद्द्रव्य रक्षति तस्य तद्व्रतं वैडालसंज्ञ भवति ।

अधोदृष्टिः नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ॥

देवलः । देवार्चनपरोविप्रो वित्तार्थी वत्सरत्रयम् ।
असौ देवलको नाम हव्यकव्येषु गर्हितः ॥

विष्णुः । यस्तु निन्देत् परंजीवं प्रसंशात्यात्मनोगुणान् ।
सर्ववार्धुषिकोनाम सर्वकर्मसु गर्हितः ॥

सबाधं धान्यमादाय महार्धं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥

गौतमः । अधीत्य, विस्मृतो वेदं भवेद्विप्रो निराकृतिः ।

देवलः । आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् ।
लोभाद्यः प्रचिनोत्यर्थं स कदर्य इति स्मृतः ॥

अथ पतिताः ।

उशनाः । समानयाजकाश्च श्रुतिविक्रयिकाश्च ये ।
अन्यपूर्वाप्रजाताश्च पतितान् मनुरब्रवीत् ॥

अन्यपूर्वाः - पुनर्भूप्रभृतय ।

यमः । शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ।

देवलः । भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ॥
तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात् ॥

वायुपुराणे ।

आत्मार्थं यः पचेदन्नं न देवातिथिकारणात् ।
बार्हत्यसावपि श्राद्धं पतितो ब्रह्मराक्षसः ॥

अथ नग्नाः ।

तत्राह पराशरः ।

नग्नः काषायवस्त्रः स्यान्नग्नः कौपीनमात्रधृक् ।
नग्नः स्यान्मलवद्वासा नग्नश्चार्धपटावृतः ॥

विकच्छोऽनुत्तरीयश्च द्विकच्छोऽवस्त्र एव च ।

रञ्जकद्रव्यनिर्यासः कषायः तेन रक्तं वस्त्रं काषायं, तद्वसानो नग्न इत्युच्यते । गुह्यप्रदेशमात्राच्छादनपर्याप्तिः पुरुषः

पृष्ठतः कटिसूत्रग्रथनोपायेन वसनीया वस्त्रचीरिका कौपीनम् । तत्परिधानाधिकारित्वेनानुक्तो गृहस्थादिः तन्मात्रधृक् नग्नः । अधौतवस्त्रो रजकादिधौतवस्त्रयुक्तो वा मलवद्वासाः । एकस्यैवानवच्छिन्नस्य पटस्यार्द्धं वसानोऽर्द्धं प्रावृण्वानोऽर्द्धपटावृत इत्युच्यते । खण्डपटं वसानो वा ।

अथ परिवित्त्यादयः ।

मनुः । दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।

परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

स्थिते - दाराग्निहोत्रसंयोगं विनेति शेषः । अग्निहोत्राद्युत्तरक्रियाप्रयोज्यमाधानं विवक्षितम् ।

उक्तञ्च गार्ग्येण ।

सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसङ्ग्रहम् ।

आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत् ॥

आवसथ्यं - आवसथ्याधानं, दायविभागकाले क्रियमाणमौपासनाधानमिति यावत् ।

विवाहकाले क्रियमाणस्यौपासनाधानस्य— 'न कुर्यात् दारसङ्ग्रहम्' इत्यनेनैवार्थान्निरस्तत्वात् ।

अतएव, 'औपासनं समादध्यात् स्वकाले परिवेदयन्' इति ब्रह्मगर्भवचनेऽपि स्वकालशब्देन दायविभागकालएवोक्तः । न तु विवाहकालोपीत्यवगम्यते ॥ आधानं - गार्हपत्याधानम् । पतितोभवेत् उपपातकी भवेदित्यर्थः । उपपातकपरिगणनावचने परिवेत्तृ—परिवित्त्योः कीर्तनात् ।

सोदरेऽपि ज्येष्ठे सति कदाचित्परिवेदने कनिष्ठस्य दोषो वास्तीत्याह शातातपः ।

क्लीबे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

भिक्षुक - प्रव्रजितः । योगशास्त्राभियुक्त - विरक्तः । अयमेवार्थः सुमन्तुनाप्युक्तः ।

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं तथा ॥

ज्येष्ठभ्रातृवचनं पितुरपि प्रदर्शनार्थम् ।

तथा च स एवाह ।

पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत ।
अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं तथा ॥

तथा । अनुज्ञातस्य पित्रा तु आधानं सर्वदा भवेत् ।

पित्रानुज्ञातस्य पुत्रस्येति शेष । पितृग्रहणं पितामहस्यापि प्रदर्शनार्थम् ।

अत एवोशनाः ।

पिता पितामहो यस्य अग्रजोवाप्यनग्निमान् ।
तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदन ॥

अत्रापि पित्राद्यनुज्ञातस्येति शेषः । मन्त्रशब्दो वेदोपलक्षणार्थः ।

तथा च शातातपः ।

नाग्नयः परिविन्दति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥

यथा वेदाध्ययन-तपः-श्राद्धराहित्येन स्थितेऽपि ज्येष्ठे तानि तदनुज्ञामन्तरेणापि कनिष्ठेनानुष्ठितानि परिवेदनाहेतवो न भवन्ति, तथा ज्येष्ठानुज्ञयाग्नयोऽप्याधीयमानाः परिवेदनहेतवो न भवन्तीत्यर्थः। या च कन्याविरूपिकेत्यस्यायमर्थः। विवाहाधिकारिण्यां ज्येष्ठायां कन्यायां विकृतरूपायामनूढायां स्थितायां तदनुज्ञया विनापि कनिष्ठाया विवाहकालातिक्रमभीत्या कृतो विवाहो न दोषायेति। इति परिवित्यादयः।

इत्यप्रशस्तब्राह्मणसंज्ञाः। इति ब्राह्मणसंज्ञाप्रकरणम्।

अथ श्राद्धे प्रशस्ता ब्राह्मणा निरूप्यन्ते ॥

तत्र मनु-शातातपौ।

तत्र ये भोजनीया स्युर्ये च वर्ज्या द्विजोत्तमाः।
यावन्तश्चैव यैश्चान्यैस्तावद्वक्ष्याम्यशेषतः॥

श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्॥

यः स्वकीयां कृत्स्नां मन्त्रब्राह्मणात्मिकां शाखामधीते सः श्रोत्रियः। श्राद्धे विश्वेदेवानुद्दिश्य विहितानि हवींषि - हव्यानि। पितॄनुद्दिश्य विहितानि - कव्यानि। अर्हत्तमाय - कुलशीलविद्याधरायेत्यर्थः। तस्मै श्राद्धादन्यदपि "दत्तं महाफलं" भवतीति।

वसिष्ठः।

श्रोत्रियायैव देयानि हव्यकव्यानि नित्यशः।
अश्रोत्रियाय यद्दत्तं तृप्तिं नार्हन्ति देवताः॥

आह मनुः ।

सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते ।
एकस्तान् मन्त्रवित् प्रीतः सर्वानर्हति धर्मतः ॥

अनृचाम् - अवेदार्थविदामिति ज्ञेयम् । यतः श्रोत्रियायैव देयानीत्युक्तेः अनधीयानानां प्राप्तिरेव नास्ति । मन्त्रवित्–वेदार्थवेत्ता । प्रीतः-तर्पितः भोजित इति यावत् । तान्सर्वानर्हति स्वीकरोति अभेदमापद्यन इत्यर्थः ॥

सहस्रसंख्येषु भोजितेषु यत्फलं तत्फलं एकस्मिन् अवाप्यते इत्यर्थः ॥

ज्ञानोत्कृष्टेषु देयानि कव्यानि च हवींषि च ।
न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥

ज्ञानेन विद्यया उत्कृष्टा अधिका - ज्ञानोत्कृष्टा । तेभ्य हव्य, कव्यानि देयानि, नेतरेभ्यः इति । यथा असृजा - रुधिरेण दिग्धौ - लिप्तौ, हस्तौ रुधिरेण प्रक्षाल्यमानौ न निर्मलौ भवतः । एवमविद्वद्ब्राह्मणभोजनेनोपक्रियमाणाः पितरो न तत्फलं लभन्ते, इत्यर्थः ।

पैठीनसिः । "प्रयताय शुचये सर्वत्र देयं हव्यं कव्यं च" तस्मात् शुचिरिति विज्ञायते ।"

आपस्तम्बः ।

'शुचीन्मन्त्रवतः सर्वकृत्येषु भोजयेत् ।"

मन्त्रवतः - अधीतवेदान् । सर्वकृत्येषु - विहितब्राह्मणभोजनेषु, श्रौत, स्मार्तेषु कर्मसु ।

अत्र केचिद्यथा कन्या तथा हविरिति कन्यासाधर्म्येण हविषां स्वशाखीयप्रतिपाद्यत्वं मन्यमानाः स्वशाखीयमेव श्रोत्रियत्वादिगुणविशिष्टं श्राद्धे नियोजयन्ति । तदसत् । स्मृतीतिहास-पुराण-गृह्य-कल्पसूत्रेषु क्वचिदपि स्वशाखीयनियमाश्रवणात् । प्रत्युत स्मृत्यादिषु *अग्नि,नाचिकेतस्त्रि,मधुस्त्रिसुपर्णो, ज्येष्ठसामगः इत्यादिभिर्नानाशाखीयानां नानावेदाध्यायिनामेव विधिदर्शनाच्च । न चैतेषां शूद्रकर्तृकश्राद्धविषयत्वमिति मन्तव्यम् । व्यवस्थायां प्रमाणाभावात् । नापि कन्यासादृश्यदर्शनमात्रेण नियमाध्यवसानं युक्तम् । सादृश्यस्यान्यथाप्युपपत्तेः । किञ्च कन्यायामेव तावत् एकशाखाध्यायिनियमः कुतोऽवगतः यद्बलेन हविष्यपि साध्यते । आचारादिति चेत् । कन्यादानप्रतिग्रहेषु स्वशाखीयैरेव सह व्यवहरन्तः परशाखीयांश्च प्रयत्नेन परिहरन्तः शिष्टा दृश्यन्ते । तेन ज्ञायते अस्त्यत्र नियम इति । मैवम् ।

शिष्टव्यवहारस्य कुलादिज्ञानाज्ञानमूलत्वात् । तयोश्च सन्निधानव्यवधानाधीनत्वात् । प्रायेण हि तुल्यशाखिनः स्वाध्यायाध्ययन-वेदव्रत-गृह्यकर्म-सन्ध्योपासनादि - क्रियाकलापविचारणार्थमन्योन्यसङ्गमभिलषन्तः समानदेशवासिनो भवन्ति । सन्निधानाच्च विज्ञातकुलशीलाचाराः परस्परं यौनसम्बन्धविधिमाद्रियन्ते । अन्यशाखीयांस्तु देशान्तरनिवासादविज्ञातस्वरूपतयैव न श्रद्दधते । आर्यावर्तेषु च समानदेशवासिनां नानाशाखाध्यायिनामप्युपलभ्यन्त एव परस्परमनवगीयमानाः सर्वतो वि-

---

* अ, तृणाचिकेतः (पा.)

वाहसम्बन्धाः। अविज्ञातपरस्पराणामेकशाखाध्यायिनामपि नोपलभ्यन्ते। अतः समानदेशवासादिसमुत्थं कुलादिज्ञानमेव परिणयनसम्बन्धप्रवर्तकमिति।

यमः। वेद-विद्या-व्रतस्नाताः श्रोत्रिया वेदपारगाः।
स्वधर्मनिरताः क्षान्ताः क्रियावन्तस्तपस्विनः॥
तेभ्यो हव्यं च कव्यं च प्रशान्तेभ्यः प्रदीयते॥

वेदान्वेदौ वेद वाधीत्य समावृत्ताः - वेदस्नातकाः। विद्यां वेदार्थविचारं समाप्य निवृत्ताः विद्यास्नातकाः। व्रतं - ब्रह्मचर्यं समाप्यनिवृत्ताः व्रतस्नातकाः। सत्यपि वेदपारगत्वे नित्यं वेदाभ्यासनिरतत्वप्रदर्शनार्थं श्रोत्रियग्रहणम्। द्वन्द्वदुःखसहिष्णवः क्षान्ताः। अक्रोधनाः शान्ताः।

मनुः। वेद-विद्या-व्रतस्नातान् श्रोत्रियान् गृहमेधिनः।
पूजयेत् हव्यकव्येन विपरीतांश्च वर्जयेत्॥

गृहमेधिनः - गृहस्थाः।

आह बृहस्पतिः।

यद्येकं भोजयेत् श्राद्धे छन्दोगं तत्र भोजयेत्।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते॥

अटेत पृथिवीं सर्वां सशैलवनकाननाम्।
यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः॥

ऋचा तु तृप्यति पिता यजुषा च पितामहः।
पितुः पितामहः साम्ना छन्दोगोऽभ्यधिकस्ततः॥

यम-शातातपौ ।

छन्दोगं भोजयेत् श्राद्धे वैश्वदेवे च बह्वृचम् ।
पुष्टिकर्मणि चाध्वर्युं शान्तिकर्मण्यथर्वणम् ॥

पुष्ट्यर्थं कर्म पुष्टिकर्म । अरिष्टोपशमनार्थं यत्क्रियते तच्छान्तिकर्म ।

तथा । गायत्रीजाप्यनिरतं हव्यकव्येषु योजयेत् ।
पापं तिष्ठति नो तस्मिन्नब्बिन्दुरिव पुष्करे ॥

अपां बिन्दुः - 'अब्बिन्दुः' । पुष्करं - पद्मपत्रम् ।

इति प्रशस्ताः ब्राह्मणाः ।

अथ पङ्क्तिपावनाः ।

आपस्तम्बः ।

अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान् ॥

अपाङ्क्त्यैः । वक्ष्यमाणलक्षणैरपाङ्क्तेयैः उपहता - दूषिता । पङ्क्तिः - परिषत्, यैः ब्राह्मणैः पाव्यते-निर्दोषाक्रियते तान् कार्त्स्न्येन वक्ष्यमाणान् निबोधत - शृणुत । अर्थवादरूपाण्येतानि पदानि । यथा ह्येकपङ्क्त्यां भुञ्जानो दुष्टोऽन्यानदुष्टानपि दूषयति एवं पङ्क्तिपावनः स्वगुणातिशयादन्यकृतमपि दोषमपनुदतीत्यस्यार्थः । न चानेनापाङ्क्तेयानां भोजनमनुज्ञायते । किं तर्हि पङ्क्तिपावनः तावदवश्यमन्वेषितव्यः ।

अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥

अग्र्याः - उत्तमाः । सर्वेषु - चतुर्ष्वपि वेदेषु सर्वसंशयव्यु-दासेन सम्प्रदायतः स्वीकृतसर्ववेदा इत्यर्थः ।

प्रोच्यते - व्याख्यायते वेदार्थो यैः तानि - प्रवचनानि षडङ्गानि । षडङ्गो वेदो यैरभ्यस्तोऽभ्यस्यते वा त इत्यर्थः । श्रोत्रियान्वयजाः, पितृपितामहादयो एषां तादृशा एवेत्यर्थः ।

देवलः ।

अथान्यांश्च प्रवक्ष्यामि ब्राह्मणान् पङ्क्तिपावनान् ।
समर्थान् हव्य-कव्येषु स्वगुणैरभिपूजितान् ॥
वेदवेदाङ्गनिष्णाता विशुद्धान्वययोनयः ।
स्वकर्माऽदुःस्थिता विप्राः स्वपङ्क्तिं पावयन्ति हि ॥
त्रिणाचिकेतः पञ्चाग्निः त्रिसुपर्णः षडङ्गवित् ।
छन्दोगः सोमयाजी च ब्राह्मणाः पङ्क्तिपावनाः ॥
ज्येष्ठाश्रम विविष्टश्च शतायुर्ज्येष्टसामगः ।
अग्निचित् सोमपाश्चैते ब्राह्मणाः पङ्क्तिपावनाः ॥
ऋग्यजुः सामधर्मज्ञाः स्नातकाश्चाग्निहोत्रिणः ।
ब्रह्मदेयानुसन्ताना विज्ञेयाः पङ्क्तिपावनाः ॥

गौतमः - पङ्क्तिपावनाः, षडङ्गवित् ज्येष्ठसामग. त्रिणाचिकेतः त्रिमधुः, त्रिसुपुर्णः, पंचाग्निः, स्नातकः, मन्त्रब्राह्मणवित्, धर्मज्ञः, ब्रह्मदेयानुसन्तानः,[1] इति ॥ इति पङ्क्तिपावनाः ।

---

1. ब्राह्मविवाहोढासन्तानः । हर-गौ-ध २-६ २९ ।

अथ पङ्क्तिपावन पावनाः ।

वृद्धमनुः ।

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
यश्च वेत्यात्मकैवल्यं पङ्क्तिपावन पावनाः ॥

यः पाणिनिप्रभृतिप्रणीतशब्दानुशासनानुसारेण प्रकृतिप्रत्यय-विभागेन शब्दान् व्युत्पादयति । यश्च मीमांसाशास्त्रविचार-परिणततया अध्वरं यज्ञकर्म मीमांसते, विविच्य प्रतिपादयति । यश्च आत्मकैवल्यं ब्रह्माद्वैतं वेत्ति, साक्षात्कुरुते । एते पङ्क्ति-पावनेभ्योऽपि पावनाः । अतिशयेन पुण्यतमा इत्यर्थः । अतः सर्वेभ्योऽपि पूर्वप्रतिपादितेभ्यः प्रथमं प्रयत्नादेते गवेषणीया इत्यवगन्तव्यम् ।

मत्स्यपुराणे ।

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
सामस्वरविधिज्ञश्च पङ्क्तिपावन पावनाः ॥

सौरपुराणे ।

यो न निन्दति नद्वेष्टि न शोचति न कांक्षति ।
आत्मारामः पूर्णकामः पङ्क्तिपावन पावनाः ॥

इति पङ्क्तिपावनपावनाः ।

अथ योगिनां श्राद्धे नियोग उच्यते ।

ब्रह्मवैवर्तेऽपि योगिप्रशंसापूर्वकं तद्भुक्तस्य फलगौरवं दर्शयति ।

ऋचो हि यो वेद स वेद वेदान्
यजूंषि यो वेद स वेद यज्ञान् ।
सामानि यो वेद स वेद ब्रह्म
योगान् हि यो वेद स वेद सर्वम् ॥

स खलु वेदान् वेद, यो ऋचो वेद । स एव भुङ्क्ते य एव घृतेन भुङ्क्ते इति[1] च । एषा श्रुतिः । एवमुत्तरत्रापि । अथ ऋग्भिः श्राद्धोक्तानां यः ऋचां वेत्ता, स सर्ववेदवेत्तैव भवतीति श्रुतिः । यजूंषि - सन्निपत्योपकारकारादुपकारकान्तरवर्गसहितदर्शपूर्णमासादियज्ञविधायकवाक्यरूपाणि स्मारकाणि च मन्त्ररूपाणि, यो वेद स यज्ञान् वेद । सामानि ज्येष्ठसामादीनि, ऋगाधारकगीतिरूपाणि, तानि यो वेद असौ परब्रह्मज्ञानोपायभूतं शब्दब्रह्म वेद । विशुद्धमनोजन्यसाक्षात्कारत्वान्मानस आत्मा, यस्तं वेद, स सर्वं वेद नास्य किञ्चिद्वेदितव्यमवशिष्यत इत्यर्थः ।

महाभारते भगवद्गीतासु ।

तपस्विभ्योऽधिको योगी ज्ञानिभ्यश्चाधिको मतः ।
कर्मिभ्यश्चाधिको योगी तस्मात् योगी भवार्जुन ॥ इति ।

इति योगिनां सर्वोत्कृष्टत्व निरूपणम् ।

अथान्यत्र योगिनोऽतिक्रमे दोषमाह ।

छागलेयः ।

योगिनं समतिक्रम्य गृहस्थ यदि पूजयेत् ।
न तत् फलमवाप्नोति सर्वं गोत्रं प्रतापयेत ॥

---

1. वत्—इतिपाठा-

गृहस्थं · अयोगिनम् । तस्य कर्मणः फलं च लभते । तथा सर्वं गोत्रं सर्वानपि स्वगोत्रोद्भवान् पूर्वपुरुषान्; प्रतापयेत् - योग्यातिक्रमजनितप्रत्यवायेन दुःखिनः कुर्यादित्यर्थः । तथा । योगिनं समतिक्रम्य भोजयन्ति [1]परस्परम् ।

दाता भोक्ता च नरकं गच्छतः सह बान्धवैः ॥

इति योगिनोऽतिक्रमे दोषनिरूपणम् ।

**अथ गृहस्थादीनां योगित्वमुच्यते ।**

तत्र योगो नाम मुख्यया वृत्या जीवपरमात्मनोरेकीभावलक्षणः सम्बन्धः । स यद्यपि नैसर्गिकत्वेन सर्वक्षेत्रसाधारणः तथाप्यनाद्यविद्याकृतभेदाभासतिरस्कृतः सन् न संसृतिमतां जीवानां, किन्तु मुक्तानामेवास्ति । अस्य चोपाय आत्मतत्वज्ञानम् तदुपायश्च यमादिसमाध्यन्तोऽष्टाङ्गोऽपि योग । युज्यतेऽनेन जीवः परमात्मना सहेति करणव्युत्पत्तिमाश्रित्य मुख्यया वा वृत्या स योगः । तद्वन्तोगृहस्थादयोऽपि श्रुतिसामर्थ्यात् योगिनः ॥

अथातिथे. श्राद्धपङ्क्तौ भोजनीयत्वं वक्तुमतिथिस्वरूपं तावदुच्यते । अत्र मार्कण्डेयपुराणे ।

अज्ञातकुलनामानं तत्कालसमुपस्थितम् ।
बुभुक्षुमागतं श्रान्त याचमानमकिञ्चनम् ॥
ब्राह्मणं प्राहुरतिथिं स पूज्यः शक्तितो बुधैः ॥

शातातपोऽप्याह ।

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
प्राप्तस्तु वैश्वदेवान्ते सोऽतिथिः स्वर्गसङ्क्रमः ॥

इत्यतिथिस्वरूप निरूपणम् ।

---

1. इमं भोजयामि, मां अयं भोजयति, इति भावेन ।

### अथातिथिप्रशंसा । शिवधर्मोत्तरे ।

अनुग्रहाय लोकानां श्राद्धसम्प्रेक्षणाय च ।
चरन्नतिथिरूपेण देवा योगाश्च भूतले ॥
योगाः – योगिनः ।

विष्णुधर्मोत्तरे ।

देवा ब्राह्मणरूपेण चरन्ति पृथिवीमिमाम् ।
तस्मात् सम्प्राप्तमतिथिं प्रयत्नेन तु पूजयेत् ॥

इति अतिथिप्रशंसा ।

### अथातिथि परीक्षानिषेधः ।

तत्र मार्कण्डेयपुराणे ।

न पृच्छेत् [1]गोत्रचरणे स्वाध्यायं चापि पण्डितः ।
शोभनाशोभनाकारं तं मन्येत प्रजापतिम् ॥

विष्णुपुराणेऽपि ।

स्वाध्यायगोत्रचरणमपृष्टा च तथा कुलम् ।
हिरण्यगर्भबुध्या तं मन्येताभ्यागतं गृही ॥

### अथातिथि पूजाविधिः । तत्र मनुः

सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके ।
अन्नं चैव यथाशक्ति सत्कृत्यविधिपूर्वकम् ॥

हारीतः । विद्यातपोधिकानां च प्रथमासनमुच्यते ।
पङ्क्तौ सहस्थितानांतु भोजनादि समं स्मृतम् ॥

---

1. चरणं - आचारः ।

अथातिथिपूजाफलम् । तत्राह मनुः ।

अतिथिं पूजयेद्यस्तु श्रान्तं वा दृष्टमागतम् ।
सवृषं गोशतं तेन दत्तं स्यादिति मे मतिः ॥

विष्णुरपि ।

स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।
नावाप्नोति गृही लोकान् यथात्वतिथिपूजनात् ।

अथाऽऽतिथ्यमकुर्वतो दोषः कथ्यते ।

तत्र व्यासः ।

पथिश्रान्तमविज्ञातमतिथिं क्षुत्पिपासितम् ।
यो न पूजयते भक्त्या तमाहुर्ब्रह्मघातुकम् ॥

अयं च ब्रह्महत्यातुल्यः प्रत्यवायः, सत्यां शक्तावत्यन्तपात्रीभूतस्यातिथेरतिक्रमे विज्ञेयः ।

मार्कण्डेयपुराणे ।

अतिथिर्यस्य भग्नाशो गृहात् प्रति निवर्तते ।
[1]स दत्वा दुष्कृतं तस्य पुण्यमादाय गच्छति ॥

अथैवमुक्तलक्षणानां ब्राह्मणानामसंभवे न्यूनगुणैरपि श्राद्धं निर्वर्तयितुमनुकल्पोऽभिधीयते । तत्र ज्ञानोत्कृष्टादीनुत्कृष्टतमान् द्विजानभिधायाह मनुः ।

---

1. तस्य गृहमेधिनः स्वकीयं दुष्कृतं दत्वा तदीयं पुण्यमादाय गच्छति इत्यर्थः ॥

[1]एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥

एषः - अनन्तरोक्तः, प्रथमः मुख्यः, कल्पः - विधिः, हव्यकव्ययोः प्रदाने । अयं तु वक्ष्यमाणः अनुकल्पः अनु पश्चात् कल्पनमित्यनुकल्पः । मुख्याभावेऽनुष्ठीयते इत्यर्थः । पूर्वमुत्कृष्टतमाय देयमित्युक्तं अतः परं तदभावे उत्कृष्टतराय, तस्याप्यभावे उत्कृष्टाय, तस्याप्यभावे किञ्चिदुत्कृष्टाय देयमिति वक्ष्यति । तथा पूर्वमसम्बन्धिने देयमित्युक्तम् । तदभावे सम्बन्धिभ्यो देयमित्यतः परं वक्ष्यति । स चायमनुकल्पः सद्भिरनुष्ठितः ।

ब्रह्मवैवर्ते ।

योगिनः प्रथमं पूज्याः श्राद्धेषु प्रयतात्मभिः ।
तदभावे वेदविदः पाठमात्रास्ततः परम् ॥
विनियोज्या महात्मेष पावनाद्यो विधिर्मतः ॥

गृहस्थानामपि मध्ये योगिनः ब्रह्मविदः, मुख्याः । तदभावे वेदविदः वेदार्थज्ञाः । तेषामप्यभावे पाठमात्राः वेदस्य पाठमात्रं ये कुर्वन्ति । निरुक्तकारोपि वेदविदां प्रशंसामाह ।

स्थाणुरयं भारहारः किलाभूत्
अधीत्यवेदं न विजानाति योऽर्थम् ।

---

1. एषः असम्बन्धिभ्योविद्यादिभ्यः दीयते इति अयं मुख्यः कल्पः उक्तः । अयं मुख्याभावे वक्ष्यमाणोऽनुकल्पः ज्ञातव्यः । सद्भिः साधुभिः । मातामहं मातुलमित्यादिना अनुकल्पः उक्तः ॥ इति कुल्लूकभट्टः ॥

मनु अ-३, श्लो. १४७.

योऽर्थज्ञ इत् सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ॥

श्रोत्रियत्वं श्रोत्रियपुत्रत्वं चेति मिलितमुभयं श्रैष्ठ्यहेतुतया पूर्वमुक्तम् । इदानीमन्यतरापाये किं न्याय्यमिति संशये ।

मनुराह ।

अश्रोत्रियः पिता यस्य पुत्रःस्याद्वेदपारगः ।
अश्रोत्रियो वा पुत्रःस्यात् पिता स्याद्वेदपारगः ॥

ज्यायांसमनयोर्विद्यात् यस्य स्यात् श्रोत्रियः पिता ।
मन्त्रसम्पूजनार्थन्तु सत्कारमितरोऽर्हति ॥

मनु अ-३ श्लो. १३६-१४७

एकस्य तु पिता अपठः स्वयन्तु षाड्ङ्गवेदाध्यायी । इतरस्य तु पितावेदपारगः, स्वयन्तु अपठः । तयोः कः श्रेयानिति संशयस्य सिद्धान्तमाह । अनयोर्द्वयोर्मध्ये यस्य पिता श्रोत्रियस्तं ज्यायांसं श्राद्धयोग्यं विद्यात् । इतरः, स्वयमेव यः श्रोत्रिय सोऽपि मन्त्रसंपूजनार्थं तेन ये मन्त्रा अधीताः तत्सम्माननार्थं पूर्वाभावे सत्कारं श्राद्धे भोजनीयत्वमर्हति । यस्तु श्रोत्रियगोत्रप्रसूतोऽपि वृत्तहीनः, न तस्य विहिताक्रियया कुलमात्रेण श्रैष्ठ्यम् ।

तदुक्तमग्निपुराणे ।

किं कुलेन विशालेन वृत्तहीनस्य देहिनः ।
(क्रि)कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥

असम्बन्धिनां श्राद्धे भोजनीयत्वमभिधाय गरुडपुराणे ।

उदासीनेष्वलब्धेषु भोज्याः सम्बन्धिनोऽपि हि ।
मातुल स्याल याज्यर्त्विक् शिष्याचार्यादयोऽपि च ॥

मातुलः मातुर्भ्राता । स्यालः पत्नीभ्राता । याज्यः यस्यार्त्विज्यं क्रियते । ऋत्विक् याजकः । शिष्यः अध्याप्यः । आचार्यः वेदाध्यापकः ।

गौतमः[1] । शिष्यांश्चैके सगोत्रांश्च भोजयेदूर्ध्वं त्रिभ्योगुणवतः । च शब्दात् याज्यांश्च । द्वितीयचशब्दात् समानार्षेयांश्च ।

मनु-कूर्मपुराणयोः ।

मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं [2]विट्पतिं बन्धुमृत्विग्याज्यांश्च भोजयेत् ॥

आह गार्ग्यः ।

नैकगोत्रे हविर्दद्यात्समानप्रवरे तथा ।
न चाज्ञातकुले दद्यात् यथाकन्या तथा हविः ॥
अभावे ह्यन्यगोत्राणामेकगोत्रांश्च भोजयेत् ।
असमप्रवराभावे समानप्रवरानपि ।

कूर्मपुराणे ।

अभावे ह्यन्यगोत्राणां सगोत्रानपि भोजयेत् ।
विप्रनिन्दा न कर्तव्येत्याह वसिष्ठः ।
युगे युगे तु ये धर्मास्तेषु धर्मेषु ये द्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥

---

1. गौ ध-२-६ ।
2. विशः प्रजायाः दुहितुः पतिः इति व्युत्पत्त्या विट्पतिः जामाता ।

युगे युगे तु ये धर्माः युगानुरूपरागद्वेषादितारतम्यनिबद्धाः। ये ये असत्यभाषणादयो दुःस्वभावाः। तेषु धर्मेषु ये द्विजाः तेषु दुःस्वभावेषु वर्तमाना ये द्विजाः, युगानुरूपविप्रेष्वपि यथासंभवं श्रेष्ठा एव ग्राह्याः।

प्रथमकल्पशक्तस्य तु अनुकल्पानुष्ठातुः दोषमाह मनुः।

प्रभुः प्रथमकल्पस्य योऽनुकल्पे तु वर्तते।
[1]न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्॥

इत्यनुकल्पनिरूपणम्

## अथ सन्निहित ब्राह्मणानतिक्रमः।

तत्र शातातप-पराशरस्मृत्योः।

सन्निकृष्टमधीयानं ब्राह्मण यस्त्वतिक्रमेत्।
भोजने चैव दाने च दहत्यासप्तम कुलम्॥

षट्त्रिंशन्मते।

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
भोजने चैव दानेषु दहेत् त्रिपुरुषं कुलम्॥

महाभारते।

यदिस्यादधिको विप्रो दूरे वृत्तादिभिर्युतः।
तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधौ॥

बोधायनोऽप्याह।

यस्य त्वेकगृहे मूर्खो दूरेवापि बहुश्रुतः।
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥

इति सन्निहित ब्राह्मणानतिक्रमः।

---

1. पारलौकिकं अभ्युदयरूपं प्रत्यवायपरिहारार्थं फलं च न भवति। कु. भट्ट।

## अथ वर्ज्या ब्राह्मणाः ।

**दोषवती** ग्रहणे प्रकृतकर्मविनाशं स्पष्टमित्याह सत्यव्रतः ।

विधिहीने फलं किञ्चित् दुर्ब्राह्मण सुतेन च ।
दुर्ब्राह्मणे प्रदत्तञ्चेन्नेह नामुत्र तद्भवेत् ॥

विधिना यथोक्तद्रव्यैः पुत्रेण गुणवन्तो ब्राह्मणा भोजनीया इत्याम्नातम् । तत्र विधिहीनं यथोक्तद्रव्यादिहीनमपुत्रेणापि क्रियमाणं श्राद्धं किञ्चित्फलं ददात्येव । वक्ष्यमाणे दोषदूषिते दुर्ब्राह्मणे तु भोजिते सर्वथा श्राद्धं विनश्यतीत्यर्थः ।

**यमः** । ऊषरे तु यथेहोप्तं बीजमाशु विनश्यति ।
तथा दत्तमनर्हेभ्यो हव्यं कव्य च नश्यति ॥

ऊषरं - क्षारमृत्तिको देशः ।

**व्यास-शातातपौ** ।

[1]प्रस्तरे वापितं बीजं भिन्नभाण्डे च दोहनम् ।
भस्मन्यपि हुतं हव्य तद्वद्दानमसाधुषु ॥

अथानधीयानादयः ।

**तत्र-मनु-व्यास यमाः** ।

ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मै हव्यं न दातव्य न ।हि भस्मनि हूयते ॥

यथा स्तेनादयः पङ्क्तिदूषका. एवमनधीयानस्तत्कल्पदोष इत्येवमर्थं पुनर्वचनम् । यथा तृणाग्निर्न शक्नोति हवींषि पक्तुं हुतमात्रे च हविषि शाम्यति - क्षीणशक्तिर्भवति ।

---

1. प्रस्तरः - पाषाणः । पाषाणप्रस्तरग्रावोपलाश्मानःशिलादृषत् इति अमरकोशः ॥

एवमनधीयानो मूर्खः ।

व्यासः। सन्ध्याहीने व्रतभ्रष्टे विप्रे वेदविवर्जिते ।

दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम् ॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।

नैषां प्रतिग्रहो देयः न शिला तारयेच्छिलाम् ॥

यमः । न प्रतिग्रहमर्हन्ति वृषलाध्यापकाद्विजाः ।

शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ॥

इत्यनधीयानादयः ।

अथ शरीर दोषिणः ।

ब्रह्मपुराणे ।

भोक्तुं श्राद्धे न चार्हन्ति दैवोपहतचेतसः ।

षण्डोमूकश्च कुनखी खल्वाटोदन्तरोगवान् ॥

श्यावदन्तः पूतिनासः छिन्नाङ्गश्चाधिकाङ्गुलिः ।

गलरोगी च गड्डमान् स्फुटिताङ्गश्च सज्वरः ॥

खञ्जतूपरमण्डाश्च ये चान्ये हीनरूपिणः ॥

षण्डः - षोढापूर्वोक्तलक्षणः । मूकः - वाग्रहितः । खल्वाटः - केशरहितः । पूतिनासः - पूतिबन्नासाक्षिरोगी । गलरोगी - गलगण्डादि कण्ठरोगवान् । गड्डमान् - कुब्जः । खञ्जः - कुण्टः । यौवनेऽप्यजातश्मश्रुः तूपरः ।

शालङ्कायनः ।

अविद्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च ।

दग्धकर्णैश्च यद्भुक्तं तद्वै रक्षांसि गच्छति ।

लम्बकर्णलक्षणमाह हारीतः ।

हनुस्थलादधः कर्णौ लम्बौ तु परिकीर्तितौ ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत् ॥

इति शरीर दोषिणः ।

अथ निन्दिताचाराः ।

व्यास-शातातपौ ।

ऊषरे वापितं बीजं यच्च भस्मनि हूयते ।
क्रियाहीनेषु यद्दत्तं तस्य नाशो विधीयते ॥

क्रियाहीनाः - विहितानुष्ठानशून्याः ।

आपस्तम्बः ।

नीलीकर्षणकर्ता तु नीलीवस्त्रानुधारकः ।
किञ्चिन्न तस्य दातव्यं चाण्डालसदृशो हि सः

यः क्षेत्रे नीलीबीजानि निवपति स नीलीकर्षणकर्ता ।

हारीतः । वृषलीपति भुक्तानि श्राद्धानि च हवींषि च ॥
देवानां नोपतिष्ठन्ति दाता स्वर्गं न गच्छति ॥

इति निन्दिताचाराः ।

अथाश्रमबाह्याः ।

नन्दिपुराणे ।

ब्रह्मज्ञानापदेशेन ये कुर्वन्त्यशुभं महत् ।
सर्वकर्मसु वर्ज्यास्ते चाण्डाला द्विजरूपिणः ॥

एवंविस्था द्विजा ये ते ब्रह्मविद्यापदेशतः ।
देशात् [1]निर्वासनीयास्ते राज्ञा वै धर्मचारिणा ॥
अनाश्रमी तु यो विप्रः जटी मुण्डी वृथा चयः ।
वृथा कर्म परित्यागः श्राद्धे तं दूरतस्त्यजेत् ॥

अथ केतनानर्हाः ।

महाभारते ।

चिकित्सका देवलकाः वृथानियम धारिणः ।
सोमविक्रयिणश्चैव राजन्नार्हति केतनम् ॥

देवलकाः - मूल्येन देवपूजकाः । वृथानियमधारिणः दाम्भिकाः । सोमविक्रयिणः - सोमलताविक्रेतारः ।

गायका नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका बोधकाश्चैव राजन्नार्हन्ति केतनम् ॥

प्लावकाः । वाटिकाः । बोधकाः वैतालिकाः ।

होतारो वृषलानां ये वृषलाध्यापकास्तथा ।
तथा वृषलशिष्याश्च श्राद्धे नार्हन्ति केतनम् ॥

ये शूद्रान् व्याकरणादि शास्त्रमध्यापयन्ति ते वृषलाध्यापकाः । एवं वृषलशिष्याः ॥

अथ ब्राह्मणानां हानोपादनहेतुभूत दोष-गुण-परिज्ञानार्थं परीक्षोच्यते । तत्र महाभारते ।

श्राद्धेषु च महाराज परीक्षेत् ब्राह्मणान् बुधः ।
कुल-शील-वयो-रूपं-विद्यया विनयेन च ॥

---

1. निष्कासनीया ।

कुशादिग्रहणं श्राद्धभोजनयोग्यतामात्रोपलक्षणार्थम्

ब्रह्मवैवर्ते ।

तस्मात् परीक्षिते देयं पात्रभूते द्विजन्मनि ।
कष्टः श्राद्धविधिर्नित्यं जायतेऽसौ बहुच्छलः ॥

यतोऽयं श्राद्धविधिः "बहुच्छलः" केनापि अल्पतमेनापि दोषेण पराङ्मुखी भवितुमिच्छति, अतः षण्डपाषण्डवार्द्धुषिक देवलवैडालभृतकत्वादिदोषनिराकरणपूर्वकं वेदविद्याव्रतशीला-दिमत्त्वेन पात्रतया परीक्षिते द्विजन्मनि श्राद्धं देयम् । तथाऽयं विधिः देश-काल-क्रिया-द्रव्य-कर्तृ-भोक्तृगतमल्पमपि दोषमवा-प्य नश्यति । तथा छलग्राहिश्राद्धविघ्नकर्तृरक्षः सञ्चारद्वारभूत-दुर्निवारानेकसूक्ष्मछिद्रवान् । अतः कष्टानुष्ठानः । अतः स पङ्क्तिपावनैस्त्रिनाचिकेतादिविशेषणयुक्तैर्योगनिष्ठैश्च निश्छिद्रः क्रियते ।

अत्र परीक्षायां मनु-शातातपाभ्यां गुणोपदेशः क्रियते ।

दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् ।
तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ॥

परीक्षेत दूरादिति श्राद्धकालात् पूर्वं दूरतरे काले परीक्षेत । तत्काले हि परीक्षा क्रियमाणा ब्राह्मणस्य खेदं जनयेत् । अथवा न स्वयं साक्षात्परीक्षां कुर्वीत । किन्तु पुरुषान्तरेण कारयेत् । यथा 'मामयमस्मैकार्याय परीक्षते' इत्येवं ब्राह्मणो नोपलक्षेत् । अथवा दूरान्मातृतः पितृतश्च दशपूरुषं त्रिपूरुषं वा वेदपारगत्वं परीक्षेत । अथ पितृवंशे मातृवंशे च दश त्रयो वा पुरुषा वेद-

पारगत्वेन विख्याताः स्वयं च वेदपारगा इत्येवं विप्रा परीक्ष्याः श्राद्धेऽवश्य विधेयेत्यर्थः । अतएव दशोभयतः श्रोत्रिया इति हारीतव्यासाभ्यामुक्तम् । दशपुरुषानवगतो पुरुषत्रय परीक्षाऽपि छागलेनोक्ता ।

सर्वलक्षणसंयुक्तं विद्याशील गुणान्वितम् ।
पुरुषत्रयविख्यातं सर्वं श्राद्धं प्रकल्पयेत् ॥ इति ।

भविष्यत्पुराणे ।

अनुयोगेन यो दद्यात् ब्राह्मणाय प्रतिग्रहम् ।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरं ।

अध्ययनादिविषयः प्रश्नः अनुयोगः ।

वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात् ।
तावतीः भ्रूणहत्या वै वेदविक्रयमाप्नुयात् ॥

साक्षात्परीक्षणमन्तरेण प्रकारान्तरेण तु परीक्षायां न कश्चिद्दोषः । गुणवते दानविधानात् । गुणवत्तायाश्च परीक्षया विना दुर्ज्ञेयत्वात् ।

तदाह मनुः ।

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि तु प्राज्ञः परीक्षेत प्रयत्नतः ॥

तथा च पद्मपुराणे ।

तीर्थेषु ब्राह्मणान् नैव परीक्षेत कथञ्चन ।
अन्नार्थिनमनुप्राप्तं भोजयेन्मनुशासनात् ॥ इति ।

परीक्षाप्रकारस्तु वृद्धमनुस्मृति - मत्स्यपुराणयोर्दर्शितः ।

शीलं संवसनात् ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा सङ्कथनात् ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥

चिरकालमतिसन्निहितदेशेवासः संवसनम् । तत्वार्थनिर्धारणार्थं सुहृद्भावेन शास्त्रचर्चा सङ्कथनम् । प्रज्ञा मेधा, प्रकृष्टं ज्ञानं वा ।

आह देवलः ।

ब्राह्मणेष्वप्यपाङ्क्तेयान् सर्वान् काम्येषु वर्जयेत् ।
परीक्ष्य बहुधा विप्रानाहरेत् पङ्क्तिपावनान् ॥

इति ब्राह्मणपरीक्षा ।

इति श्राद्धकल्पे ब्राह्मणनिरूणं नाम षष्ठोऽध्यायः समाप्तः ।

## अथ सप्तमोऽध्यायः ।

### उपासनीयनिरूपण प्रकरणम् ।

विष्णुः "बहीनागाः श्राद्धं पश्येयुः न शूद्रा न पतिता न महारोगिणः ।

मनुः । चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च ।
रजस्वला च षण्डश्च नेक्षेरन्नश्नतो द्विजान् ॥

ईक्षणेव सन्निधिरव लक्ष्यते ।

होमे प्रदाने भोज्ये च यदेभिरभिवीक्षितम् ।
दैवे हविषि पित्र्ये वा तद्गच्छत्ययथातथम् ॥

होमे - अग्निहोत्रादौ शान्त्यादि होमे वा । प्रदाने गो-भू हिरण्यादिविषयेऽभ्युदयार्थे । भोज्ये - अदृष्टार्थे ब्राह्मणभोजने ।

दैवे हविषि - दर्शपूर्णमासादौ । पित्र्ये - श्राद्धे । एभिः चाण्डालादिभिः यद्वीक्षितं तदयथातथं गच्छतीति । यदर्थं क्रियते तद्विपरीतमेव साधयतीत्यर्थः ।

आह गौतमः ।

'श्व-चण्डाल-पतितावेक्षणे दुष्टं तस्मात् [1]परिवृते दद्यात्तिलैर्वाविकिरेत् । पङ्क्तिपावनोवा शमयेत् ।

श्वादीनामवेक्षणे दुष्टं दोषवत् भवति । अतः कारणात् परिवृते प्रच्छन्ने श्राद्धं कुर्यात् । तथा न कृतं चेत् तर्हि समन्तात् तिलानवकिरेत् । पङ्क्तिपावनो वा पङ्क्तिमूर्धनि विवेशितः तं सर्वमपि दोषं शमयेत् ।

बौद्ध श्रावक निर्ग्रन्थ शाक्त जीवक कापिलान् ।
ये धर्मान् अनुवर्तन्ते ते वै नग्नादयो जना ॥

बौद्धाः सौगताः । श्रावकाः श्वेतपटाः । निर्ग्रन्था जैनाः । शाक्ताः कौलाः । जीवकाः बार्हस्पत्याश्चार्वाकाः । कापिलाः लोकायतिकैकदेशीयाः ॥

इति श्राद्धकल्पे अपासनीयनिरूपणं नाम सप्तमोऽध्यायः ।

अथाष्टमोऽध्यायः । प्रक्षेप्यद्रव्य निरूपण प्रकरणम् ।

आपस्तम्ब - प्रशस्तानि द्रव्याणि अनुक्रम्याह ।

एतैस्तीव्रतरा पितॄणां प्रीतिस्तृप्तिर्द्राघीयांसंच कालं तथा धर्मानुहृतेन द्रव्येण तीर्थप्रतिपन्नेन ॥ प्रश्न-२ पटल-७ सू-

---

1. परिश्रिते दद्यात् । परिश्रयणं, तिरस्करिण्यादिना व्यवधानम् । गौतमधर्मसूत्रे-प्रश्न २ अध्याय ६ सूत्र २६ इति मिताक्षरी ।

प्रीतिः परितोषातिशयः। तृप्तिः आर्तिनिवृत्तिः द्राघीयांसं दीर्घतरम्। धर्मानुहृतेन धर्म्योपायार्जितेन। तीर्थप्रतिपन्नेन सत्पात्रप्रतिपादितेन।

धर्म्यैरेवोपायैरार्जितानि धान्य शाक-फल-मूल-पयः प्रभृतीनि श्राद्धे देयानि। धर्म्याश्च द्रव्यार्जनोपायाः स्मृतिषुदर्शिताः तत्राह मनुः।

[1]सप्तवित्तगमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥

वित्तागमा द्रव्यार्जनोपायाः। धर्म्याः पुरुषार्थत्वपक्षे प्रत्यवायानुत्पादकाः वक्ष्यमाणप्रकारेण। क्रत्वर्थत्वे तु क्रियमाणाय धर्माय हिताः साद्गुण्यहेतवः। तत्र स्वामिसम्बन्धेनैव निमित्तेन यदन्यदीयं द्रव्यमन्यस्य सम्भवति स दायः। अत्र स्वामिसम्बन्ध एवोपायत्वेनोक्तः। अनन्यपरिगृहीतस्य जल-तृण-काष्ठादेः निध्यादेर्वाऽधिगमः लाभः। द्रव्यविनिमयः क्रयः। शत्रुपराभवः जयः। वृद्ध्यर्थं परस्य द्रव्यसमर्पणं प्रयोगः। कर्मणा - आर्त्विज्याध्यापनपौरोहित्यादिना, शिल्पेन शुश्रूषया वा सम्बन्धः कर्मयोगः। दीयमानद्रव्यस्वीकारः प्रतिग्रहः। सन् साधुरनिषिद्धः प्रतिग्रहः सत्प्रतिग्रहः। अत्र दायादिष्वपि सत्वमनुसन्धेयम्। एतेषु च दाय-लाभ-क्रयाः साधारणाः। जयः क्षत्रियस्यैव। स च दण्डाकर करादीनामुपलक्षणम्। प्रयोगो वैश्यस्यैव। स च कृषिवाणिज्यादेरुपलक्षणम्। आर्त्विज्या ध्यापन पौरोहित्य लक्षणः कर्मयोगः

---

1. एतेषां धर्म्यत्ववचनमात्, एतदभावे अन्येषु अनापद्विहितेषु कर्मसु तदभावे आपद्विहितेषु प्रवृत्तिः॥ कु-भट्टः मनु. १०.११५।

प्रतिग्रहश्च ब्राह्मणस्यैव। शिल्पलक्षणः कर्मयोगः कारुकाणामेव। शुश्रूषालक्षणस्तु शूद्रादेरेव इति।

तथा च [1]गौतमः। स्वामीरिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धम्। क्षत्रियस्य विजितं। निर्विष्टं वैश्यशूद्रयोरिति। रिक्थं पित्रादीनां अभावे प्राप्तम्। संविभागः भ्रात्रादीनां परस्परविभागः। परिग्रहः - वन्येषु अस्वामिकेषु पूर्वस्वीकारः। अधिगमः अस्वामिकनिध्यादेः स्वीकारः।

अत्रार्जनीयत्वेन धनं प्रकृत्याह नारदः।

तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शवलमेव च।
कृष्णं च तस्य विज्ञेयो विभागः सप्तधा पुनः॥

एकैकस्य शुक्लादेः सप्त सप्त भेदा भवन्तीत्यर्थः।

श्रुतशौर्यतपः कन्या याज्य शिष्यान्वयागतम्।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः॥

आगतशब्दः श्रुतादिभिः प्रत्येकं सम्बध्यते। श्रुतेन विद्यया निमित्तेन यः प्रतिग्रहः तेन यत् प्राप्तम्। शौर्येण निमित्तेन यद्विजितं भृतिरूपेण वा लब्धम्। तपसा निमित्तेन प्रतिग्रहेण यल्लब्धम्। अत्र प्रतिग्रहस्य शुक्लत्वे दातृ प्रतिग्राह्यशुद्धिरपि कारणत्वेनानुसन्धेया। कन्यागतं - कन्याप्रतिग्रहकाले श्वशुरादिभ्यो यल्लब्धम्। शिष्यागतं शिष्यादध्याप्यादध्यापनेन निमित्तेन यत् प्राप्तं गुरुदक्षिणादि। अन्वयागतं - दायप्राप्तम्।

---

1. प्रश्नः २, अध्यायः ९, सूत्रं ३९ इति मिताक्षरा॥

अत्र यथाधिकारं शुक्लत्वमनुसन्धेयम् । उदयोऽपि तद्विधः । इति तद्धनविहितकर्मजं फलमपि शुक्लम् । शुक्लं दुःखासम्भिन्नमित्यर्थः ।

कुसीद कृषि वाणिज्य शिल्प शुक्लानुवृत्तितः ।
कृतोपकारादाप्तं च शबलं समुदाहृतम् ॥

शबलं दुःखानुविद्धमित्यर्थः ॥

पार्श्विक द्यूत चौर्यार्ति प्रतिरूपक साहसैः ।
व्याजेनोपार्जितं यत्तत् सर्वेषां कृष्णमुच्यते ॥

आर्तिः परपीडा । प्रतिरूपकं - परवञ्चनार्थं प्रतिकृतिकरणम् । साहसं-स्वप्राणव्ययाङ्गीकारेण पश्यतो हरत्वं । व्याजः दम्भः । कृष्णं - दुःखप्रायफलम् ।

एवं शबलकृष्णयोः । इति धर्मोपायार्जितद्रव्यविधिः ।

अथाधर्मोपायार्जितस्य प्रतिषेधः प्रदर्श्यते ।

आह वृद्धशातातपः ।

द्रव्येणान्यायलब्धेन यः करोत्यूर्ध्वदेहिकम् ।
न स तत्फलमाप्नोति तस्यार्थस्य दुरागमात् ॥

ऊर्ध्वदैहिक - श्राद्धादि ।

देवलोऽप्याह ।

अन्यायाधिगतां दत्वा सकलां पृथिवीमपि ।
श्रद्धावर्जमपात्राय न कश्चिद्भूतिमाप्नुयात् ॥

भूतिः फलम् ।

आह शातातपः ।

वेदविक्रयजं नेष्टं स्त्रिया यच्चार्जितं धनम् ।
न देयं पितृदेवेभ्यो यच्च क्लीबादुपार्जितम् ॥

वेदविक्रयजं - वेदविक्रयलब्धम् । वेदविक्रयश्च षड्विधः ।
स चोक्तो भविष्यत्पुराणे ।

प्रख्यापन च व्याख्यानं प्रश्नपूर्वः प्रतिग्रहः ।
याजनाध्यापने वादः षड्विधो वेदविक्रयः ॥ इति ।

ईदृशोऽहं वेदवेदाङ्गेष्वधीतीति धनार्थं तत्र तत्रा ध्ययन-प्रकाशन प्रख्यापनम् । अर्थलिप्सया वेदार्थविवरणं व्याख्यानम् । ख्यातिलाभपूजार्थं श्रोत्रियपराजयपर्यवसानो वेद-तदर्थसम्बन्धी-विवादः वादः । स्त्रीव्यापारोपजीवनेनार्जित स्त्रीष्वार्जितं, स्त्रीविक्रयार्जित वा । क्लीबः षण्डः ।

तथा । परिभुक्तमविज्ञातमपर्याप्तमसस्कृतम् ।
यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते ॥

परिभुक्तं परिगृहीतोपयोगं वस्त्रादि, अपर्याप्तं स्वकार्याक्षमं जरद्गवादि ।

इत्यधर्मोपार्जित द्रव्यप्रतिषेधः ।

तदेवं धर्म्यैरुपायैरार्जितेन श्राद्धादीनि कर्तव्यानि । न तु यत्किञ्चिदुपायार्जितेनेति ।

### अथ व्रीह्यादिद्रव्योत्पत्तिः ।

ब्रह्मवैवर्ते ।

त्वष्ट्रावे यजमानेन त्रायमाणो महात्मना ।
पपौ शचीपतिः सोमं पृथिव्यां विप्रुषोऽपतन् ॥

श्यामाकास्तु ततो जाताः पित्रर्थमपि पूजिताः ।
गोधूमाश्च यवाश्चैव समुद्गा रक्तशालयः ।
एते सोमात् समुद्भूताः पितॄणाममृतं ततः ॥
तस्मात् प्रयत्नतो देया एते श्राद्धेषु वंशजैः ॥

इति व्रीह्यादिद्रव्योत्पत्तिः ।

अथ ग्राम्याणि धान्यानि निरूपयन्ति ।

मनुः । तिलैः व्रीहियवैः माषैरद्भिः मूलफलेन च ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥

तिलादिग्रहणं नेतरधान्यपरिसङ्ख्यानार्थम् ।
किन्तु पात्राणां फलविशेषप्रदर्शनार्थम् ।

अत्रिरपि ।

अगोधूमञ्च यच्छ्राद्धं कृतमप्यकृतं भवेत् ।

अथ ग्राह्याणि फलमूलानि ।

दाडिमं मागधीचैव नागरार्द्रकतिन्तिडीः ।
आम्रातकं जीरकं च कुम्भरञ्चनियोजयेत् ॥

मागधी- पिप्पली । नागरं - शुण्ठी । आर्द्रकं - शृङ्गबेरम् । तिन्तिडी - चिञ्चा । जीरकं - गौरजीरकम् । कुम्बरं - कुस्तुम्बरम् ।

यमः । अनिर्दशाया गोः क्षीरं आज माहिषमेव च ।
आविकं [1]सन्धिनीक्षीरं औष्ट्रमैकशफञ्चयत् ॥

---

1. सन्धिनी - गर्भिणी

वर्जयेत् गोरवत्सायाः पयश्चैवान्यवत्सायाः ।
आरण्यानां तु सर्वेषां वर्जयित्वा तु माहिषम् ॥
आविकादीनि वर्ज्यानि सदा स्वायम्भुवोऽब्रवीत् ॥

सुमन्तुः ।

पयो दधि घृतञ्चैव गवां श्राद्धेषु पावनम् ।
महिषीणां घृतं प्राहुः श्रेष्ठं नतु पयः क्वचित् ॥
अथान्नानि तत्र ग्राह्याण्युच्यन्ते ।

देवलः । ततोऽन्नं बहुसंस्कारं नैकव्यञ्जन भक्ष्यवत् ।
चोष्यपेयसमृद्धञ्च यथा शक्त्युपकल्पयेत् ॥

बहुसंस्कारं - सूपकारशास्त्रोपदिष्टैः समृद्धतरगृहजनप्रसिद्धैः हिङ्गुमरीचैलाकर्पूरादियुक्तिजन्यैरभिज्ञरसनीयैरतिशयविशेषैर्यु - क्तम् । नैकव्यञ्जन भक्ष्यवत् - व्यञ्ज्यते अनेन अन्नस्य रसः इति व्यञ्जनं - सूपशाकादिकम् । दन्तैरवखण्ड्य यद्भुज्यते तत् भक्ष्यम् । यस्य ओष्ठदशनरसनादिभिर्निपीडितस्य सफूत्कारेण मुखमारुतेन रसो निष्पीयते तत् - चोष्यम् । यथेक्षुखण्डादिकम् । पेयं - द्रवैकस्वभावं पानकादि । उपलक्षणं चैतद्भोज्य लेह्ययोः । यत्वनतिकाठिन्यादतिप्रयत्नवत् खण्डनानपेक्षं चर्वयित्वैव निगीर्यते तत् भोज्यम् । यत्तु सान्द्रद्रवस्वभावतया दशनानपेक्षेण रसनाव्यापारेणाश्यते तत् लेह्यम् । यथाशक्ति - शक्तिमनतिक्रम्य । उपकल्पयेत् - सम्पादयेत् ।

कूर्मपुराणे ।

उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय इच्छता ।
अन्यत्र फलमूलेभ्यः पानकेभ्यस्तथैव च ॥

पावकानि - गुडमरीचिशर्करैलाकर्पूरादिसंस्कृतापक्वद्राक्षाकद-
ल्यादिफलद्रवाः ।

इति श्राद्धकल्पे प्रक्षेप्यद्रव्यनिरूपणं नाम अष्टमोऽध्यायः ।

अथ नवमोऽध्यायः ।

श्राद्धोपकरणानि ।

आह गोभिलः ।

कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः ।
कुशाग्रे शङ्करं विद्यात् सर्वे देवाः समन्ततः ॥

दर्भान् प्रकृत्य शतपथश्रुतिः । 'अग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणामिति' ।

हारीतः ।

जपहोमहरा ह्येते असुराऽव्यक्तरूपिणः ।
पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश ॥

उत्पाटनमन्त्रस्तत्रैव ।

विरिञ्चिना सहोत्पन्न परमेष्ठि निसर्गज ।
नुद पापानि सर्वाणि [1]मम स्वस्तिकरो भव ॥

स्मृत्यन्तरेऽपि तमेवमन्त्रमभिधाय ।

एवं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुं फट्कारेण मन्त्रेण सकृच्छित्वा समुद्धरेत् ॥

---

1. दर्भ स्वस्ति करो मम इति पाठान्तरम् ।

अत्र काल नियममाह हारीतः ।

मासे नभस्यमामास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोक्तव्याः पुनः पुनः ।।

यदपि शाङ्ख्यवचनम् ।

दर्भाः कृष्णाजिनं मन्त्राः ब्राह्मणाश्च विशेषतः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

यच्च गृह्यपरिशिष्टे ।

दर्भाः कृष्णाजिनं मन्त्राः ब्राह्मणाश्च विशेषतः ।
अयातयामान्येतानि नियोज्मानि पुनः पुनः ।। इति ।।

तदपि पूर्ववचनानुसारेण नभोऽमावास्यागृहीतदर्भविषयमेव मन्तव्यम् ।

बर्हिः प्रत्याह यमः ।

कुशाः काशास्तथादूर्वा यवा व्रीहय एव च ।
बल्वजाः पुण्डरीकाणि सप्तधा बर्हिरुच्यते ।।

### अथ तिलाः । मत्स्यपुराणे

विष्णोर्देहसमुद्भूताः कुशा. कृष्णतिलास्तथा ।
धर्मस्य रक्षणायालमेतत्प्राहुर्दिवौकसः ।।

अथ यवाः ।

यवैरर्थां यवैर्दानं यवै रक्षा यवा हविः ।
वैश्वदेवे तु यव स्यात् तृप्तिस्तत्रास्तु शाश्वती ।।

अथ रजतमहिमा । स्कन्दपुराणे ।

यः प्रयच्छति विप्राय रजतं चातिनिर्मलम् ।
स विधूयाशु पापानि स्वर्गलोके महीयते ॥
रूपकः सुभगः श्रीमानिह लोके च जायते ॥

ब्रह्मवैवर्ते ।

रजतस्य कथा वाऽपि दर्शनं दानमेव च ।
अनन्तमक्षयं स्वर्ग्यं राजतं दानमेव च ॥
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत ॥

नागरखण्डे ।

धातूस्तु सृजता पूर्वं रौप्यं सृष्टं स्वयम्भुवा ।
तेन तद्विहिता श्राद्धे दक्षिणा पितृतृप्तये ॥

अलाभे सति रूप्यस्य नामानि परिकीर्तयेत् ।
तुष्यन्ति पितरो राजन् कीर्तनाद्रजतस्य च ॥

अथ स्वर्णप्रशंसा । ब्रह्माण्डपुराणे ।

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
पवित्राणां पवित्रं च दानानां नात्र संशयः ॥

पवित्रं परमं लोके सुवर्णेन समं क्वचित् ।
न विद्यते द्रव्यजात दानं वा भूषणं तथा ॥

वेदव्यासः ।

सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्तिकाञ्चनम् ।
एवं हि भगवानत्रिः पितामहसुतोऽब्रवीत् ॥
अथ भोजनपात्राणि । वृद्धशातातप-हारीत-वसिष्ठाः ।

आयसेन तु पात्रेण यदन्नं सम्प्रदीयते ।
भोक्ता विष्ठाशन भुङ्क्ते दाता च नरकं व्रजेत् ॥

अथ पुष्पाणि ।

नागरखण्डे ।

जातीपुष्पसमायुक्तं तच्छ्राद्धं व्यर्थतां व्रजेत् ।

क्रतुराह ।

असुराणां कुले जाता जाती पूर्वं परिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गताः ॥

आह शङ्खः ।

उग्रगन्धान्यगन्धानि चैत्यवृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ॥
धूपं गन्धगुणोपेतं ददत्पितृपरायणः ।
लभते स्त्रीष्वपत्यानि इह चामुत्र जन्मनि ॥

अथ दीपाः ।

ब्रह्मपुराणे ।

श्राद्धे दीपप्रदानेन तेजस्वी जायते नरः ।
रूपवान् धनवान् भोगी सुखमैश्वर्यमश्नुते ॥
तस्माद्दीपः सदा देयो यजमानेन वै पितॄन्[1]
दीपहीनं ददच्छ्राद्धमन्धे तमसि मज्जति ॥

अथाच्छादनम् ।

---

1. पितॄनुद्दिश्यदेयः इत्यर्थः ।

भगवतीपुराणे ।

अधरीयोत्तरीयार्थमुद्दिश्यैकैकमादरात् ।
वासोयुगं प्रदातव्यं पितृकृत्ये विपश्चिता ॥
निष्क्रयो वा यथाशक्ति वस्त्रालाभे प्रदीयते ।

विष्णुधर्मोत्तरे ।

बहुमूल्यानि वासांसि क्षौमादीनि महामतिः ।
श्राद्धे विश्राणयेद्यस्तु तस्य विष्णुः प्रदीयति ॥

प्रभासखण्डे ।

आच्छादनं च यो दद्यादहतं श्राद्धकर्मणि ।
आयुः प्रकाममैश्वर्यं रूपं च लभते तु सः ॥

अहत लक्षणमाह प्रचेताः ।

ईषद्धौतं नवं चैव सदशं यन्न धारितम् ।
अहतं तद्विजानीयात सर्वकर्मसु पावनम् ॥

ईषद्धौतम् - अकारुधौतम् ।

अथ यज्ञोपवीतम् ।

भविष्यत्पुराणे ।

दद्याद्यज्ञोपवीतानि पितॄणां प्रीतये सदा ।
श्रद्धवान् धार्मिकस्तेन जायते ब्रह्मवर्चसी ॥

कूर्मपुराणे ।

यो ब्राह्मणेन शुचिना ब्रह्मसूत्रं विनिर्मितम् ।
पितृभ्यो यच्छति प्राज्ञः स भवेद्वेदपारगः ॥

अथ छत्रम् ।

बृहद्विष्णुपुराणे ।

छत्रं विचित्रं यो दद्यात् पितॄणां श्रेयसान्वितः ।
स विन्दति न सन्देहः सन्तापं कुत्रचिन्न हि ॥

पद्मपुराणे ।

यो वै प्रयच्छति छत्रममुकस्येदमस्त्विति ।
तेन सन्तारितस्तापात् स भवेदायुगक्षयात् ॥

इति छत्रनिरूपणम् ।

अथोपानत् पादुके ।

वायुपुराणे ।

श्राद्धेषूपानहौ दद्याद् ब्राह्मणेभ्यो विशेषतः ।
दिव्यं स लभते चक्षुर्वाजियुक्तान् रथांस्तथा ॥

देवीपुराणे ।

उपानहौ प्रयच्छन्ति ये पितृभ्यः समाहिताः ।
अश्वदानं कृतं यैस्तु नात्र कार्या विचारणा ॥

वायुपुराणे ।

ऋजू पूर्णे तु यो दद्यात् पादुके श्राद्धकर्मणि ।
शोभनं लभते यानं पादयोः सुखमेव च ॥

अथासनानि ।

ब्रह्मपुराणे ।

आसनानि च रम्याणि पितृभ्यो यः प्रयच्छति ।
स आस्ते सुचिरं कालं त्रिदशैरभिपूजितः ॥

देवीपुराणे ।

पीठान्यतिमनोज्ञानि पितृणां प्रददाति यः ।
तस्य पीठेश्वरी नित्यं वरान् यच्छति वाञ्छितान् ॥

अथ शय्या-स्तरण-प्रच्छादन-पटोपधानानि ।

ब्रह्माण्डपुराणे ।

शय्यामास्तरणोपेतामुत्तरच्छदसंयुताम् ।
उपधानेन संयुक्तां पितृद्देशेन यो दिशेत् ॥

मोदन्ते पितरस्तस्य सुखिनः शाश्वतीः समाः ।
दातापि स्वर्गमासाद्य विमानं दिव्यमास्थितः ॥
सेव्यते सुरनारीभिः गीयमानश्च किन्नरैः ॥

कूर्मपुराणे ।

शय्यां स तूलिकां दद्यात् पितृकर्मणि यो नरः ।
रमयन्त्यनुरक्तास्तं स्वर्गे सारङ्गलोचनाः ॥

अथ पुस्तकानि ।

ब्रह्मवैवर्ते ।

श्राद्धकाले गुणवतां विप्राणां समुपस्थिते ।
दद्याच्छास्त्राणि धर्म्याणि स्मृतिं मेधाञ्च विन्दति ॥

चमत्कारखण्डे ।

यः पुस्तकानि विप्राणां पित्रर्थं विनिवेदयेत् ।
स विद्वान् जायते वाग्मी मेधावी च बहुश्रुतः ॥

पुस्तकानि पितृभ्यस्तु वेदान्तानी ददाति यः ।
स श्रोत्रियान्वये भूत्वा जायते वेदवित्तमः ॥
दत्वा व्याकरण तु स्याच्छश्वत् ब्रह्मविदां वरः ॥

अथ दक्षिणाद्रव्याणि ।

मत्स्यपुराणे ।

सतिलं नामगोत्रेण दद्याच्छक्त्याऽथ दक्षिणाम् ।
गो-भू-हिरण्य-वासांसि यानानि शयनानि च ॥
दद्याद्यदिष्ट विप्राणामात्मनः पितुरेव वा ।
वित्तशाठ्येन रहित. पितृभ्यः प्रीतिमाचरन् ॥

नामगोत्रेण - सम्प्रदानस्यात्मनश्च नामगोत्रोच्चारणेन ।

अत एव व्यासः ।

नामगोत्रे समुच्चर्य सम्प्रदानस्य चात्मनः ।
सम्प्रदेयं प्रयच्छति कन्यादाने तु पुंस्त्वयम् ॥

सौरपुराणे ।

बह्वीभिर्दक्षिणाभिर्यः श्राद्धे प्रीणयति द्विजान् ।
स पितृणां प्रसादेन याति स्वर्गमनन्तकम् ॥
अशक्तस्तु यथा शक्त्या श्राद्धे दद्यात्तु दक्षिणाम् ।
अदक्षिणन्तु यच्छ्राद्धं ह्रियते तद्धि राक्षसैः ॥
यज्ञोपवीतमथवा ह्यतिदारिद्र्यपीडितः ।
प्रदद्यात् दक्षिणार्थं वै तेन स्यात् कर्म सद्गुणम् ॥

इति दक्षिणाद्रव्यनिरूपणम् ।

इति श्राद्धकल्पे श्राद्धोपकरणं नाम नवमोऽध्यायः ।

## अथ दशमोऽध्यायः ।

अथ परिभाषा ।

तत्र सर्वशास्त्रोपसंहारः । तदर्थमिदं चिन्त्यते, किं स्वशाखा कल्पसूत्र - गृह्येषु यावद्धर्मकं श्राद्धमुक्तं तावन्मात्रमेव कर्तव्यम्, उत मन्वादिस्मृतिविहितसर्वधर्मोपसंहारेणेति ।

तत्र यदि तावन्मात्रकं क्रियते तदा स्व शाखा-कल्पसूत्र-गृह्येषु तावन्मात्रोपदेशोऽर्थवान्, अन्यथा अनर्थकः स्यात् ।

ननु यदि स्मृतिविहितधर्मोपसंहारः क्रियते तदा स्मृतयोऽर्थवत्यः, अन्यथानर्थिकाः स्युरिति समानन्यायतया स्मार्तधर्मकश्राद्धोपसंहारोऽपि निरवद्यमासीदिति ।

नच प्रातिस्विकशाखा-कल्पसूत्र-गृह्यशून्यान् पुरुषान् प्रति स्मृतयोऽप्यर्थवत्यो भविष्यन्तीति वाच्यम् ।

प्रातिस्विकशाखादिशून्यानां त्रैवर्णिकानामभावात् । न च शूद्रान् प्रत्यर्थवत्यो भविष्यन्तीति वाच्यम् । त्रैवर्णिकाधिकारिकोपनयनाध्ययनाग्निहोत्रादिकर्मोपदेशप्रधानत्वात् स्मृतीनां, त्रैवर्णिकान् प्रत्यपि तासामर्थवत्वेन भाव्यम् इति चेत् । नैवम् । कर्मविशेषे शूद्रान् प्रत्येवार्थवत्वं कल्प्यताम् ।

अथवा त्रैवर्णिकान् प्रत्यपि बहुधर्मक श्राद्धान्तरोपदेशेनोपयोगित्वं वर्ण्यताम् । अतः स्वशाखा-कल्पसूत्र-गृह्योक्तश्राद्धप्रयोगः तावानेव कर्तव्यो न स्मार्तपदार्थप्रवेशेनातिरेच्यः । अतिरेच्यमानो हि प्रयोगविध्यभिमतो क्रमकालौ हित्वाऽन्याबाधाद-

येत्। अत एव स्वशाखा - कल्पसूत्र - गृह्योक्त श्राद्धप्रयोगः परशाखाद्युक्तपदार्थप्रवेशेन च बृंहणीय.।

कल्पसूत्र-गृह्याणामध्येतृविशेषसम्बन्धित्वनियमात् लिङ्ग-लिङ्गिनोश्चैकाश्रयत्वात् कर्तृविशेषाश्रितेव कल्पसूत्रेण लिङ्गेन तदाश्रितैव लिङ्गिनी श्रुतिः कल्प्यते।

अतः स्वस्वकल्पसूत्रगृह्योक्तानां श्राद्धकर्मणां व्यवस्थैव।

किञ्च। शाखान्तरगृह्यान्तरादौ विधीयमानस्य पौन-रुक्त्यादि दोषपरिहारस्याशक्यत्वात्, कर्मान्तरत्वे तदन्वितस्य धर्मजातस्यातिदेशमन्तरेण शाखान्तरीयकर्मसम्बन्धानुपपत्तौ स-र्वोपसंहारो निष्प्रमाणकः।

नचोपपदासम्भवेन व्यवस्थानुपपत्तिः। तत्तच्छाखा-गृह्याध्येतृलक्षणस्य तत्तच्छाखीयताभिमानित्वरूपस्य चोपपद-स्य कर्तृविशेषकस्य सम्भवात्।

न च प्रतिविधिवाक्यमुपपदकल्पने गुर्वी कल्पनेति वाच्यम्। सर्वानपि विधीनिदमादिना केनचित् सर्वनाम्ना परामृश्य युग-पदुपपदान्वयस्य कल्प्यमानत्वात्।

सैवम्। परम्परागतस्वशाखापरित्यागेन शाखान्तराध्य-यनकर्तापिहि स्वकुलपरम्परागतशाखागृह्योक्तधर्मानेवानुति-ष्ठति। द्विविवेदाध्यायी च वेदान्तरान्तर्गतं शाखान्तरमधी-यानोऽपि स्वशाखागृह्योक्तानेव धर्मानाचरति। अनधीतवेदोऽपि श्राद्धादिक कर्म कुर्वन् शाखाविशेष-गृह्यविशेषोपदिष्टामेव सर्-

भिमाश्रयत इति न तत्तच्छाखागृह्याध्येतृत्वलक्षणमुपपदं याव-दाचारमनुवर्तते । तत्तच्छाखीयत्वाभिमानोऽपि तच्छाखाध्ये-तृत्वभ्रम एव वाच्यः ।

न चासौ स्वशाखामधीतवतोऽनधीतवतो वा सम्भवति । प्रथमे तच्छाखाध्येतृत्वज्ञानस्य सत्यत्वात् । द्वितीये तादृशस्य ज्ञानस्यैवासम्भवात् अतस्तयोः शाखागृह्याचारविशेषानुसरणं नोपपद्येत । अन्यशाखाध्येतुरपि च वातादिदोषवशोपजातशाखा-न्तराध्येतृत्वभ्रमस्य तच्छाखागृह्यानुसरणं प्रसज्येत । दोषमन्त-रेण समुत्पन्नस्य भ्रमस्यायं नियम इति चेत् । न । कारणमन्त-रेण भ्रमस्यासम्भवात ।

अथाऽऽहार्यारोपरूपभ्रमस्य दोषमन्तरेणापि सम्भव इत्यु-च्यते । तर्हि तस्य सर्वत्र सम्भवादव्यवस्थैव प्राप्नोति । गौणे च शाखान्तरीयत्वव्यपदेश तस्य विद्यमानत्वात् परशाखागृह्यो-क्तविधिग्रहणप्रसङ्गः । अतः कर्तृविशेषणीभूतोपपदासम्भवात् सर्वशाखाकल्पसूत्रगृह्यस्मृत्याचारप्राप्तानां श्राद्धकर्मणां सर्वान् प्रति साधारण्यमेव । न पुनः व्यवस्थेति ।

न चैतदेवम्, शाखाविशेषाध्येतृसन्ततिजत्वानपायात्त-च्छाखीयत्वमस्त्येव । अतः स्वशाखाकल्पसूत्रगृह्योक्तधर्ममात्र-युक्तमेव श्राद्धं कर्तव्यम् । नाधिकस्मार्तपदार्थप्रवेशेन, परशाखा-कल्पसूत्रगृह्योक्तपदार्थप्रवेशेनवाऽतिरेच्यमिति स्थितम् ।

यत्तूक्तम् सर्वशाखोपसंहारे क्रमकालौ विरुध्येते इति । तन्न । प्रयोगविधिर्हि श्रुति-स्मृत्या-चारादिप्रमाणप्रापित सर्व-पदार्थप्रतीक्षां कृत्वा प्रयोगं विधत्ते । न पुनः स्वसन्निधि समा-

म्नातपदार्थमात्रप्राप्तिपरितुष्टः सहसैवेति । अत एव वेदवेत्ता ह्यन्तराप्रविशतः स्मार्तस्याचमनादिपदार्थस्या "पि[1] वा कारणाग्रहणेप्रयुक्तानि प्रतीयेरन्" इत्यत्र प्रयोगविधि परिग्रहो वर्णितः ।

अतः सर्वशाखाकल्पसूत्रगृह्यस्मृतिपुराणेतिहासाचाराव-गतान् पदार्थानुपसंहृत्यप्रयोगोऽनुष्ठेय इति सिद्धम् ।

अत्रार्थे लिङ्गदर्शनम् ब्रह्मपुराणे ।

रामेण भोजिता विप्रा मुन्युक्तेन यथाविधि ।
वैदिकी च कृता सर्वा क्रिया या मानवी स्मृता ॥
पुराणोक्तो विधिश्चैव वैश्वदेविक पूर्वकः ॥

मुन्युक्तेन - मुनिभिः प्रेरितेन । वैदिकी वेदविहितपिण्डपितृयज्ञसम्बन्धिनी 'पिण्डपितृयज्ञवदुपचारः पित्र्यः' इत्यतिदेशेन श्राद्धे प्रापिता । मानवी मनुप्रणीतशास्त्रविहिता । स्मृता अन्यैरपि हारीतगौतमप्रभृतिभिर्धर्मशास्त्रकारैर्वेदार्थस्मृत्योपदिष्टा सर्गप्रतिसर्गादि पञ्चलक्षणवन्ति ब्राह्मादीनि पुराणानि तेषु उक्तः प्रतिपादितः । विधि अनुष्ठानप्रकारः । एवं सर्वशास्त्राण्यप्युपसंहृत्य रामेण श्राद्धं कृतमित्यर्थः ।

यत्पुनरेतद्विरुद्धं बैजवापायनस्य वचनम् ।

बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥ इति ।

---

1. जैमिनीयन्यायमाला अध्यायः १, पाद ३, अधिकरणं ४ ।

तत्तावत् केचिदेवं व्याचक्षते यद् गर्भाधानचौडोपनयनविवाहा-दिकं कर्म गृह्येषु सम्यगुक्तं मन्वादिस्मृतिग्रन्थेषुचासम्यगुक्तं तत्र स्मृत्यपेक्षा न कर्तव्या। यत्तु श्राद्धाष्टकादिकं स्मृतिषु सम्यक् गृह्ये चासम्यगुक्तं तत्र स्मृत्यपेक्षा कर्तव्येति। अतः स्वगृह्यो-क्तस्य स्मृत्यपेक्षा निवार्यते।

तदुक्तं भविष्यत्पुराणे।

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा॥ इति॥

इति सर्वशास्त्रोपसंहारनिर्णयः।

## अथानुसमयस्य निर्णयः।

स चायं द्विविधः पदार्थानुसमयः, काण्डानुसमयश्चेति। द्विविधमपि चेतमाद्रियन्ते याज्ञिकाः कर्मणि। तथाहि। आग्ने-याग्नीषोमीययोः पुरोडाशयोः कपालोपधानाधिश्रयणो-द्वासना-दीनां पदार्थानामेवानुसमयमिच्छन्ति। अश्वप्रतिग्रहेष्टावपि स्व-ल्पसंख्याकेषु पुरोडाशेष्वेवमेव, शतसहस्रादिसंख्याकेषुतु तेषु काण्डानुसमयमङ्गीकुर्वते। तथा पशुगणे उपाकरणादीनां यूप-धर्माणां पदार्थानुसमयमाश्रयन्ते। यूपगणे चाञ्जनादीनां यूप-धर्माणां काण्डानुसमयम्। अतः सन्देहः, क्व पदार्थानुसमयः क्व काण्डानुसमय इति।

तत्र तावदयमुत्सर्गो यत् पदार्थानुसमयेनानुष्ठानम्। अतो ब्राह्मणादिषु प्रत्येकं सन्निपत्योपकारकं पदार्थंजातं तेनैव न्या-

येतान्यमावर्तयेत्, न तु प्रत्येकं पदार्थकाण्डमिति । इत्यनुसमय-निर्णयः ।

अथ भोज्याभोज्यान्नाः, निमन्त्रणप्रकरणे वक्ष्यन्ते । अनि-न्द्येनामन्त्रितो नाऽपक्रामेदिति । तत्रानिन्द्या भोज्यान्नाः । नि-न्द्याः अभोज्यान्नाः । अतस्तद्विवेकः क्रियते । तत्र गौतमः[1] ।

"प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत" ।

यमः । श्रोत्रियाणां सदाश्नीयाद्दोषस्तेषां न विद्यते ।
विकल्पोपहतानां च नाश्नीयान्नैव दापयेत् ॥

परत्र परलोकशास्त्रार्थेषु सदर्थेषु सदसद्विकल्पैर्वितथमव्यवस्थित-चित्तवृत्तयो विकल्पोपहताः ।

वसिष्ठः । श्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
न त्वेवबहुयाज्यस्य यश्चोपनयते बहून् ॥

चौरस्यापीति श्रद्धाप्रशंसार्थम् ।

याज्ञवल्क्यः ।

परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।

परपाकरुचिः - परपाकाभिलाषुकः ।

भोज्यान्नयोरपि ब्राह्मणशूद्रयोः कदाचिदभोज्यान्नतामाहुः यम - शातातप - छागलेयाः ।

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥

---

1. गौतमधर्मः, अध्यायः १७-१ ।

ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणोददत् ।
उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ॥

निमन्त्रितं - निमन्त्रितभोक्तृकं, भुक्त्वा तदन्नमिति शेषः ।
अन्यानप्यभोज्यान्नानाह मनुः ।

नाश्रोत्रियतते यज्ञे ग्रामयाजहुते तथा ।
स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मण क्वचित् ॥

अश्रोत्रियः अनधीयानः, तेन, तते - प्रारब्धे यज्ञे । ऋत्विग्भिर्वाऽश्रोत्रियैस्तते न भुञ्जीत ब्राह्मणः । ग्रामयाजः बहुयाजकः । तेन स्त्री-क्लीबाभ्यां च यत्र हूयते, तत्र यज्ञे, भर्ता दारिद्र्योपहतः स्त्री च औदायिकेन धनेन ज्ञातिबलेन वा दर्पिता सती प्रधानं भवति स स्त्रिया हुत इति मेधातिथिः ।

स्तेन गायनयोश्चान्नं तक्षणोवार्द्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥

गायनः अत्र गीतोपजीवी । अन्यस्य तूपरान्तकादिगानं विहितमेव । तक्षा वर्द्धकि । दीक्षितः दीक्षणीयेष्ट्यादि जनितदीक्षाख्यसंस्कारवान् । दीक्षाख्यसंस्कारवत्ताऽवावभृथेष्टेः प्रागेव । अवभृथेष्ट्या तत्संस्कारापगमात् ।

आपस्तम्बः । द्विषन् द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांस्यमानस्य मीमांसितस्य वा तथा पाप्मानं हि तस्य भक्षयतीति विज्ञायते ।

मनु-वसिष्ठौ ।

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणी ।
गुरौ शिष्याश्च याज्याश्च स्तेनो राजनि किल्बिषम् ॥

हारीतः। राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
गणान्नं गणिकान्नं च लोकादपि निकृन्तति ॥

य इच्छेच्छुद्धमात्मानं इष्टान् लोकांश्च वेदितुम् ।
गणान्नं गणिकान्नं च दूरतः परिवर्जयेत् ॥

शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वं चोपगच्छति ॥

अङ्गिराः ।

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम् ।
स च जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते ॥

शूद्रस्य न कदाचनेत्यादिभिः सकृदपि शूद्रान्नस्या भोज्यत्वे सिद्धे षाण्मासवचनं दोषाधिक्य प्रतिपादनार्थम् ।

इति भोज्यान्ननिरूपणम् ।

अथ द्रव्यशुद्ध्युपायः ।

तत्राशुद्धिर्नाम द्रव्यादेः स्पर्शनाद्यनर्हतापादको दोषविशेषः। शुद्धि-मत एव च सकलकर्मोपयोगित्वम् ।

तदुक्तं ब्रह्माण्डपुराणे ।

श्रौतं स्मार्तं तथा कर्म कर्तव्यमधिकारिणा ।
शुचिना साधनैः शुद्धैः सम्यक् श्रद्धान्वितेन च ।

अतो यथाशास्त्रं शुचिना शुचिभिरेव द्रव्यैः प्रचरणीयम् ।

इति शुद्ध्यशुद्ध्योः शास्त्रीयत्वनिरूपणम् ।

## अथाध्यात्म शुद्ध्युपायाः ।

**अथातः शौचाधिष्ठानं बोधायनः ।**

अद्भिः शुद्धयन्ति गात्राणि बुद्धिर्ज्ञानेन शुद्धयति ॥
अहिंसया च भूतात्मा मन. सत्येन शुद्ध्यति ॥

मनः शुद्धिरन्तः शौचम् ।

**बहिर्व्याख्यास्याम पुनर्बोधायनः ।**

श्रूयते द्विविध शौच यच्छिष्टै. पर्युपासितम् ।
बाह्य निर्लेपनिगन्धमन्त. शौचमहिंसनम् ॥

**यमः ।** सत्य शौच तप. शौच शौचमिन्द्रियसयमः ।
सर्वभूतदयाशौच शौचमद्भिस्तु पञ्चमम् ॥

**तथा ।** गात्राण्यद्भिर्विशुद्ध्यन्ति मनः सत्येन वाग्धिया ।
भूतात्मा तपसा बुद्धिर्ज्ञानेन क्षमया बुधः ॥

**मनुः ।** अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥

शुना चैव श्वपाकेन मृतनिर्हारकेण वा ।
स्पृष्टमात्रस्तु कुर्वीत सचेलं प्लावनं जले ॥

**…ातूकर्ण्यः ।**

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गं स्पृश्यते खगः ।
स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुध्यति ॥

**[illegible] ।** स्वभार्या-शिशु-वस्त्रं-स्व मुपवीतं कमण्डलुः ।
आत्मनः कथितं शुद्धं न तु शुद्धं परस्य तु ॥

मनु-वसिष्ठ-बौधायनाः ।

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयत् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

अथ भू शुद्ध्युपायाः ।

यमः । खननात् पूरणाद्दाहाल्लेपनादभिघर्षणात् ।
गोभिराक्रमणात् कालाद्भूमिः शुध्यति सप्तभिः ॥

देवलः । पञ्चधा वा चतुर्धा वा भूरमेध्याविशुध्यति ।
दुष्टा द्विधा त्रिधा वापि शोध्यते मलिनैकधा ॥
दहनं खननं भूमेरुपलेपन- वापनै ।
पर्जन्यमार्जनं चेति शौचं पञ्चविधं स्मृतम् ॥

पराशरः । रथ्या-कर्दम-तोयानि नावः पन्थास्तृणानि च ।
स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टक चितानि च ॥
वापी-कूप-तटाकेषु उद्यानोपवनेषु च ।
त्रिः सप्तमार्जनं कृत्वा एवं शौचं विधीयते ॥

याज्ञवल्क्य-विष्णू ।

रथ्या कर्दम-तोयानि स्पृष्टान्यन्त्य-श्व-वायसैः ।
मारुतार्केण शुध्यन्ति पक्वेष्टक चितानि च ॥

इति भूशुद्ध्युपायाः ।

अथ पक्वान्न शुद्ध्युपायाः ।

पैठीनसिः ।

केश-कीट-नखाद्युतमन्नं हिरण्येनभस्मना स्पृष्टं प्रोक्षितं च ।
उपभुञ्जीतेति शेषः ।

मनु विष्णू ।

पक्षिजग्धं गवाघ्रातमव[1]धूतमवक्षुतम् ।

दूषितं केश - कीटैश्च मृत्प्रक्षेपेण शुध्यति ॥

शातातपः ।

गोकुले कन्दुशालायां तैलचक्रेक्षुयन्त्रयोः ।

अमीमांस्यानि शौचानि स्त्रीषु बालान्तरेषु च ॥

हारीतः । कन्दुपक्वानि तैलानि पायसं दधि सक्तवः ।

एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

इयन्तु यथोक्ता शुद्धिरन्नान्तरसम्पादनाशक्तिरूपायामापद्येव कर्तव्या । अनापदि दुष्टमन्नं परित्यज्यान्नान्तरमेव सम्पादनीयम् ।

इति पक्वान्नशुध्युपायाः ।

अथाशुध्यपवादाः ।

आपः शुद्धाः भूमिगताः शुचिर्नारी पतिव्रता ।

शुचिर्धर्मपरो राजा सन्तुष्टो ब्राह्मणः शुचिः ॥

बोधायनः ।

नाभेरधःस्पर्शनं कर्मयुक्तो वर्जयेत् ।

'ऊर्ध्वं वै पुरुषस्य नाभेर्मध्यमवाचीनममेध्यमि'ति श्रुतिः ॥

शातातपः ।

ग्रामे तु यत्र संस्पृष्टं यात्रायां कलहादिषु ।

ग्रामसन्दूषणे चैव स्पृष्टिदोषो न विद्यते ॥

---

1. वस्त्रेण अवधूतं, उपरि कृतमुतं । अध्याय-५ श्लो १२५ ।

ग्रामे - राजमार्गादौ ।

देवयात्रा - विवाहेषु यज्ञेषु प्रकृतेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न दुष्यति ॥

बृहस्पतिरपि ।

तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ।
नगर - ग्रामदाहे श स्पृष्टास्पृष्टिर्न दुष्यति

एतच्च वाक्यत्रयं यत्राहमनेन स्पृष्ट इति ज्ञानं नास्ति तद्विषयं मिति केचित् । उच्छिष्टाशुचि - संस्पृष्टविषयमित्यन्ये ।

इत्यशुध्यपवादः ।

अथ स्नानमुच्यते ।

आह विष्णुः ।

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥

अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अप्मात्रेणाभिषिक्तस्य नश्यन्त इति धारणा ॥

याम्यं हि यातवादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो नराः ॥

उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥

अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ॥

गुणा दशस्नानपरस्य साध्या
रूपञ्च तेजश्च बलञ्च शौचम् ।
आयुष्यमारोग्यमलोलुपत्वं
दुःस्वप्नघातश्च तपश्च मेधा ॥

इति स्नानप्रकरणम् ।

अथ स्नानभेदाः ।

तत्राह दक्षः ।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तेषां मध्ये तु यन्नित्यं तत् पुनर्भिद्यते त्रिधा ॥

वृद्धः । स्नानं तु द्विविधं प्रोक्तं गौण-मुख्यप्रभेदतः ।
तयोस्तु वारुणं मुख्य तत् पुन षड्विधं भवेत् ॥

नित्यं नैमित्तिकं काम्य क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्यते ॥

एतेषां क्रमेण लक्षणान्याह स एव ।

अस्नातस्तु पुमान्नार्हो जपाग्निहवनादिषु ।
चण्डाल-शव-पूयादि स्पृष्ट्वाऽस्थीनि रजस्वलाम् ।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥

पुण्यस्नानादिकं यत्तु दैवज्ञ विधिचोदितम् ।
स्नानं समाचरेद्यत्तु क्रियाङ्गं तत्प्रकीर्तितम् ॥

मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणार्था तु प्रवृत्तिस्तस्य नान्यथा ॥

सरस्सु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया ॥

स्नानमेव तत्र, क्रिया कार्या, मता विहितेत्यर्थः ।

यथोक्तस्नानासमर्थं प्रत्यन्यान्यपि स्नानान्याह योग याज्ञवल्क्यः ।

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥

मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ।

एतेषां लक्षणमाह स एव ।

आपोहिष्ठादिभिर्मन्त्रं मृदालम्भश्च पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥

यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणं चावगाहन्तु मानसं विष्णु चिन्तनम् ॥

इति स्नानभेदाः ।

## अथ स्नानकर्त्तुः प्रतिषेधः ।

गौतमः । न कदाचिद्रात्रौ नग्नः स्नायात् ।

बौधायनः । नग्नः स्नायान्न नक्तं स्नायात् ।

हारीतः । न नग्नो जलं पेयात् ।

पद्मपुराणे ।

उद्धृतं तु शुभं तोयमपर्युषितमेव हि ।
भागीरथ्यास्तु यत्तोयं न तत्पर्युषितं भवेत् ॥

आदित्यपुराणे ।

> चिरं पर्युषितं वापि शूद्रस्पृष्टमथापि वा ।
> आहृत्याः स्नानदानादौ पुनात्येव सदा पयः ॥

अत्र प्रातःस्नानम् । तत्राह दक्षः ।

> दिवसस्याद्य भागे तु कृत्यं तस्योपदिश्यते ।
> उषःकाले तु सम्प्राप्ते शौचं कुर्याद्यथार्थवत् ॥
> ततःस्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥

गोभिलः ।

> कुर्यादहरहः स्नानमुषस्यनुदिते रवौ ।
> नित्यमब्लिङ्गकैर्मन्त्रैस्तर्पयेच्च तथा पितॄन् ॥

दक्षः । प्रातर्मध्याह्नयोः स्नानं वानप्रस्थ-गृहस्थयोः ।
> यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥

वामनपुराणे ।

> स्रोतसोऽभिमुखोमज्जेद्यत्रापः प्रवहन्ति वै ।
> स्थावरेषु च तोयेषु ह्यादित्याभिमुखः सदा ॥ इति ।

भृगुः । आपः पाणौ समादाय त्रिःपठेद्द्रुपदामृचम् ।
> तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते ॥

व्यासः । अन्तर्जले त्रिरावर्त्य सावित्रीं प्रयतस्तथा ।
> मुच्यते पातकैः सर्वैर्यदि न ब्रह्महा भवेत् ॥

योगयाज्ञवल्क्यः ।

> यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत् ।
> तावन्न पीडयेद्वस्त्रं येन स्नातो, व चोदके ॥

येव वस्त्रेण स्नातस्तन्न पीडयेत् । उदके न पीडयेत् ।

निष्पीडयति यः पूर्वं स्नानवस्त्रन्तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवैः सहर्षिभिः ॥

पराशरः ।

निराशा. पितरो यान्ति वस्त्रनिष्पीडने कृते ।
तस्मान्नपीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥

अत्र मन्त्रमाह कार्ष्णाजिनिः ।

ये के चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडननोदकम् ॥

वस्त्रनिष्पीडनानन्तरमाचमनं कर्तव्यमित्याह स एव

स्नानवस्त्रं ततः पीड्य पुनराचमनं चरेत् । इति ।

अत्र विशेषमाह देवलः ।

स्वयं धौतेन कर्तव्याः क्रिया धर्म्या विपश्चिता ।
न तु नेजकधौतेन नाहतेन च कर्हिचित् ॥

अहतेन अधौतेन । तस्याप्यहतशब्दप्रयोयात् ।

यथोक्तं सत्यतपसा ।

अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वम्भुवा ।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा ॥

माङ्गलिक्यं - विवाहादि ।

मार्कण्डेयपुराणे ।

अन्यदेव भवेद्वासः शयनीये नराधिप ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥
अन्यच्च लोकयात्रायामन्यदीश्वरदर्शने ॥

योगयाज्ञवल्क्यः ।

स्नानं दानं जपं होमं स्वाध्यायं पितृतर्पणम् ।
नैकवस्त्रो द्विजः कुर्याच्छ्राद्धभोजनसत्क्रियाः ॥

गोभिलः ।

एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम् ।
न चार्चयेद्द्विजान्नान्यं कुर्यादेवं विधो नरः ॥

एकवस्त्रस्य लक्षणमाह स एव ।

सव्यादंसात्परिभ्रष्टकटिदेशधृताम्बरम् ।
एक वस्त्रन्तु त विद्यात् दैवे पित्र्ये च वर्जयेत् ॥

सव्यात् स्कन्धात् परिलुप्त कटिदेशधृतम् अम्बरं यस्य सः तथोक्तः तम् । एवं द्वितीयवासो विहीनस्यापि वेदितव्यम् ।

अत्र वर्ज्यान्याह भृगुः ।

न रक्तमुल्बणं वासो न नीलं च प्रशस्यते ।
दशाहीनं मलाक्तं च वर्जयेत् कुत्सितं बुधः ॥

यदाह गौतमः[1] ।

"सतिविभवे न जीर्णमलवद्वासाः स्यादिति" ।

विश्वामित्रोऽपि ।

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयं च वस्त्राभावे तदिष्यते ॥

इति परिधेयापरिधेयवस्त्राणि ।

1. गौ·ध-अध्या-९, सू ३ ।

अथ तर्पणम् । तत्र कालदेशौ तावत् ।

व्यासः । तर्पणं द्विविधं प्राहुर्मुनयः शंसितव्रताः ।
एकं जले स्थितः कुर्यादपरस्तु स्थले स्थितः ॥

मरीचिः । स्नानाङ्गमेव कुर्वीत तर्पणं सलिलस्थितः ।
स्नानाङ्गादितरत् कुर्यान्मध्याह्ने स्थल एव तु ॥

यत्तु योगयाज्ञवल्क्येन ।

जपेद्वेदादिमेकाग्रस्तटे बद्धाञ्जलिः शनैः ।
ब्रह्मयज्ञप्रसिद्ध्यर्थं ब्रह्मविद्यामथापि वा ।
जप्त्वा वा प्रणवं शक्त्या ततस्तर्पणमाचरेत् ॥ इति ।

ब्रह्मयज्ञानन्तर्यमुक्तं । तत्प्रातराहुतेरनन्तरं ब्रह्मयज्ञाकरणविषयम् । तत्रापि तस्य विधानात् । तथा च बृहस्पतिः ।

स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यदा त्वनिमित्ततः ॥ इति ।

अत्र विशेषमाह हारीतः ।

वसित्वा वसनं शुक्लं स्थले विस्तीर्णबर्हिषि ।
विधिज्ञः तर्पणं कुर्यान्न पात्रे तु कदाचन ॥

पात्रञ्चात्र पितामहेनोक्तम् ।

हेम-रूप्यमयं कार्यं ताम्र-कांस्यसमुद्भवम् ।
पितॄणां तर्पणं पात्रं मृन्मयन्तु परित्यजेत् ॥ इति ।

## अथ तर्पणसाधनानि ।

**योगयाज्ञवल्क्यः ।**

अनामिकाधृतं हेम तर्जन्यां रूप्यमेव च ।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः ॥

**याज्ञवल्क्योऽपि ।**

तिलानामप्यलाभे तु सुवर्ण-रजतान्वितम् ।
तदभावे निषिञ्चेत् दर्भैर्मन्त्रेण वा पुनः ॥

अनेन मन्त्रस्यावश्यकत्वं भवति ।

**छागलेयः ।**

लघुपात्रं करे कृत्वा सौवर्णं खड्गमेव च ।
राजतं ताम्रजं वापि तेन सन्तर्पयेत् पितॄन् ॥

**एवं च यदुक्तं गोभिलेन ।**

रोमसंस्थान् तिलान् कृत्वा यस्तु तर्पयते पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन च ॥

तत् स्थलतर्पणविषयमित्यवगन्तव्यम् । यदा तु स्थलस्थोऽप्युद्धृतेन चोदकेन तर्पणं कुर्यात् तदा वामहस्तस्यालोमके प्रदेशे शाट्यां वा तिलान्निधाय तर्पणं कार्यम् ।

अधिकारिविशेषेण तिलतर्पणप्रतिषेधमाह कौटिल्यः ।

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात् तिलैस्तर्पणमेव च ॥

इति तर्पणसाधनानि ।

अथाञ्जलिसंख्या ।

बोधायनः ।

जलाञ्जलित्रयं देयं ये चान्ये संस्कृता भुवि ।
असंस्कृतप्रमीतानामेकमेवावटे क्षिपेत् ॥

अथ हस्त-तीर्थो-पवीत जानु-दिङ्नियमाः ।

तत्र यमः ।

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमद्धृत्य जलमध्ये जलं क्षिपेत ॥

मत्स्यपुराणे ।

उभयोर्हस्तयो कृत्वा सलिलै. पूर्णमञ्जलिम् ।
देवानां च पितॄणां च शुचिस्तर्पणमाचरेत ।

तीर्थलक्षणमुक्तं योगयाज्ञवल्क्येन ।

पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यं च सौमिकम् ॥
अङ्गुष्ठमूले ब्राह्मन्तु दैवं ह्यङ्गुलि मूर्द्धनि ।
प्राजापत्यन्तु मूलेषु मध्ये सौम्य प्रतिष्ठितम् ॥
अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्तितम् ।
एव ज्ञात्वा न मुह्यन्ति सर्वकर्मसु वै द्विजाः ॥

हारीतेन तु । मध्ये आग्नेयमुक्तम् ।

पराशर-शातातपौ ।

ब्राह्मणं स्नातुमायान्तमनुगच्छन्ति देवताः ।
पितरश्च महाभागा वायुभूता जलार्थिनः ॥
अप्रदत्ते जले शप्त्वा निराशाः प्रतियन्ति ते ।

कूर्मपुराणे ।

एवं यः सर्वभूतानि तर्पयेदन्वहं द्विजः ।
स गच्छेत् परमं स्थानं तेजोमूर्तिरनामयः ॥ इति ।

अथ यम-भीष्मतर्पणे ।

तत्र स्कन्दपुराणे ।

कृष्णपक्षे चतुर्दश्यामङ्गारकदिने यदा ।
तदा स्नात्वा शुभे तोये तर्पयेद्यमनामभिः ॥

अत्र ॐ यमाय नम इत्येव प्रयोगः ।

अत्र विशेषमाह वृद्धमनुः ।

पितृत्वादपसव्येन दक्षिणाभिमुखस्तिलैः ।
देवत्वाद्देवतीर्थेन यमं सन्तर्पयेद्बुधः ॥

एवं कुर्वतः फलमाह मनुः ।

इह जन्मकृतं पापमन्यजन्मकृतं च यत् ।
अङ्गारकचतुर्दश्यां तर्पयन् तद्व्यपोहति ।

तथा माघशुक्लाष्टम्यां भीष्मतर्पणं स्मरन्ति महाभारते ।

शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

अत्रायं मन्त्रः ।

वैयाघ्रपदगोत्राय साङ्कृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम् ॥
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥ इति ।

अथाऽचमनमुच्यते ।

तत्र कर्मणामाचमनपूर्वकत्वमाह मार्कण्डेयः ।

सम्यगाचम्य तोयेन क्रियाः कुर्वीत वै शुचिः ।
देवतानामृषीणां च पितॄणां चैव यत्नतः ॥

अकृताचमनस्य क्रियाकरणे दोष उक्तो ब्रह्मपुराणे ।

यः क्रियां कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः ॥

मन्व-ङ्गिरो-बृहस्पतयः ।

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च ।
पीत्वापोऽध्येष्यमाणश्चाप्याचामेत् प्रयतोऽपि सन् ॥

यमः । कृत्वा मूत्रं पुरीषं च स्नात्वा भोक्तुमनास्तथा ।
रथ्यामाक्रम्य चाचामेत् वासो विपरिधाय च ॥

यदुक्तं यमपुराणे ।

चण्डालादीन् जपे होमे दृष्ट्वाऽऽचामेद्द्विजोत्तमः ।
श्वादीन् दृष्ट्वा तथैवापि कर्णं वा दक्षिणं स्पृशेत् ॥

अथ कार्यवादं पराशरेण ।

प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥

आदित्यो वरुणः सोमो वह्निर्वायुस्तथैव च ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥ इति ।

मनुनोक्तम् ।

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥ इति ।

इत्याचमन निमित्तानि ।

## अथ द्विराचमन निमित्तानि ।

तत्र याज्ञवल्क्यः ।

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे ।
आचान्तः पुनराचामेत वासो विपरिधाय च ॥

शङ्खलिखितौ । स्नान-भोजन-कालेष्वाचान्तः पुनराचामेत् ।

आपस्तम्ब । भोक्ष्यमाणस्तु प्रयतो द्विराचामेत् द्विःपरिमृज्यात् सकृदुपस्पृशेत् ।

व्यासः । प्रक्षाल्य पाणि-पादौ तु भुञ्जानो द्विरुपस्पृशेत् ।

कूर्मपुराणे । प्रक्षाल्य ... .... .... स्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥

व्यासः । दाने भोजनकाले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेत् जप-होमा-र्चनादिषु ॥

इति द्विराचमन निमित्तानि ।

## अथ श्राद्धाचमनानि ।

तदेतदाचमनसप्तकं समासेनाह सङ्ग्रहकारः ।

आदौ विप्राङ्घ्रि शौचान्तेऽभ्यर्चने विकिरे कृते ।
पिण्डान्दत्वार्चयित्वा च विसृज्य ब्राह्मणांस्तथा ॥

आचामेत् श्राद्धकर्ता तु स्थानेष्वेतेषु सप्तसु ।
आद्यन्तयोर्द्विराचामेच्छेषेषु तु सकृत्सकृत् ॥

इति श्राद्धाचमनानि । अथ आचमने निषेधः ।

गौतमः[1] । नाञ्जलिना पिबेन्न तिष्ठन्नुद्धृतोदकेनाचामेत् । न पशुवत् मुखेन पिबेदित्यर्थः ।

व्यासः । शिरः प्रावृत्य कण्ठं वा मुक्तकच्छ शिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

अपः पाणि-नखाग्रेषु आचामेद्यस्तु ब्राह्मणः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

विष्णुः । न गच्छन्न शयानश्च न स्थितः प्रह्व एव च ।
न स्पृशन्न हसन् जल्पन्न श्व-चण्डालदर्शने ॥

स्थितः - ऊर्ध्वीभूतः । न स्पृशन्-अन्यमिति शेषः ।

गोभिलः । नान्तरीयैकदेशस्य कृत्वा चैवोत्तरीयताम् ।

विष्णुः । जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।
अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुध्यति ॥

जान्वोरधस्तादाचमननिषेधात् जानुमात्रेऽप्यविरुद्धमाचमनमिति ज्ञायते । इत्याचमननिषेधः ।

---

1. यत्किञ्चित्क्षीरोदकादि पेयमञ्जलिना न पिबेत् । सम्युक्तौ हस्तौ अञ्जलिः । उद्धृतोदकेन तिष्ठन् नाचामेत् । आसीन एवाऽऽचामेत् । उद्धृतोदकेनेति वचनात् तटाकादिषु तीरप्रदेशस्याशुचित्वे जानुदघ्ने जले तिष्ठताऽपि आचमनमप्रतिषिद्धम् । आचारोप्येवमेव शिष्टानाम् ॥

(मिताक्षरा-प्रश्न-१, अध्या-९, सू. १०-११)

अथाचमनोदकानि ।

तत्र मनुः ।

अनुष्णाभिरफेनाभिरदुष्टाभिश्च धर्मतः ।
शौचेप्सुः सर्वदाऽऽचामेदासीनः प्रागुदङ्मुखः ॥

यत्र पूर्वोक्तलक्षणा आपो न लभ्यन्ते तत्र कथमित्यपेक्षिते देवलः ।

येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका ॥

येषु स्थानेषु यच्छौच धर्माचारश्च यादृशः ।
तत्र तान्नावमन्येत धर्मस्तत्रैव तादृशः ॥

इति आचमनोदकानि ।

अथाचमनोदक परिमाणम् ।

तत्र मनुः ।

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ॥

तथा च याज्ञवल्क्यः ।

अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥

इत्याचमने दिङ्नियमः ।

विष्णुः । ब्राह्मं तीर्थेन त्रिः पीत्वा द्विः परिमृज्यात् ।

पैठीनसिः । अङ्गुष्ठमूलस्योत्तरतो रेखा ब्राह्मं तीर्थं तेन त्रिराचामेत् ।

अथाचमने गण्डूषनियमाः ।

याज्ञवल्क्यः ।

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ।

खानि - इन्द्रियच्छिद्राणि । अद्भिः हस्तगृहीताभिः ।

मनुः । त्रिःप्राशयेदपः पूर्वं द्विरुन्मृज्यात्ततो मुखम् ।

खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ॥

अथ द्वादशाङ्गस्पर्शनम् ।

तत्र संवर्तः ।

परिमृज्य द्विरास्यन्तु द्वादशाङ्गानिचालभेत् ।

मुखं, नासिकाद्वयं, नेत्रद्वयं, श्रोत्रद्वयं, नाभिः, हृदयं, मूर्धा, बाहुद्वयं चेति द्वादशाङ्गानि । परिमार्जनंच त्रिःप्राशनानन्तरं कार्यम् । तथाच शङ्खलिखितौ । त्रिः प्राश्यद्विरुन्मृज्य शिरश्चक्षुः श्रोत्रं घ्राणं हृदयं मूर्धानं चालभेत् ।

तत्र श्लोकः ।

नासिकां चक्षुषी श्रोत्रे मुखं नाभिं ततः शिरः ।

स्पृष्ट्वा प्राणान् यथासंख्यं पादौ प्रोक्ष्य ततः शुचिः ॥

इति द्वादशाङ्गस्पर्शनम् । इत्याचमनप्रकरणम् ।

अथ नियमाः ।

आह कात्यायनः ।

अनिन्दितेनामन्त्रितो नापक्रामेत् ।

अनिन्दितेन - भोज्यान्नेन । निमन्त्रितः - निमन्त्र्यमाणः । नापक्रामेत् - निमन्त्रणं न प्रतिक्षिपेत् । किन्तु तदभ्युपगच्छेदेव ।

अत एव ।

आमन्त्रितस्तु विधिवत् ब्राह्मणो हव्य कव्ययोः ।
कथञ्चिदप्यतिक्रामन् पापः सूकरतां व्रजेत् ।

ब्राह्मणश्च मुखं कृत्वा देवताः पितृभिः सह ।
यदन्नं समुपाश्नन्ति तस्मात्स न व्यतिक्रमेत् ॥

यमः । आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चाण्डालेष्वभि जायते ॥

मत्स्यपुराणे ।

आमन्त्रितास्तु गुणिना निर्धनेनापि च द्विजाः ।
नान्यमिष्टान्नलाभेन तमतिक्रमयन्ति हि ॥

यदुक्तं मनुनैव ।

निमन्त्रितांस्तु पितर उपतिष्ठन्ति तान् द्विजान् ।
वायुवच्चानुगच्छन्ति तथासीनानुपासते ॥

यस्मात् निमन्त्रितान् ब्राह्मणान् दिव्येन रूपेण पितरः उपतिष्ठन्ति - तच्छरीरमाविशन्ति । यथा भूतग्रहाः स्वगृहीतं वायुवदनुगच्छन्ति, यथा वायु प्राण पुरुषे गच्छत्यनुगच्छति निर्गच्छन्तं प्राणो जहाति । एवं पितरो वायुभूताः ब्राह्मणानुपासते । गच्छत्स्वनुगच्छन्ति । उपविष्टेषूपविशन्ति । निमन्त्रिताः पितृरूपापन्ना भवन्तीत्यर्थः । अतो निमन्त्रितैस्तच्छीलैः भवितव्यम् ।

यमः । पुनर्भोजनमध्वान भाराध्ययनमैथुनम् ।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभुग्वर्जयेत् सदा ।

होमं स्वयं न कुर्यात् - अन्येन तु कारयेत् ।

होतुरन्यस्यालाभे भविष्यत्पुराणे उक्तम् ।

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि ॥

इति निमन्त्रित नियमाः ।

अथ श्राद्धकर्तुर्नियमाः ।

जाबालः ।

ताम्बूलं दन्तकाष्ठञ्च स्नेहस्नानमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकर्ता तु वर्जयेत ॥

श्राद्धं प्रकृत्य हारीतः ।

त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरम् ।

विष्णुः । कोपं परिहारयेन्नाश्रु पातयेन्न त्वरां कुर्यात् ।

दोषान्तरमाह नारायणः ।

केतनं कारयित्वा तु निवारयति दुर्मतिः ।
ब्रह्मवध्यामवाप्नोति शूद्रयोनौ च जायते ॥

यमः । आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् ।
अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ॥
अथोभयनियमाः ।

तत्र श्राद्धभोक्तु नियमाः ।

अभ्युष्णं सर्वमन्नं स्यादित्यादिविधेरर्थवादमाह मनुः ।

यावदन्नं भवत्युष्णं यावदश्नन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥

वायुपुराणेऽपि ।

यावन्न स्तूयते चान्नं यावदौष्ण्यं न मुञ्चति ।
तावदश्नन्ति पितरो यावदश्नन्ति वाग्यताः ॥

श्राद्धसमाप्तौ तु हविर्गुणप्रशंसा कर्तव्येत्याह वसिष्ठः ।

श्राद्धावसाने कर्तव्याद्द्विजैरन्नगुणस्तुतिः ॥ इति ।

अपेक्षितं चावश्यं याचनीयमेवेत्याह वृद्धशातातपः ।

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ।
न याचते द्विजो मूढः स भवेत्पितृघातुकः ॥

बह्वृच परिशिष्टे ।

यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।
एको भावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

पाणितले, दत्तमग्नौकरणान्नम् । उपकल्पितं द्विजभाजनेषु पितृ-द्देशेनोत्सृष्टम् । एतद्द्वयमपि मिश्रयित्वा भोक्तव्यम् ।

प्रमादादितरेतरस्पर्शे तु यत् कर्तव्यं तदाह शङ्खः ।

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टजपं जपेत् ॥

तदाहोशना ।

भोजनन्तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दध्नःक्षीराद्वा·क्षौद्रात्सक्तुभ्य एव च ॥

इति श्राद्धभोक्तृनियमाः ।

## अथ भोजयितृनियमाः ।

तत्राह मनुः ।

> हर्षयेत् ब्राह्मणांस्तुष्टो भोजयेच्चाशनैः शनैः ।
> अन्नाद्येनासकृच्चैनान् गुणैश्च परिचोदयेत् ॥

तुष्ट इति, सत्यपि निमित्ते न स्वदुःखं दीर्घश्वासोच्छ्वासादिना केनचित् प्रकारेण प्रकटयेत् । अपितु हृष्टवत्स्यात् । ब्राह्मणान् हर्षयेत् । गीतादिना परप्रयुक्तेन । अविरुद्धेन स्वयं प्रयुक्तेन वा । प्रसङ्गागतेन परिहासेन वा । तेन चिरकालं स्वाध्याये पठ्यमान यदि कश्चिदुद्विजेत् ततो वीरस्याख्यानैः गीतादिभिर्वा रञ्जयेत् ।

शनैर्भोजयेत् - कतिचित् ग्रासान् गृहीत्वा तत् स्वाद्वेतत्सम्पन्नव्यञ्जनमित्येवमादिभिः प्रियवचनैरसंरम्भेण वदन् भोजयेत् । अन्नाद्येन पायसादिना, गुणैः व्यञ्जनैः । असकृत् - पुनः, पुनः । परिचोदयेत् साध्व्य इमाः शष्कुल्यः सरसेयं क्षीरिणीति पात्रस्थमेवमादि हस्तेन गृहीतं कृत्वा, पुरः स्थितः, पुनः पुनर्ब्रूयादित्येषा परिचोदना ।

तथा । यद्यद्रोचेत विप्रेभ्य स्तत्तद्द्यादमत्सरः ।

> ब्रह्मोद्याश्च कथाः कुर्यात् पितृणामेतदीप्सितम् ॥

ब्राह्मणैरूद्यन्ते कथ्यन्ते यास्ताः ब्रह्मोद्याः । देवासुरयुद्धं, वृत्रवधः सरमादूतमित्याद्याः । अथवा कश्चिदेकाकी चरतीत्याद्याः । ब्रह्माद्या इति वा पाठ. । ब्रह्मप्रधाना वा मन्त्रार्थवादनिरूपणाद्याः, कथाः संलापान् लौकिकैः शब्दैः कुर्यात् । पितृणा-

येतदीप्सितमित्यर्थवादः । अपेक्षिताप्रदाने दोषमाह वृद्धशाता-तपः ।

अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितम् ।
कृपणो मन्दबुद्धिश्च न स श्राद्धफलं लभेत् ॥

न केवलं श्राद्धफलालाभ, अपि तु कष्टतरजन्मप्राप्तिरपि ।
तथा च निगमः ।

अपेक्षितं यो न दद्याच्छ्राद्धर्थमुपकल्पितम् ।
अध.कृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ॥

तांश्च हविर्गुण-दोषौ न पृच्छेदित्याह शङ्खः ।

श्राद्धे नियुक्तान् भुञ्जानान् न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
दातुः पतति बाहुर्वै जिह्वा भोक्तुस्तु भिद्यते ॥

लवणादिषु न्यूनाधिक्याभावेन हविषः साद्गुण्यं पुनरपि प्रदा-वार्थं न पृच्छेत् । न च पृष्ट्वा सम्यक्तेन ज्ञातं दद्यात् । दातुः पतति बाहुरिति दोषस्मरणात् । जिह्वा भोक्तुस्तु भिद्यत इति निन्दाबलाद्धविषः, साद्गुण्यं सङ्केतेनापि भोक्ता न सूचयेदिति निषेधविधिर्गम्यते ।

यमः । विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
अश्रद्धया हुतं जप्तं तद्वै रक्षांसि गच्छति ॥

देवलः । नाश्रु वा पातयेच्छ्राद्धे न जल्पेन्न हसेन्मिथः ।
न विभ्रमेन्न सङ्क्रुद्ध्येन्नोद्विजेच्चात्र कर्हिचित् ॥
प्राप्ते हि कारणे श्राद्धे नैव क्रोधं समुच्चरेत् ॥

मनुः । यद्यद्ददाति विधिवत्सम्यक् श्रद्धासमन्वितः ।
तत्तत्पितॄणां भवति परत्रानन्तमक्षयम् ॥

आपस्तम्बः ।

प्रयतः प्रसन्नमनाः तुष्टो भोजयेत् ब्राह्मणान् ।

इति भोजयितृ नियमाः ।

अथ गन्धादिदान सम्प्रदाननिर्णयः ।

तत्रायं संशयः । किं गन्ध-पुष्प-धूप-दीपा-च्छादनादीनि ब्राह्मणेभ्योदेयानि उत पितृभ्यः इति । तत्र तावत् वचनार्थ-दर्शनन्यायोपलब्धेः ब्राह्मणेभ्यो देयानीति महार्णवप्रकाशकारो मन्यते ।

वचनं तावदाह मरीचिः । "गन्धान् ब्राह्मणसात्कृत्वेति ।"

अत्र सातिप्रत्ययश्रवणात् गन्धादीनां ब्राह्मणस्वामिकत्वं कर्तव्यमित्येतस्यार्थस्य विधानमुपलक्ष्यते । "तदधीनवचने" इत्येतस्मिन् हि सूत्रे सातिप्रत्ययस्य तत्स्वामिकद्रव्यवचनत्वेनानुशासनात् । ब्राह्मणस्वामिकत्वं च तेभ्य एव दीयमानेषूपपद्यते, नान्यथा ।

ब्रह्मपुराणवचनम् । अयं वो धूप इत्युक्त्वा तदग्रे च दहेत्तत इति ।

अत्र तच्छब्दस्य सर्वनामत्वेन प्रकृतवचनत्वादयं व इत्यत्र ये वः शब्देनोक्तास्त एव तदग्र इत्यत्र तच्छब्देनोच्यन्ते । ते च पितरो यदि विवक्षितास्तर्हि तेषाममूर्तत्वादग्रपदार्थविशेषणत्वं नोपपद्यते ।

अतस्तच्छब्दस्य मूर्तिमद्ब्राह्मणवचनत्वे तत्परामर्शनीयस्य वः शब्दार्थस्य ब्राह्मणरूपत्वे ब्राह्मणेभ्यो धूपदानं सिद्ध्यति । उपलक्षणं चैतत् गन्धादीनामर्चनद्रव्याणाम् ।

दशरथस्य लोकान्तरगमनानन्तरं रामायणे ।

समतीते दशाहे तु कृतशौचो विधानतः ।
चक्रे द्वादशिकं श्राद्धं त्रयोदशकमेव च ॥

ततश्चोद्दिश्य पितरं ब्राह्मणेभ्यो ददौ धनम् ।
महार्हाणि च रत्नानि गोऽश्ववाहनमेव च ॥

भरत इति शेषः । विष्णुपुराणे च पितृवाक्यम् ।

रत्न-वस्त्र-महायानं सर्वभोगादिक वसु ।
विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति ॥

अत्र सर्वत्र ब्राह्मणेभ्यः इति श्रवणात्तेभ्य एव देयानीति गम्यते । श्रीमदाश्वालायनप्रोक्ते चार्घ्यपात्रन्युब्जीकरणोक्त्यनन्तरं भवति कात्यायनाश्वलायनवचनम् । एतस्मिन् काले गन्ध-पुष्प-धूप-दीपाच्छादनानां प्रदानमिति । अत्र पाठक्रमादेव विवक्षितक्रमलाभेऽपि 'यदिदमेतस्मिन् काले' इति श्रुत्या क्रमविधानं, तेनैतत् गम्यते । यदि हि एताभ्यामृषिभ्यामेवमाशङ्कितं यथा पितॄणां श्रेयः सिध्यर्थं क्रियमाणं छत्रो पानत्क-मण्डल्वादिदानं ददातिचोदनाचोदितत्वेन ब्राह्मणसम्प्रदानकत्वेन च सामान्येन दक्षिणादानकाले कुर्वते । एवं गन्धादिदानमपि ददातिचोदनाचोदितं ब्राह्मणसम्प्रदानकञ्चेति साम्यात् ।

अपि च न्यायोप्यत्र भवति । यदि हि पितॄनुद्दिश्य गन्धादिदानं स्यात् तर्हि तेषां विग्रहाद्यभावेन प्रतिग्रहीतृत्वासम्भवे सम्प्रदानत्वाभावात् गन्धादीन् ददातीत्यत्र सत्यामपि गतौ ददातिशब्दे स्वार्थैकदेशलक्षणाप्रसङ्ग इति ।

यदि च गन्धादीनि पितृभ्यो दीयेरन्न द्विजेभ्यः, तदा गन्धादीनां देवद्रव्यत्वापत्तिः । चतुर्थ्यन्तेन हि नाम्ना किञ्चिदुद्दिश्य 'न ममे'दमिति यत् द्रव्यन्त्यज्यते तदेव दानमुच्यते । न पुनः यत्प्रतिमाद्युद्देशेनैव त्यज्यते, यत्र वा विष्णवादिदेवस्य स्वत्वबुद्धिः तदेव देवद्रव्यम् । अमूर्तदेवतोद्देशेन त्यक्तस्यादेव द्रव्यत्वप्रसङ्गात् । यद्यपि च स्वोद्देशत्यक्तद्रव्यविषयकत्वबोधवती देवता, तथापि अर्थवादावगतचेतनत्वानुरोधेन हरि-हरहिरण्यगर्भादिवत् देवपितॄणामपि स्वत्वबोधोपपत्तेः ।

उक्तं चापस्तम्बेन 'पितॄणामपि देवतात्वम् । तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थमिति' ।

अतः पितृभ्यस्त्यक्तं गन्धादिकं देवद्रव्यमेव भवति विश्वेभ्यो देवेभ्यस्त्यक्तं स्पष्टमेव देवद्रव्यम् । तथा च यत्र स्वत्वबुद्धिं बुध्वा तद्रव्यमुपयुञ्जानो द्विजः सर्वोत्तमदेवद्रव्यचौर्यान्महापातकी महासाहसोक्तेव दण्डेन दण्डयश्चापद्येत । तत्र देवस्वस्योत्तमद्रव्यत्वम् ।

स्तेयपापं तु मनु - यमावाहतुः ।
देवस्वं - ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ।
स पापात्मा परेलोके गृध्रोच्छिष्टेव जीवति ॥

देवद्रव्यापहर्तारं ब्रह्मस्वहरणं तथा ।
पुरुषं पापकर्माणं नरकः प्रतिपद्यते ।।

अतः पितृभ्यस्त्यक्तैर्गन्धादिभिर्यजमानेन ब्राह्मणाभ्यर्चनं कार्यमित्येतावति विहिते सति यजमानेन तथाऽभ्युपगतक्षणैस्त्यज्यमान श्राद्धीयद्रव्यप्रक्षेपणाधिकरणभूतैर्विप्रैरभ्युपगम्य यावत्प्रयोगसमाप्ति गन्ध-पुष्प-वास स्युपादाय प्रयोग समाप्तौ यजमानवेश्मन्येव सन्त्यज्य गन्तव्यं स्यात् । न चैतच्छिष्टसंमतम् । तस्माद्ब्राह्मणेभ्य एव गन्धादीनि प्रदेयानीति ।

अत्रोच्यते । पितृतृप्ति-प्रीतिकरं कर्म श्राद्धमुच्यते । दीयमानेन चान्नालङ्करणादिना तृप्ति-प्रीती सम्पाद्यमाने दृष्टे । अतो यच्छ्राद्धे देयत्वेनोच्यते तत्प्रायेण पितृभ्यो देयमित्यवगम्यते । भवति चैवं गन्धादि । अतस्तत् पितॄनुद्दिश्य देयम् । पैत्रेण कर्मणा पितॄणां तृप्ति-प्रीती च मन्त्रलिङ्गादवगम्येते ।

"अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः । पितरः शुन्धध्वमिति ।

अस्य व्याख्यानं शपतथे । अप आनीय निनयति अक्षन् पितर इति अन्नाद्यमैवैषु दधाति । अमीमदन्त पितर इति, मदयत्येवैतान्, अतीतृपन्त इति तर्पयत्येवैतान्, पितरः ।

शुन्धध्वमित्यपूर्वमेवैतान् सर्वान् पावयति, इति हर्षयति ।
तथा । अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ।
अमीमदन्त पितरो यथाभागमावृषायिषतेति ।

सातिप्रत्ययस्त्वनिषिद्धोपभोग्यत्वलक्षणस्वत्वफलसद्भावा-भिप्रायेण पितृभ्यस्त्यक्ते गन्धादौ द्विजानां स्वाम्यविधावार्थत्वेव चास्मिन्नपि पक्षे व्याख्यातो न क्षुभ्यति। च शब्दनिर्देशस्तदग्र-वचनं चाधिष्ठानभूतेषु ब्राह्मणेषु पित्राद्यावेशादभेदबुद्धिमाश्रित्य पितृसन्निधिमाश्रित्य वा पितः, एतत्तेऽर्घ्यम्। पितः! अयं ते पिण्ड इतिवत् प्रवर्तते। पिण्डोपचारेषु चैतद्वः पितरो वास इत्यस्मिन् यजुषि वःशब्देन साक्षात् पितॄनेवोद्दिश्य वस्त्रदानं दृश्यते। श्रूयते च पुराणादिषु साक्षात् पितृभ्य एव गन्धादि दानम्।

तथा च वराहपुराणे।

गन्धाः पुष्पाणि वस्त्राणि धूप-दीपा-क्षतानि च।
पितृकृत्ये प्रशस्तानि स्वाद्वन्नं सलिलं हिमम्॥

एतानि श्रद्धयोपेतः पितृभ्यो यो निवेदयेत्।
स एव धर्मशीलो मे प्रियकारी वसुन्धरे॥

अथ दक्षिणा। स्मृतिकृदाश्वलायनोऽप्याह।

हृतमश्रोत्रियं श्राद्धं हृतो यज्ञस्त्व दक्षिणः।
तस्मात्पणं काकिणीं वा फल पुष्पमथापि वा॥
प्रदद्याद्दक्षिणां यज्ञे तथा च सफलो भवेत्॥

पणं काकिणीं वेत्यनुकल्पः। मुख्यकल्पस्तु।

'गो-भू-हिरण्य-वसांसि नव्यानि शयनानीत्यादिभिः स्मृतिपुराण-योः द्रव्यप्रकरणे द्रष्टव्यः।

देयव्यवस्था तु नागरखण्डे । हिरण्यं देवतानां तु पितृणां रजतं तथा ।। दक्षिणादाने वैषम्यमप्यनुजानीते पारस्करः ।

एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धभोजने ।
भक्ष्यं भोज्यं समं देयं दक्षिणात्वनुसारतः ।।

### अथ दक्षिणासम्प्रदाननिर्णयः ।

तत्र तावदेके पितृभ्यो दक्षिणादेयेति मन्यन्ते । तेह्याहुः । दक्षिणादाने जमदग्निना तिलापसव्यसम्बन्धस्य. पितृनाम - गोत्राभिधानस्य च विधानात्, ब्रह्माण्डपुराण च दक्षिणाद्रव्याण्यवकीर्त्य सर्वं पितृणां दातव्यमिति पितृसम्बन्धाभिधानाच्च, पितृनुद्दिश्य दक्षिणा देयेत्यवगम्यत इति । अत्र स्मृतिचन्द्रिकाकारेणाक्षेपस्तत्समाधानं चोक्तम् । तत्र तावदाक्षेपः । यदि पित्राद्युद्देशेन द्रव्यत्यागः न पुनः द्विजोद्देशेन, कथं तर्हि ब्राह्मणानां दक्षिणाद्रव्ये स्वाम्यम् ।।

समाधानं तु । यथा दार्शपौर्णमासिके दक्षिणादाने ब्राह्मणाश्रयश्च ओदन इत्युक्त्वा यजमानेनोदने समर्पिते सति ब्राह्मणोद्देशेनोदनत्यागाभावेऽप्यृत्विजां कर्मकरत्वेनैवोदने स्वाम्यमुत्पद्यते । तथेहापि हिरण्य-रजतादिसमर्पणे, कर्मकरत्वेनैव तत्र ब्राह्मणानां स्वाम्यमिति । यथा वा प्रतिष्ठादौ प्रतिष्ठितां देवतामुद्दिश्य त्यक्ते वस्त्राभरणादौ प्रतिष्ठान्ते सर्वमुपकरणमाचार्यो गृह्णातीत्येतद्वचनानुगृहीतकर्मकरत्वेनाऽऽचार्यस्य स्वाम्यं भवति । तथेहापि

ब्राह्मणान् भोजयित्वा तु दद्याच्छक्त्या च दक्षिणाम् ।।
इत्येतद्वचनानुगृहीतकर्मकरत्वेनैवान्योद्देशेन त्यक्तायामपि दक्षि

णायां ब्राह्मणानां स्वाम्यं सम्पद्यत इति, तदेतन्मतम् युक्त-मिवाभाति। तथाहि। द्विजानामपि सम्प्रदानत्वे दक्षिणादा-नस्य पितृयकर्माङ्गत्वेन पितृयत्वात्तिचाप व्यसम्बन्धो घटत एव। "स तिलं नामगोत्रेणे" त्येतस्मिन् वचने ब्राह्मणसम्ब-न्धयोर्नाम-गोत्रयोर्विवक्षापि सम्भाव्यते।

इति दक्षिणासम्प्रदान निर्णयः। इति दक्षिणानिरूपणम्।

## अथ वैश्वदेवनिर्णयः।

तत्र पाक-कालौ सांशयिकौ तत्र तावत्पाके संशयः। किं वैश्वदेवाद्यर्थः श्राद्धार्थश्चैक एव पाकः, उतभिन्नः इति। तत्र तावन्पञ्चमहायज्ञान्तर्गतस्य नित्यश्राद्धस्य वैश्वदेवादेश्चैक एव पाकः। आन्वाहिकस्य हि पाकस्यान्वहमनुष्ठीयमानान्ननिष्पाद्य-सर्वकर्मार्थत्वात्। आशौचविशेषे त्वेकादशाहात्पूर्वं वैश्वदेवाद्येव नास्तीति तदानीन्तवनवश्राद्धेषु पाकैक्यशङ्कैव नास्ति। ऐका-दशाहिके तु श्राद्धे वैश्वदेवस्य पाकान्तरेणैवानुष्ठानम्। 'एको-द्दिष्टेषु शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत् इति देवलेन नवश्राद्ध-संज्ञकेष्वेकोद्दिष्टेषु सर्वस्याप्यन्नशेषस्य ब्राह्मणेभ्यो देयत्व-विधानात्, प्रेतश्राद्धेषु चैतद्वक्ष्यते। अमावास्या श्राद्धविकृति-भूतेषु सांवत्सरिकादिषु तु प्रकृतिनिर्णयेनैव निर्णय इत्यमावास्या-श्राद्धार्थे पाके संशयः, कुतः? विप्रतिपत्तेः।

यत आह पैठीनसिः।

पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः।
आसुरन्तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥ इति॥

तथा च पैठीनसिः ।

श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।

कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा ॥ इति ।

अत्राऽऽद्येन तत इति शब्देन पूर्वश्लोकार्थो हेतुत्वेनोच्यते । द्वितीयेन श्राद्धावशिष्टादन्नादित्युच्यते । तेनायमर्थः । यतः श्राद्धात् पूर्वं पितृपाकात् समुद्धृतेनान्नेन वैश्वदेवे क्रियमाणे तच्छ्राद्धमासुरं स्यात्. ततः कारणात् श्राद्धं निर्वर्त्य ततः तच्छ्राद्धावशिष्टा दन्नात् किञ्चिदादाय वैश्वदेवादिकं कुर्यादित्यर्थः न चात्रान्नस्याप्रकृतत्वेन तच्छब्दपरामर्शायोग्यत्व वाच्यम् । पितृपाकात् समुद्धृत्येत्यस्मिन् पूर्वश्लोकेऽन्नप्रक्रमात् । सन्निहितं सर्वनाम्ना परामृश्यते । न चोपन्यासेनैव सन्निधिरिति नियमः । बुद्धिसन्निधिस्तु सन्निधिरित्यभ्युपगमात् ।

इति वैश्वदेवपाकनिर्णयः । अथ वैश्वदेवकालनिर्णयः ।

तत्र तावदनग्निकेन श्राद्धात्पूर्वं वैश्वदेवः कार्यो न वेति संशये पूर्वपक्षः । वैश्वदेवहोमं कुर्यादिति वैश्वदेवविधिनैवानग्निकस्य वैश्वदेवस्य कस्मिंश्चित् काले कर्तव्यतायां श्राद्धात्पूर्वकालेऽपि पाक्षिकीकर्तव्यता प्राप्तैव । यस्तु षड्त्रिंशन्मते पूर्वकालतायाः प्रतिषेधः ।

प्रातिवासरिको होमः श्राद्धादौ क्रियते यदि ।

देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथा ॥ इति ।

यश्च गौतमकृतः प्रतिषेधः ।

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।

अकृतन्तद्भवेत् श्राद्धं पितॄणां नोपतिष्ठते ॥

स तु श्राद्धपाकेनैव वैश्वदेवस्य पूर्वकालमनुष्ठाने वेदितव्यः, न तु पाकान्तरेणाप्यनुष्ठाने । अत एव वैश्वदेवे कृते ।

**अन्नशेषस्यैव श्राद्धनर्हतामाह वसिष्ठः ।**

वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः ।
लौकिकेऽग्नौ हुते शषः पितृणां नोपतिष्ठते ॥ इति ।

दर्शितं चास्मिन्नेवार्थे "श्राद्धपाकात् समुद्धृत्ये'त्यादि पैठीनसि वचनम् । अयमेकोऽनग्निकस्य वैश्वदेवकालः ।

**द्वितीयोऽपि भविष्यत्पुराणे ।**

पितॄन् सन्तर्प्य विधिवद् बलिं दद्याद्विधानतः ।
वैश्वदेव ततः कुर्यात् पश्चात् ब्राह्मणवाचनम् ॥ इति ।

## अथ नित्यश्राद्धकाल निर्णयः ।

भूतयज्ञादिप्रकरणविर्णीतमपि नित्यश्राद्ध किञ्चिद्विशेषाभिधावाय पुनः प्रस्तूयते ।

**तत्र मार्कण्डेयः ।**

ततो नित्यक्रियां कुर्याद्भोजयेच्च तथातिथीन् ।
ततः तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ॥

ततः तेन श्राद्धशेषान्नेन, नित्यक्रियां - अन्नसाध्याम्, अतो नित्यश्राद्धमपि तेनैव कर्तव्यम् । अथवा नित्यश्राद्धं पृथक्पाकेन कार्यम् । तस्य श्राद्धात्मकत्वेन श्राद्धकर्मभूतस्य पाकस्य पृथक् प्रयुक्तिसम्भवात् । अतएव नित्यश्राद्धमधिकृत्य मार्कण्डेयपुराणेऽभिहितम् । "पृथक् पाकेन नित्य"मिति ॥

अस्यार्थः। दर्शादिश्राद्धपाकात् पृथक् पाकेन नित्यश्राद्धं कर्तव्यम्। अन्ये त्वेतन्नेत्याहुः। दर्शादिश्राद्धपाकशेषेण नित्यश्राद्धमपि कर्तव्यमिति मन्यन्त इत्यर्थः।

अथ जप्यानि।

तत्र तावत् श्राद्धभोक्तृब्राह्मणानां जप्यान्याह भृगुः।

आमन्त्रितो जपेद्दोग्ध्रीमासीनस्तु निषङ्गिणः।
भुक्त्वा तु वामदेव्यञ्च श्राद्धे भोक्ता न दुष्यति॥

गोभिलः।

आमन्त्रितो जपेद्दोहान्नियुक्तस्त्वृषभान् जपेत्।
अतीषङ्गांश्च तत्रैव जप्त्वाऽनीयात् द्विजोत्तमः॥

भुक्त्वाऽऽचम्य पदस्तोभान् जपेत्तत्र समाहितः।
गोसूक्तञ्चाश्वसूक्तञ्च शुद्धाशुद्धीयमेव च॥

गत्वासीनः शुचौ देशे वामदेव्यं ततो जपेत्।
एवं सामभिराच्छन्नो भुञ्जानस्तु द्विजोत्तमः॥

श्राद्धभोजनदोषैस्तु महद्भिर्नोपलिप्यते।
अन्यथैव हि भुञ्जानो हव्य-कव्येष्वमन्त्रवित्॥
आत्मानमन्नदातारं गमयत्यासुरीं स्थितिम्॥

इति श्राद्धभोक्तृब्राह्मणजप्यानि।

अथ यजमानजप्यानि।

तत्राह मनुः।

स्वाध्यायं श्रावयेत्पैत्र्ये धर्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणानि खिलानि च॥

स्वाध्यायः - वेदः । धर्मशास्त्राणि - मन्वादिप्रणीता-ग्रन्थाः । आख्यानानि - सौपर्ण-मैत्रावरुण-पारिप्लवादीनि, बाह्वृच्ये- (ऋग्वेदे) पठ्यन्ते । अन्यान्यपि पितृसम्बन्धीनि पौराणानि सप्तव्याधाख्यानप्रभृतीनि । इतिहासाः - महाभारताद्यः । पुराणानि - सर्गादिपञ्चलक्षणलक्षितानि ।

पुरतः स्थितेनाप्यभिमुखेनैव कर्तव्यमित्याह प्रचेताः ।

भुञ्जानेषु तु विप्रेषु ऋग्यजुःसामलक्षणम् ।
जपेदभिमुखो भूत्वा पित्र्यं चैव विशेषतः ॥

ऋग्यजुः सामलक्षणं - जप्यमिति शेषः । तेषामृग्यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुःशब्दः । पित्र्यं पितृदेवत्यम् । इति जप्यानि ।

अथ विभक्तयः ।

गोत्र-सम्बन्ध-नामानि यथावत्प्रतिपादयेत् ।

नागरखण्डेऽपि ।

विभक्तिरहितं श्राद्धं क्रियते यद् विपर्ययात् ।
अकृतं तद्विजानीयत् पितॄणां नोपतिष्ठते ॥
तस्मात्सर्वप्रयत्नेन ब्राह्मणेन विजानता ।
विभक्तिभिर्यथोक्ताभिः श्राद्धं कुर्यात्त्रिभिः सदा ॥

उक्तविभक्तीनां विनियोगमाह व्यासः ।

चतुर्थी चासने नित्यं सङ्कल्पे च विधीयते ।
प्रथमा तर्पणे प्रोक्ता सम्बुद्धिमपरे जगुः ॥

भृगुः । विष्टरासनयोः षष्ठी तथैवाक्षय्यदानके ।
आवाहने द्वितीया स्यादेष शास्त्रविनिश्चयः ॥
अर्घ्यावनेजने पिण्डे तथा प्रत्यवनेजने ।
सम्बुद्धितां प्रयुञ्जीत शेषे षष्ठी विधीयते ॥
गन्धं माल्यं च धूपं च दीपमन्नं सदक्षिणम् ।
अपृथक्त्वेन दातव्यं चतुर्थ्या विधिमिच्छता ॥

ब्रह्मपुराणे । इदं वः पाद्यमर्घ्यं च चतुर्थ्यन्तं निवेदयेत् ।

नागरखण्डे । अक्षय्यं सतिलं देयं षष्ठ्या चैव ततः परम् ।

संग्रहकारोऽप्यक्षय्यदाने षष्ठीमाह ।

अक्षय्यासनयोः षष्ठी द्वितीयाऽऽवाहने स्मृता ।
अन्नदाने चतुर्थीस्याच्छेषाः सम्बुद्धयः स्मृताः ॥
इति विभक्तयः ।

अथ प्राचीनावीत-यज्ञोपवीत निर्णयः ।

मनुः । प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ॥

अत एवाश्वलायनः ।

सव्येनैव च देवानां कर्तव्यं श्राद्धमुत्तमम् ।
अपसव्यं पितॄणां च कुर्याच्छ्रुतिनिदर्शनात् ॥

प्रभासखण्डेऽपि ।

यज्ञोपवीतिना कार्यं दैवं कर्मविजानता ।
प्राचीनावीतिना चैव पितॄणामप्यशेषतः ॥

नागरखण्डे तु प्राचीनावीतस्य क्वचिदपवादो दर्शितः ।

एवं सर्वाः क्रिया कार्या दैविक्यः सव्यपूर्विकाः ।
पैतृक्यश्चापसव्येन मुक्त्वैवं स्वस्तिवाचनम् ॥ इति ।

प्राचीनावीतमुपदिशंस्तावत्कालं यज्ञोपवीतानुवृत्तिच सूचयति याज्ञवल्क्यः । अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम् ।
द्विगुणांस्तु कुशान् दत्वा ह्युशन्तस्त्वेत्यृचापितॄन् ॥

आवह्येदित्यपरेणसम्बन्धः । एतच्च प्राचीनावीतमर्घ्यसंस्राव-विनियोग विहायाच्छादनान्तमनुवर्तते । अत एव दर्भासनाद्या-च्छादनान्तक्रियाकाण्डमध्यवर्तिषु केषुचित्पदार्थेषु कण्ठोक्त्यैव प्राचीनावीतवचन दृश्यते । तथाच ब्रह्माण्डपुराणे ।

अपसव्यं ततः कृत्वा तिलानादाय संयतः ।
पितृनावाहयामीति पृच्छेद्विप्रानुदङ्मुखान् ॥

अपसव्येनान्नपरिवेषणे दोषमाह काष्णाजिनिः ।

अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति ।
विष्ठामश्नन्ति पितरः ते च सर्वे द्विजोत्तमाः ॥

जमदग्निरपि ।

अपसव्येन कर्तव्यं सर्वं श्राद्ध यथा विधि ।
सूक्त-स्तोत्र-जपं मुक्त्वा विप्राणाञ्च विसर्जनम् ॥

इति चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे परिभाषा-प्रकरणं नाम दशमः अध्यायः ।

## अथ एकादशोऽध्यायः ।

### तत्र निमन्त्रणम् ।

इह किल श्राद्धप्रयोगे प्रारिप्सितेऽर्थान्निमन्त्रणमन्त्रेणापि तदुपयोगिब्राह्मणोपादाने प्रसज्यमाने निमन्त्रणप्रकारेणैव ब्राह्मणोपादानं कर्तव्यमित्येवंविधनियमार्थो निमन्त्रणीयविशिष्टो निमन्त्रणविधिः प्रतिपाद्यते ।

तत्र वायुपुराणे ।

सर्ववेदव्रतस्नाताः पङ्क्तीनां पावना द्विजाः ।
ये च भाष्यविदो मुख्या येच व्याकरणे रताः ॥
अधीयानाः पुराणञ्च धर्मशास्त्रं तथैव च ।
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥
ये च सद्योव्रता नित्यं स्वकर्मनिरताश्च ये ।
अक्रोधनाः शान्तिपरास्तान् वै श्राद्धेनिमन्त्रयेत् ॥
ये चापि नित्यं दशसु सुकृतेषु व्यवस्थिताः ।
स्वकर्मनिरता नित्यं तान् श्राद्धेषु निमन्त्रयेत् ॥ इति ।

दशलक्षणश्च धर्मः मनुनोक्तः ।

धृतिः क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

आह विष्णुः ।

अथ श्राद्धेप्सुः पूर्वेद्युः ब्राह्मणानुपनिमन्त्रयेत् । श्राद्धेप्सुः - श्वोभूते श्राद्धं कर्तुमिच्छुः श्राद्धकर्ता तत्प्रेषितो वा सवर्णः पूर्वेद्युः - पूर्वस्मिन् दिवसे श्राद्धभोजनार्हान् ब्राह्मणान्, उपनिमन्त्रयेत् निमन्त्रणेन संयोजयेत्

आह देवलः ।

श्वः कर्तास्मीति विज्ञाय दाता विप्रान्निमन्त्रयेत् ।

निमन्त्रणीयद्विजानां शौचादिगुणा याज्ञवल्क्येन व्यक्तमेवोक्ताः ।

निमन्त्रयीत पूर्वेद्युर्ब्राह्मणानात्मवाञ्छुचिः ।
तैश्चापि संयतैर्भाव्यं मनोवाक्काय कर्मभिः ॥

आपस्तम्बस्त्वेकैकस्य ब्राह्मणस्य निमन्त्रण त्रयमुक्तवान् ।

'पूर्वेद्युर्निवेदनमपरेद्युर्द्वितीयं तृतीयमामन्त्रणं त्रिप्रायमेके श्राद्धमुपदिशन्ति । यथा प्रथममेवं द्वितीयं च सर्वेषु वृत्तेषु' ।

अस्यार्थः । पूर्वद्यु रात्रौ ब्राह्मणेभ्यो भोजननिवेदनं कर्तव्यम् । पुनश्चापरेद्युः स्वागतप्रश्नानन्तरं, तृतीयं चासनदानानन्तरमिति । अत्रार्थवादः । यतः श्राद्धं त्रिप्रायं' त्रिसंख्यापदार्थबहुलं, तत्र हि तिस्रो देवताः त्रीणि पवित्राणि, त्रीणि पात्राणि त्रिः सावित्रीजपः त्रयः पिण्डाः, त्रिराञ्जनाभ्यञ्जनादीनीति । तेषु पदार्थेषु यथा प्रथमः तथैवद्वितीय – तृतीयाविति ।

अथ निमन्त्रणकर्तारः ।

ब्रह्म-मार्कण्डेययोः ।

पितॄणामयुजः कामं युग्मान् दैवे द्विजोत्तमान् ।
एकैकं वा पितॄणां च देवानां च स्वशक्तितः ॥

अस्मिंश्च पक्षे वैश्वदेविक निर्णयमाह स एव ।

यद्येकं भोजयेत् श्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥

देवतायतने कृत्वा ततः श्राद्धं प्रवर्तयेत् ।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे ॥

**ब्रह्मपुराणे ।**

एक एव यदा विप्रो द्वितीयो नोपपद्यते ।
पितॄणां ब्राह्मणे योज्य देवेत्वग्निं वियोजयेत् ॥

**वराहपुराणे ।**

वस्त्रशौचादिकर्तव्यं श्व. कर्तास्मीति जानता ।
स्थानोपलेपनं भूमिं कृत्वा विप्रान्निमन्त्रयेत् ॥

अथ निमन्त्रणेतिकर्तव्यता ।

**प्रचेतस्स्मृति - प्रभासखण्ड - भविष्योत्तरेषु ।**

कृतापसव्यः पूर्वेद्युः पितॄन् पूर्वं निमन्त्रयेत् ।
भवद्भिः पितृकार्यं श्वः सम्पाद्य नः प्रसीदत ॥
सव्येन वैश्वदेवार्थान् प्रणिपत्यनिमन्त्रयेत् ॥

**इति परिशेषखण्डे श्राद्धकल्पे निमन्त्रणप्रकरणं नाम एकादशोऽध्यायस्समाप्तः ॥**

**अथ द्वादशोऽध्यायः । अथ श्राद्धदिनपूर्वाह्णकृत्यम् ।**

**तत्र** पाकादिकृत्यम् । अथ श्राद्धकर्ता ब्राह्मे मुहूर्ते उत्थाय यथोपदेशं शौचविधिं विधायाऽऽचामेत् । दन्तधावनन्तु न कुर्यात् । **शातातपोऽपि** श्राद्धदिने दन्तधावननिषेधमाह—

शुद्ध्यर्थं प्रातरुत्थाय भक्षयेद्दन्तधावनम् ।
श्राद्धे यज्ञेऽथ नियमे पत्यौ च प्रोषिते न तु ॥

श्राद्धादौ निष्पाद्यत्वेन प्रस्तुते सति दन्तधावनं न कुर्यादन्यत्र-कुर्यादित्यर्थः ।

प्रभासखण्डे ।

उपवासे तथा श्राद्ध न खादेद्दन्तधावनम् ।
दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि वै ॥

तथा च ब्रह्माण्डपुराणे ।

भूमिः श्राद्धे पञ्चगव्यैः क्षिप्ता शोध्या तथोल्मुकैः ।
गौरमृत्तिकयाच्छन्ना प्रकीर्णतिलसर्षपा ॥

देवलस्मृति-कूर्मपुराणयोः ।

तिलानवकिरेत्तत्र सर्वतो बन्धयेदजान् ।
आसुरोपहतं सर्वं तिलैः शुध्यत्यजेन च ॥

पत्न्या स्वहस्तेन पाकः कर्तव्य इत्यत्रार्थे लिङ्गदर्शनं चमत्कारखण्डे ।

ततश्च श्रपयामास तदर्थं जनकोद्भवा ।
रामादेशात्स्वयं साध्वी विनयेन समन्विता ॥

प्रभासखण्डेऽपि ।

अथैतानि पपाचाशु सीता जनकनन्दिनी ।

भू-भाण्ड-संस्कारानन्तरमुक्तं देवल-स्मृति-कूर्मपुराणयोः ।

ततोऽन्नं बहुसंस्कारं नैकव्यञ्जन भक्ष्यवत् ।
चोष्य पेयसमृद्ध च यथा शक्तिप्रकल्पयेत् ॥

अत एवाह गौतमः । शक्तितः प्रकर्षयेद्गुणसंस्कारविधीनन्न-स्येति । अन्नानां समीचीन-जाति-रूप-रस-गन्ध-स्पर्शवत्वं गुणाः । द्रव्य-क्रियादिभिरतिशयाधानं संस्काराः । (गौ-धर्म-अ-१५, सू-६)

एतयोः विधीन् - प्रकारान् यथाशक्ति, प्रकर्षयेत् - शक्त्य-नुसारेण प्रकृष्टात् सम्पादयेदित्यर्थः ।

अथ साग्निकेन वैश्वदेवार्थं पृथक्पाकः कर्तव्य इति वैश्व-देवादिप्रकरणे अभिहितम् ।

कूर्मपुराणे ।

दक्षिणाप्रवणं स्निग्धं विविक्तं शुभलक्षणम् ।
शुचिं देशं [1]विविक्तञ्च गोमयेनोपलेपयेत् ॥

विष्णुधर्मोत्तरे ।

रजस्वलाच षण्डश्च श्वावसूकर कुक्कुटाः ।
यथा श्राद्धं न पश्यन्ति तथा कार्यं विजानता ॥
रक्षार्थश्चास्य वै तेषां गुप्तिः कार्या नरेश्वर ॥

भविष्यत्पुराणे ।

स्त्री-बाल-वृद्धैः स्नातव्यं तद्दिने श्राद्धकारिभिः ।
नियतैश्चैव तैर्भाव्यं यावच्छ्राद्धं समाप्यते ॥

उक्तं हि कर्मारम्भे स्नानं मत्स्यपुराणे ।

नैर्मल्यं भावशुद्धिश्च विना स्नानं न विद्यते ।
तस्मान्मनो विशुद्ध्यर्थं स्नानमादौ विधीयते ॥

आह यमः ।

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।
मूलेन लोकान् जयति [2]शक्रस्य तु महात्मनः ॥

अथ श्राद्धसम्पदः ।

---

1, 2. मूलग्रन्थः पाठः एवम् ।

आह मनुः ।

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ॥

यमः । रक्षन्ति दर्भा असुरांस्तिला रक्षन्ति राक्षसान् ।
वेदविद्रक्षति त्वन्नं यतयेदत्तमक्षयम् ॥

इति श्राद्धकल्पे पूर्वाह्णकृत्यं नाम द्वादशोऽध्यायः ।

अथ त्रयोदशोऽध्यायः । अथापराह्णकृत्यम् ।

प्रभासखण्डे ।

ततोऽपराह्णसमये श्राद्धकर्ता समाहितः ।
स्वयं समाह्वयेद्विप्रान् सवर्णैर्वा समाप्लुतान् ॥

समाप्लुतान् - [1]स्नातान् ।

उक्तं च देवलस्मृति - कूर्मपुराणयोः ।

यथोपविष्टान् सर्वांस्तानलङ्कुर्याद्विभूषणैः ।
स्रग्दामभिः शिरोवेष्टैर्धूप-दीपानुलेपनैः ॥

पङ्क्तिभेदसाधनान्याह बृहस्पतिः ।

एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् ।
भस्मना कृतमर्यादा न तेषां सङ्करो भवेत् ॥

बार्हस्पत्यस्मृति-प्रभासखण्डयोः ।

अग्निना भस्मना वापि स्तम्भेनाप्युदकेन वा ।
द्वारसङ्क्रमणेनापि पङ्क्तिभेदः प्रकीर्तितः ।

---

1. कृतसमावर्तनान् ।

यमोऽप्याह ।

आसुरं तद्भवेच्छ्राद्धं पूर्वं दैवविवर्जितम् ।
तस्माच्छ्राद्धेषु सर्वेषु पित्र्यं पूर्वं विवर्जयेत् ॥

दैवं पूर्वं नियुञ्जीत पश्चात् पित्र्यं यथाविधि ।
पूर्वं पित्र्यं नियुञ्जानः क्षिप्रं नश्यति सान्वयः ॥

ब्रह्माण्डपुराणे ।

श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्याञ्चैव नमस्कृत्य ततः श्राद्धं प्रवर्तयेत् ॥

इतिकर्तव्यता ब्रह्माण्डपुराणे ।

उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरे स्थितौ ।
सप्रश्रयश्चोपविष्टान् सर्वान् पृच्छेद्द्विजोत्तमान् ॥

अत एव नागरखण्डे हस्ते गर्भासनदानस्य वैफल्यमुक्तम् ।

हस्ते तोयं परिक्षेप्यं नो दर्भास्तु कथञ्चन ।
यो हस्ते चासनं दद्यात्तं दर्भं बुद्धिवर्जितः ॥
पितरो नासने तत्र प्रकुर्वन्ति निवेशनम् ॥

विष्णुधर्मोत्तरे त्वाच्छादन दानानन्तरं भूषणानामपि दानमुक्तम् ।

निवेद्य विप्रेषु ततः पाद्यार्घ्यं प्रयतः क्रमात् ।
गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः ॥

अर्चयेत् ब्राह्मणान् शक्त्या श्रद्दधानः समाहितः ।
आदौ समर्चयेद्विप्रान् वैश्वदेवे निवेशितान् ॥
निवेशितांश्च पित्रर्थे ततः पश्चात् समर्चयेत् ।

भविष्यत्पुराणोक्तेनानेन प्रार्थनाश्लोकेनात्यन्तं विनीतः सन् प्रार्थयेत् ।

मन्त्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम ॥

गोत्र-सम्बन्ध-नामानुकीर्तन कर्तव्यतामाह बृहस्पतिः ।

आसने चार्घ्यदाने च पिण्डदानेऽवनेजने ।
सम्बन्ध-नाम-गोत्राणि यथार्हमनुकीर्तयेत् ॥

भविष्यत्पुराणे दक्षिणकरस्यैव सकलकर्मसाधनत्वमनेन वचनेन प्रतिपादितम् ।

यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ इति ।

परिशेषखण्डः १३-अध्यायात्मकः-श्राद्धकल्पस्संपूर्णः ।

—*—

। श्रीः ॥

# ॥ प्रायश्चित्तखण्डः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजं । . . . . . शान्तये

कमलादयितं कृष्णं कमलासनवन्दितम् ।
कमलाक्षमहं वन्दे कमलाकरशायिनम् ॥

अथेदानीं हेमाद्रिसूरिणा लोकोपकाराय सर्वपुराण-स्मृति-संहिता-वेद-ज्योतिष-वैद्याऽऽगम-श्रौत-स्मार्त-सूत्रग्रन्थान् आलोच्य ब्रह्म-क्षत्र-विट्-शूद्रादीनां ब्रह्महत्यादीनि तत्समानि पापानि यानि-चान्यानि वाङ्मनः कायसम्भवानि हिंसादीनि सम्भवन्ति, तेषां पापानामपनोदन प्रायश्चित्ताध्यायो लिख्यते । तत्रापि वि-प्रादीनां चतुर्णां पापभीरूणां प्रतिग्रहादिदोषैः हिंसादिनिमित्तैः क्रयविक्रयादिभिः ब्राह्मणशुश्रूषाऽकरणादि निमित्तैरनेके दोषाः सम्भवन्ति, तन्निरासार्थं प्रायश्चित्तपराङ्मुखानां दोषबाहुल्यात्त-द्दोषापनोदनं प्रायश्चित्तं पूर्वोक्तेषु ग्रन्थेषु मुनिभिः यद्यत् दृष्ट तदेव मयाऽत्र निरूप्यते वर्णाश्रमभेदेन, तदकरणे पापानपनो-दनेव दोषाधिक्यतया प्रायश्चित्तं प्रदर्शितम् । तदेवाह ।

ब्रह्महा क्षयरोगी स्यात्सुरापी श्यावदन्तकः ।
सुवर्णचोरः कुनखी दुश्चर्मा गुरुतल्पगः ॥

इत्यादिनिमित्तैः प्राप्त-तद्दोषोपशान्त्यर्थं कुत्रचित् मरणान्तप्राय-श्चितं कुत्रचित् पुनस्संस्काररूपं कुत्रचित् महानदीस्नानरूपं कुत्र-चित् जपरूपं कुत्रचित् स्वप्रतिग्रह द्रव्य चतुर्थांशव्ययरूपं कुत्र-चित् होमरूपं कुत्रचित् चान्द्रायणादि कृच्छ्राचरणरूपं कानिचन

महापातकजन्यानि कानिचिदुपपातकजन्यानि कानिचित्तुलाप्रतिग्रहादिजन्यानि पापानि । तानि प्रकटयति । एतेषां प्रायश्चित्ताकरणे वर्णचतुष्टयस्य नरकः प्रदर्शितः । तस्मात् प्रायश्चित्तं कर्तव्यम् । यद्यत्प्रायश्चित्तं प्रतिपदोक्तं तदेव कर्तव्यं, न तु स्नानादि । एतस्मिन् ग्रन्थे स्वर्ण-धान्यकृच्छ्रादिकं सर्वं तत्तत्प्रकरणे सर्वत्र अध्याये निरूपितम् द्रष्टव्यम् ।

ब्रह्महत्या-सुरापान-स्वर्णस्तेय, गुरुतल्पगमनानि तत्संयोगश्चेति पञ्चमहापातकानि । अथोपपातकानि तुलापुरुषदान तदितरदानप्रतिग्रहादीनि । जातिसङ्कलीकरण-मलिनीकरणापात्रीकरण-जातिभ्रंशकराणि प्रकीर्णकानि । [1]एतानि नवविधानि दुरन्न,दुर्भोजनदुःसङ्ग-दुरालापाऽस्नानादीनि प्रायश्चित्तनिमित्तानि तुलापुरुषादिमहादानप्रतिग्रहेषु इतरदानप्रतिग्रहेषु च पापानि बहूनि सन्ति, तेषां ब्रह्महत्यादिपापानामितरेषां च सर्वपुराणस्मृति-ज्योतिषवैद्यग्रन्थाऽऽगमेभ्यः श्रुतितश्च सङ्गृह्य तत्तत्प्रायश्चित्तं निश्चित्य ब्रुवन् तत्रादौ ब्रह्महत्याप्रायश्चित्तमाह लिङ्गपुराणे ।

प्रायश्चित्त विधिं वक्ष्ये श्रृणुध्वं सुसमाहिताः ।<br>
प्रायश्चित्तविशुद्धात्मा सर्वकर्मफलं लभेत् ॥<br>
प्रायश्चित्तविहीनस्तु यत्किञ्चित्कुरुते द्विजः ।<br>
तत्सर्वं निष्फलं याति न लभेत क्रियाफलम् ॥<br>
कामक्रोधविहीनैश्च धर्मशास्त्रविशारदैः ।<br>
विप्रैः स्वधर्मः प्रष्टव्यः स्वकर्मफललिप्सुभिः ॥

---

1. समपातकातिपातकयो रुपलक्षणम् ।

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखैः ।
निष्फलानि च विप्रेन्द्राः सुराभाण्डमिवापगाः ॥

ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ।
महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ।

संवत्सरं चरन्त्येतैः यावच्छय्यासनादिभिः ।
वसेच्च सह तं विद्यात् पतितं सर्वकर्मसु ॥

अज्ञानात् ब्राह्मणं हत्वा चीरवासा जटीभवेत् ।
स्वेनैव हतविप्रस्य कपालमपि धारयेत् ॥

तदभावे मुनिश्रेष्ठाः कपालं चान्यमेव वा ।
तद्द्रव्यं ध्वजदण्डेतु धृत्वा वनचरो भवेत् ॥

वन्याहारो भवेन्नित्यं एकाहारो मिताशन ।
सम्यक् संध्यामुपासीत त्रिकाल स्नानमाचरेत्
अध्यापनं चाध्ययनं वर्जयेत्संस्मरेद्धरिम् ।
ब्रह्मचारी भवेन्नित्यं गन्धमाल्यादि वर्जयेत् ॥

तीर्थान्युपविशेच्चैव पुण्यक्षेत्राणि यानि च ।
यदि वन्यैर्न जीवेत ग्रामे भिक्षां समाचरेत् ॥

शरावपात्रधारी स्याद् द्वारिस्थो विष्णुतत्परः ।
वदेच्च ब्रह्महास्मीति सर्वागाराणि पर्यटन् ॥

द्वादशाब्दं व्रतं कुर्यादेवं हरिपरायणः ।
ब्रह्महा शुद्धिमाप्नोति कर्मयोग्यश्च जायते ॥

गोनिमित्तं द्विजार्थं वा वार्यर्थं वा यदि म्रियेत् ।
ब्रह्महा शुद्धिमाप्नोति द्वादशाब्दव्रतेन च ॥

एतदज्ञानविषयम् ।

अथ ब्राह्मणो न हन्तव्यः इति ज्ञात्वाऽपि स्वयं भृत्यादिभिर्वा वैरनिमित्ततया ब्राह्मणं हन्यात् तन्निरासार्थं चतुर्विंशद्वर्षाणि पूर्ववत् व्रत कृत्वा शुद्धिमाप्नोति । तदाह गौतमः ।

योऽविप्रो ब्राह्मणं हत्वा ज्ञात्वा भृत्यादिभिर्यदा ।
चतुर्विंशतिवर्षाणि व्रतकृत् शुद्धिमाप्नुयात् ॥

राजकृत्यमाह लिङ्गपुराणे ।

पत्तने वा स्वराष्ट्रे वा यो विप्रो ब्रह्महा भवेत् ।
निमित्तैरुत वा स्वेन ग्रीवकर्षण पीडया ॥
आहूय त द्विजं पश्चात् श्रुत्वाविप्रैः शुभां गिरम् ।
ब्रह्महत्यां विनिश्चित्य वापयित्वा शिरोरुहान् ।
ब्रह्मसूत्रं द्विधाच्छित्वा पिशिताशनवाहनम् ।
आरोहयित्वा तत्काले शूलं तप्तमयं लिखेत् ॥
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजम् ।
स्तेये तु श्वपदं कार्यं वस्त्रावृतशिराः पुमान् ॥
एवं कृत्वा तु शास्त्रेण निर्वास्यो विषयाद्बहिः ।
अन्यथा दोषमाप्नोति राज्ञा यद्यनिराकृतः ॥
तत्क्षेत्रं बहुलं धान्यं पश्वारामादिकं च यत् ।
तत्सर्वं देवताप्रीत्यै राजा कुर्यात् यथार्हतः ॥
कृते ग्रामः परित्याज्यः त्रेतायां कुलमेव च ॥
द्वापरे तद्गृहं सर्वं कलौ कर्ता तु लिप्यते ॥

कलौ द्वादशाब्दचरणे अन्येषूक्तेषु प्रायश्चित्तेषु एवं कृतश्चेत् शुद्धिः ।

गुरुहत्या प्रायश्चित्तमाह लिङ्गपुराणे ।

जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।
श्वशुरश्चाग्रजो भ्राता पञ्चैते गुरवः स्मृताः ॥

गुरूणां जनकः श्रेष्ठः पूज्यात् पूज्यतमो हि सः ।
न हन्तव्यो न हिंस्यश्च यत्र कुत्रापि सर्वदा ॥

अज्ञानात् जनकं हन्यात् निमित्तैः बहुभिर्द्विजः ।
तस्योक्तं मरणान्तं हि प्रायश्चित्तं मनीषिभिः ॥
ज्येष्ठभ्रात्रादि हननेऽपि एवं वेदितव्यम् ।

गुरवो बहवः । नारदीये ।

मन्त्रोपदेष्टा वेदानां तथा धर्मविबोधकः ।
सन्मार्गदायी बुद्धीनामाचार्यो व्रतबन्धने ॥

पुराणसंहिता वक्ता नीतिशास्त्रोपदेशकृत् ।
निषेकादि श्मशानान्तं कृत्वाऽऽचार्य इतीरितः ॥

तेषु द्रोहं न कारयेत् । तेषामन्यतमं हत्वा चरेत् ब्रह्महणो व्रतम् ॥

क्षत्रियस्य विप्रहनने प्रायश्चित्तमाह । कूर्मे ।

अज्ञनात् बाहुजोविप्रं निमित्तैः पूर्वसम्भवैः ।
पश्चात्तापसमायुक्तो द्विगुणं व्रतमाचरेत् ॥

अज्ञानाद्गुरुजो हत्वा ब्राह्मणं दीक्षितं च वा ।
गुरुमाचार कर्मस्थं श्रोत्रियं वर्णिनं तथा ॥
आचार्यादिवधे चैव क्षत्रवद्व्रतमाचरेत् ।

इदमज्ञानविषयम् । ज्ञात्वाहनने द्विगुणव्रतम् ।

लिङ्गपुराणे । चतुर्थस्य

पादजो मुखजं हत्वा याजिनं श्रोत्रियं तथा ।
अंसे मुसलमादाय राजानं गतकल्मषम् ॥
तस्मै निवेदयेत्स्वीयं ततश्शुद्धिमवाप्नुयात् ।

ब्राह्मणस्य क्षत्रियहनने प्रायश्चित्तमाह । ब्रह्माण्डे

ब्राह्मणः क्षत्रियं हत्वा वीरहन्ता भवेत्तदा ।
गवां सहस्रं दत्वा तु शुद्धिमाप्नोति वै तदा ॥

विप्राणां वैश्यहनने ।

वैश्यहनने धेनूनां शतत्रयं दत्वा पञ्चगव्यं प्राश्नीयात् । शूद्रहनने धेनूनां शतं दत्वा पञ्चगव्यं प्राश्नीयात् । अत्र सर्वत्र पुनरुपनयनं कार्यम् ।

क्षत्रियस्य वैश्यहनने ।

बाहुजो वैश्यहनने धेनूर्दद्याद्द्विजातये ।
ततःशुद्धिमवाप्नोति कर्मार्हश्च भवेत्तदा ॥
ऊरुजः क्षत्रियं हत्वा धेनुदानं शतं विदुः ।
एतेषां शूद्रवधे धेनुदानं प्रायश्चित्तम् ॥
चण्डालादिहनने निष्कदानं प्रायश्चित्तम् ।

सुरापान प्रायश्चित्तम् । नारदीये—

गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
चतुर्वर्णैरपेया स्यात् तथा स्त्रीभिश्च पण्डितैः ॥
क्षीरं घृतं वा गोमूत्रमेतेष्वन्यतमं द्विजः ।
स्नात्वाऽऽर्द्रवासा नियतो नारायणमनुस्मरन् ॥

पक्वाग्निसन्निभं कृत्वा पिबेच्च कुडुबं तथा ।
तत्तु लोहेन पात्रेणाऽऽयसेनापि वा पिबेत् ॥
ताम्रेण वाऽथ पात्रेण तत्पीत्वा मरणं व्रजेत् ।
सुरापी शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥
अज्ञानात् जलबुध्या वा सुरापानं द्विजश्चरेत् ।
ब्रह्महत्याव्रतं सम्यक् तच्चिह्नपरिवर्जितम् ॥

सुरा एकादशविधाः, ता एवाह ।

ताळहिंतालजं चैव द्राक्षा खर्जुरसम्भवम् ।
मायूरं शैलमारिष्टमैरेयं नारिकेलकम् ॥
गौडी माध्वी च पैष्टी च मद्यमेकादशस्मृतम् ।
एतेष्वन्यतमं वाऽपि न पिबेद्वै कदाचन ॥
एतेष्वन्यतमं यस्तु पिबेदज्ञानतो द्विजः ।
तस्योपनयन भूयः तप्त कृच्छ्रत्रयं चरेत् ॥
यदि रोगनिवृत्यर्थमौषधार्थं सुरां पिबेत् ।
तस्योपनयनं भूयः तथा चान्द्रायणं चरेत् ॥
सुरास्पृष्टमन्नं च सुराभाण्डोदकं तथा ।
सुरापानसमं प्राहुः तदा चान्द्रस्य भक्षणम् ।

लिङ्गपुराणे ।

गौडी माध्वी तथा पैष्टी विज्ञेया त्रिविधासुरा ।
चतुर्वर्णैरपेयास्यात् स्त्रीभिस्साधं पिबेद्यदि ॥
ब्रह्महत्या व्रतं सम्यक् तच्चिह्नपरिवर्जितम् ।
पश्चात् ज्ञात्वा सुरा चेति पश्चात्तापसमन्वितः ॥

राजद्वारमुपागम्य सम्यक् राज्ञे निवेदयेत् ।
सभासमीपे राजानं जनसंघसमाकुले ॥

क्षीरं घृतं वा गोमूत्रं सुरां वा राजसन्निधौ ।
पक्वाग्नि सन्निभं कृत्वा स्वयमेव न चापरैः ॥

स्नात्वाऽऽर्द्रवासाः नियतो नारायणमनुस्मरन् ।
तां तु लोहेन पात्रेणाऽऽयसेनापि वा पिबेत् ॥

ताम्रेण वाऽथ पात्रेण तत्पीत्वा मरणं व्रजेत् ।
सुरापी शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥

सुरां यो वा द्विजः पीत्वा ह्यज्ञानात् दुग्धभ्रान्तिमान् ।
पश्चात्सुरेति बुद्ध्वा चेत् प्रायश्चित्तं समाचरेत् ॥

राजद्वारमुपागम्य राज्ञे सर्वं निवेदयेत् ।
राजाऽपि सम्यगालोच्य शास्त्रे दृष्ट्वा तु निष्कृतिम् ॥

क्षीरादिकं स्वगृह्याग्नौ पचेत्सम्यक् ततः परम् ।
पूर्वोक्तेन प्रकारेण पिबेत् शुद्धिमवाप्नुयात् ॥

द्विजो यदि सुरां पीत्वा रहः पुत्रादिषु स्थित ।
पश्चाद्दैवात्सुरापीति ज्ञात्वा पुत्रादय कथम् ॥
प्रायश्चित्तमिति शेषः ।

दिनत्रये सङ्गे एकदिनमुपोष्य पञ्चगव्य पिबेत् । दशरात्रसङ्गे एकदिनमुपोष्य पञ्चगव्यं च पीत्वाऽयुतगायत्रीजपं कुर्यात् । पक्षमात्रे प्राजापत्यानुष्ठानपूर्वकमयुतगायत्रीजपं कुर्यात् । मासमात्रसङ्गे चान्द्रायणानुष्ठानपूर्वकमयुतगायत्रीजपः ऋतुमात्रसङ्गे पञ्चगव्यं पीत्वा दशगोदानमाचरेत्, षण्मासमात्रसङ्गे

केशादिवपनपूर्वकं गवां शतं दद्यात्। संवत्सरसङ्गे तत्त्रयाः स्युः परिषदुपस्थापनपूर्वकं गोशतं विप्रेभ्यो दत्वा पुनरुपनयनं कार्यम्।

## अथ स्वर्णस्तेय प्रायश्चित्तम्।

लिङ्गपुराणे।

समक्षं वा परोक्षं वा बलात् चौर्येण वा पुनः।
योऽन्यस्य हरते वित्तं तमाहुः स्तेयिनं बुधाः॥

पारक्यं यत्सुवर्णं तन्महापापसमुद्भवम्।
तद्धृत्वा ब्राह्मणो यस्तु महापातकिनं विदुः॥

सुवर्णं रजतं ताम्रं पारक्यं यो हरेत् द्विजः।
स याति नरकं घोरं पुनरावृत्तिवर्जितम्॥

स्वर्णप्रमाणमाह।

गवाक्षेगतमार्तण्डरश्मिः मध्ये प्रदृश्यते।
त्रसरेणु प्रमाणं तु रज इत्युच्यते बुधैः॥

त्रसरेण्वष्टकं लिक्षा तत्त्रयं राजसर्षपम्।
राजसर्षपाष्टकं तु गौरसर्षपमुच्यते।
गौरसर्षपमानं तु तत्त्रयं यव उच्यते।
तत्त्रयं कृष्णलं विद्यात् माषं तत्पञ्चकं विदुः।

निष्कं तत्पञ्चकं तथा। माषषोडशमानं तु सुवर्णमिति कथ्यते। पलं सुवर्णाश्चत्वारः तच्चत्वारि ध्रुवो भवेत्।

चत्वारिंशत् ध्रुवं चैव भारइत्युच्यते बुधैः।
तत्सुवर्णं द्विजो हृत्वा द्वादशाब्दव्रतं चरेत्।

कपालध्वजहीनं तु ब्रह्महत्या व्रतं चरेत् ।
गुरूणां यज्ञकर्तृणां धर्मिष्ठानां तथैव च ॥

श्रोत्रियाणां द्विजानां तु हृत्वा हेम कथं भवेत् ॥
दग्धात्मदेहो देहे च सम्पूर्णं लेपयेदधृतम् ॥

कारीषाच्छादितो दग्धःस्तेयपापात्प्रमुच्यते ।
यद्वांऽसे मुसलं धृत्वा विसृज्यात्मशिरोरुहान् ।
गत्वा राजानमाचक्षेत् तेनैनं मस्तके क्षिपेत् ।
मृतः शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते ।

तदाहाऽऽपस्तम्बः ।

स्तेनः प्रकीर्णकेशोंऽसे मुसलमादाय राजानं गत्वा कर्मा-चक्षीत तेनैनं हन्यात् । वधे मोक्षः । आप-ध-सू-१-९-२५-४.

त्रसरेणुसमं हृत्वा प्राणायाम द्वयं चरेत् । लिक्षाप्रमाणे प्राणायाम त्रयम् । राजसर्षपमाने प्राणायामाश्चत्वारः । गौरस-र्षपमाने गायत्री सहस्रं जपेत् । यवमात्रस्तेये प्रातरारभ्याऽऽसाय गायत्रीं जपेत् । कृष्णलमाने सान्तपनम् । माषत्रयमाने गोमूत्र-पक्वयवभुक् देवार्चनपरायणः मासत्रयेणशुद्धः स्यात् । निष्कमा-त्रस्वर्णहरणे ब्रह्महत्या व्रतं कृत्वा षडब्दं शुद्धिमाप्नुयात् ।

किञ्चिन्न्यूनस्वर्णस्तेये गोमूत्रपक्वयवभुक्
अब्देन शुध्यति । स्वर्णस्य स्तेये पूर्वमुक्तम् ।
ब्रह्मस्वं क्षत्रियो हृत्वाऽश्वमेधेन शुध्यति ।
यद्वा । ब्रह्मस्वं क्षत्रियो हृत्वा पश्चात्तापसमन्वितः ।
पुनर्दत्वा तु विप्रेभ्यः त्रिरात्रं सान्तपनं चरेत् ।

लिङ्गपुराणे ।

सुरापानं वणिक् कृत्वा सुवर्णं वा द्विजन्मनाम् ।
क्षत्रवत् शुद्धिमाप्नोति शूद्रो मौषलमर्हति ।

अथ रजतस्तेयप्रायश्चित्तम् ।

अज्ञानात् रजतं हृत्वा पूर्वजो यदिदैवतः । तत् त्यक्त्वा पूर्ववद्राजन् शुद्धिमाप्नोति निश्चितम् ॥ महानारदीये ।

सुवर्णमानादन्यस्मिन् रजतस्तेय कर्मणि ।
कुर्यात्सान्तपनं सम्यक् अन्यथा पतितो भवेत् ॥

ताम्रस्तेये ।

मुखजो लोभतस्ताम्रम् पारक्यं वै शतं पलम् ।
स्तेयीति सद्भिः गद्यते तस्य नास्तीह निष्कृतिः ॥
पलद्वये पञ्चगव्यं पीत्वा शुद्धिमवाप्नुयात् ।
प्राजापत्यं पञ्चपले तप्तं दशपले स्मृतम् ॥
त्रिंशत्पले तु चान्द्रं स्यात् प्रायश्चित्तमुदीरितम् ।

षष्टिपले मासं कण्ठदघ्न जले स्थित्वाघमर्षणं जपेत् । अशीति-पले त्रिःपरिक्रमणं कृत्वा चान्द्रायणं चरेत् ।

शतपलं ताम्रम् हृत्वा स्वर्णस्तेय समं विदुः ।

वस्त्रस्तेये ।

वस्त्रं मुष्णाति यो विप्रः पारक्यं शास्त्रगर्हितम् ।
अज्ञानात् ज्ञानतो वाऽपि तस्य दोषो महानभूत् ॥
पश्चात्तापसमायुक्तः प्राजापत्यं समाचरेत् ।

## गुरुतल्पगमन प्रायश्चित्तम् ।

स्कान्दे ।

जननी च सपत्नी च राजपत्नी गुरोस्तथा ।
मातुलानी स्व भगिनी स्वश्रा ज्येष्ठस्य नायिका ॥

श्वश्रूः कनिष्ठ भार्या चाऽऽत्रेयी च पतिव्रता ।
एकादशसमा स्त्वेताः स्वमातृसम्मिताः स्मृताः ।

एतासु गमने स्वयमेव मुष्कं विच्छिन्द्य हस्ते गृहीत्वा नैऋऋतीं दिशं गच्छेत् मृतः शुध्येत् ।

### अथ राजदण्डमाह लिङ्गपुराणे ।

विचार्य मातृगं विप्रं स्वयमेव न चारतः ।
भगाकारमयस्कृत्वा तापयित्वा हुताशने ।
लेपयेत् तस्य वीर्येण ललाटे मातृगामिनः ।
लेखयेद्बलवद्भृत्यैः ललाटे मातृगामिनः ॥ (पाठान्तरम्)

आरोहयेद्रासभं यानं पन्थानं नयते जनैः ॥
तद्वित्तं पूर्ववत् हृत्वा धर्मव्ययमथाचरेत् ।
तत्पत्नीष्वथवा दद्यात् तासु दोषो न संस्मृशेत् ॥

अटित्वा नगरीं सर्वां जनोऽयं गुरुतल्पगः ।
इत्युच्चैः भाषयन् भृत्यैः पुरद्वारमुपागमन् ॥
मुष्कं छिन्द्यात् तदा तीक्ष्ण धारयाह्यसिनाद्रुतम् ।
गच्छन्प्राणान् परित्यक्त्वा मृतः शुद्धिमवाप्नुयात् ॥

अथ महापातकि संसर्गप्रायश्चित्तम् ।

तदुक्तं मार्कण्डेयेन ।

ब्रह्महत्यादि पापकृतां सङ्गमे प्रायश्चित्तम् । पञ्चरात्रसंसर्गे कृच्छ्रत्रयम् । द्वादशरात्रसंसर्गे सान्तपनम् ।

मासससंसर्गे पराकम् । चान्द्रं मासत्रये ।
षण्मासे चान्द्रत्रयम् । अब्दस्यद्विगुणं प्रोक्तम् ।
यस्तु संवत्सरं त्वेतैः शयनासनभोजनैः ।
संवसेच्चेदिमं विद्यात्पतितं सर्वकर्मसु ॥
महापातकिनः त्याज्याः सर्वदा विप्रसत्तमैः ।

इदं ज्ञानविषयम् ।

गोवधप्रायश्चित्तम् (उपपातकम्) ।
सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः ।
तथाचतुष्पदां चैव गौर्मातेति प्रगीयते ॥
विप्रहत्या च गोहत्या सममेतद्द्वयन्नृणाम् ।
विप्रा यज्ञाश्च गावश्च पुनन्ति पृथिवीमिमाम् ।
गोहिंसां यो नरः कृत्वा निष्कृतिस्तस्य नास्ति हि ।
पश्चात्तापसमायुक्तः पराकं कृच्छ्रमाचरेत् ।
अकामतः पराकं स्यात् ज्ञात्वा चान्द्रायणं स्मृतम् ॥

वृषभहनन प्रायश्चित्तम् । कूर्मपुराणे ।

एकादशेऽह्नि सम्प्राप्ते पित्रोर्मरणसम्भवे ।
पैशाचत्वविमुक्त्यर्थं उत्सृष्टो यो वृषः परैः ॥
हन्यते यदि राजेन्द्र अङ्कितः शिवमुद्रया ।
शिवद्रोहीति विख्यातः सर्वधर्मबहिष्कृतः ॥

मृत्वा नरकमासाद्य चण्डालत्वमवाप्नुयात् ।
तस्यैव निष्कृतिर्नास्ति कारीषदहनादृते ॥

स्कन्दपुराणे ।

वृषं हन्याद्यदा विप्रः केदारक्षेत्र भक्षणात् ।
परप्रेरणया वाऽपि अरण्ये ग्राम एव वा ॥
रज्वादिभिश्च तं बध्वा वृषहन्तेति घोषयन् ॥
अटित्वा नगरीं सर्वां निर्वास्यो विषयाद्बहिः ।

अथ गजवधप्रायश्चित्तमाह लिङ्गपुराणे ।

सहायैः साधनोपायैः वाग्भिर्वा विप्रसत्तमः ।
अरण्ये वाऽध्वमध्ये वा हन्याद्योह्यविचारयन् ।
पश्चान्नरकमाप्नोति जायते गजचर्मवान् ।
तद्दोषपरिहारार्थं तप्तकृच्छ्रं चरेत् बुधः ।

अथ अश्ववध प्रायश्चित्तमाह स्कान्दे ।

अश्वहन्ता भवेद्विप्रः लोके वेदे च निन्दितः ।
पूर्वोक्तैर्वा निमित्तैश्च सहायैर्वाऽर्थ साधनैः ॥
स विप्रो नरकं याति कालसूत्रं सुदारुणम् ।
तस्यैव निष्कृतिरियं व्यासेन परिपाठिता ॥
स्वयं हन्यात् षडब्दं स्यात् निमित्तैरर्धमीरितम् ।
तदर्धं वडवायां च तदर्धं गर्भमोचने ।

उष्ट्रवध प्रायश्चित्तमाह स्कान्दे ।

पत्तने वा वने राजन् प्रमादाद्वाक्रमेलकम् ।
हत्वा पश्चात्तदा ज्ञात्वा रौरवं नरकं व्रजेत् ॥

तदन्ते भुवमासाद्य कुत्सितं देहमाप्नुयात् ।
तद्दोषपरिहारार्थं प्राजापत्यत्रयं चरेत् ।
एतत्सहायमात्रे । स्वयं हनने विशेषमाह ।
तत्पापस्य विशुद्ध्यर्थं अब्दं कुर्यात्प्रयत्नतः ।

खरवधे प्रायश्चित्तं मार्कण्डेयपुराणे ।

अज्ञत्वा पशुबुद्ध्या वा विप्रो हन्यात्खरं मुदा ।
निमित्तैः सङ्गदोषाद्वा सहायैर्जनचोदितैः ॥
अन्धकारे महाघोरे पश्चात् ज्ञात्वा महाखरम् ।
यदि मत्वा स पापी स्यात् लब्ध्वा दोषं महत्तरम् ॥
चण्डालत्वमवाप्नोति त्रिषु जन्मसु भूमिप ।
तस्यैव निष्कृतिर्दृष्टा मुनिभिः ब्रह्मवादिभि. ॥
स्वयं हत्वाऽथ चान्द्रं स्यात्पराकं सह सङ्गतः ।
निमित्तैर्यावकं प्रोक्तं अङ्गीकारे सुवर्चसम् ॥
सुवर्चसम् - पञ्चगव्यम् ।
राजा हन्यात् खरं मोहात् भृत्यैर्वाऽन्यैः प्रमादतः ।
तस्य देह विशुद्ध्यर्थं पराकं परिकीर्तितम् ॥

महिषीवधप्रायश्चित्तमाह लिङ्गपुराणे ।

महिषीं यो द्विजो राजा वणिक् पादज एव वा ।
हन्यात् दण्डादिभिः क्रूरैः निमित्तैरुत वा स्वयम् ॥
स महानरकं याति कालसूत्रं सुदारुणम् ।
तदन्ते भुवमासाद्य लालावदनवान् भवेत् ॥
तद्दोषशमनायालं महासान्तपनं विदुः ।
पञ्चगव्यविधानेन पञ्चगव्यं पिबेत्ततः ॥

महिषवधप्रायश्चित्तमाह मार्कण्डेये ।

महिषं कामकारेण रज्वा दण्डाश्मपातनैः ।
यो विप्रो वनमध्ये वा गृहदाहे जलाशये ।
विहन्यात् दुष्टसङ्गाद्वा ह्यन्धकारागमे निशि ॥

स विप्रो नरकं गत्वा भिल्लजन्ममवाप्नुयात् ।
तस्यैव निष्कृतिरियं दृष्टा श्रुति परायणैः ॥
अज्ञानात् तप्त कृच्छं स्यात् प्राजापत्यं निमित्तत ।

अजवध प्रायश्चित्तमाह महाराजविजये ।

अजबस्तौ द्विजो हन्यात् कारणेन विना नृप
नरकं चानुभूयाशु ततः श्वा जायते कलौ ॥

यज्ञार्थं हन्ति यो विप्रो ह्यजं मेष सुपुण्यधीः ।
स याति ब्रह्मणः स्थानं पुनरावृत्ति वर्जितम् ॥
कारणेन विना राजन् अजं बस्तं न हिंसयेत् ।

अथ द्रुमच्छेद प्रायश्चित्तम् गौरीकाण्डे ।

इन्धनार्थं द्रुमच्छेदः ग्रामे वाऽरण्यमध्यतः ।
कृष्यर्थं वा नरश्रेष्ठ सयाति नरकं ध्रुतम् ।

एतत्साधारणवृक्षविषयम् । यज्ञियवृक्षच्छेदने विशेषमाह ।

वैकङ्कतश्च खदिरः किं शुकोऽश्वत्थ एव च ।
औदुम्बरश्च न्यग्रोधः शमी बैल्वः तथैव च ॥

श्लेष्मातकश्च सरलः एते यज्ञिय वृक्षकाः ।
कृष्यर्थं यज्ञपात्रार्थं यश्छिन्द्यात् कूटजं सकृत् ॥

तस्यैव निष्कृतिरियं कथिता मुनिसत्तमैः ।
इन्धनार्थं द्रुमच्छेदे प्राजापत्यं प्रकृच्चरेत् ॥

कृष्यर्थं वृक्षहा पापी प्राजापत्य द्वयं चरेत् ।
कृष्यर्थमिन्धनार्थं वा यज्ञवृक्षविभेदकृत् ॥
पराकं तत्र कुर्वीत शुद्धो भवति वृक्षहा ।

तटाकच्छेदे प्रायश्चित्तमाह । देवलः ।

बहुधान्योद्भवे राजन् तटाकस्य विभेदने ।
ब्रह्महत्याव्रतं कृत्वा पुनः संस्कारमाप्नुयात् ॥

अल्पात्यल्पतटाकच्छेदे ब्रह्महत्यादिव्रतोक्तं अर्धं पादंच क्रमेण योजयेत् नात्र पुन संस्कारः । तथाह मनु ।

अत्यल्पाल्पतटाकेषु छेदने पूर्वजो महान् ।
पुनः संस्काररहित कृच्छ्र पादमथापि वा ।

अथ अनाश्रमिणः प्रायश्चित्तमाह कुमारविजये ।

ब्रह्मचारी गृहस्थस्तु वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमा स्त्वेते पञ्चमो नोपपद्यते ॥

वानप्रस्थाश्रमस्त्वेषां कलौ नास्तीह दुस्तरे ।
आश्रमास्त्रिविधा राजन् परलोकप्रदायिनः ॥

ब्रह्मचारी ब्रह्मचर्यं कृत्वा दारान् समुद्वहेत् ।
कुर्याद्यागादिक कर्म प्रत्यहं पापशङ्कया ॥

नत्यजेत् इह कर्माणि त्यक्त्वा पापं समश्नुते ।
स्नानं सन्ध्या जपं होमं ब्रह्मयज्ञं च तर्पणम् ।
औपासनं देवपूजा वैश्वदेवं तथाऽतिथिम् ॥

सायं सन्ध्यां तथा होमं धर्मशास्त्रविचारणम् ।
एवं गृही सदा कुर्यात् सर्वान् कामानवाप्नुयात् ॥

परलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ।
अतः परं तु संन्यासः कार्यो विद्वद्भिरादरात् ॥

न काञ्चनं प्रगृह्णीयात् नैकभिक्षां समाश्रयेत् ।
न कुर्यात् लोकवार्तां वा प्रणवं नित्यमाचरेत् ॥

एवं यः कुरुते नित्यं परं निर्वाणमश्नुते ।
गृहस्थस्य यदा राजन् पत्नीनाशो भवेद्यति ॥

तदा प्रभृत्ययं विप्रः अनाश्रम इतीरितः ।
दानव्रतेषु श्राद्धेषु नित्यकर्मसु वा पुनः ॥

नाधिकारो भवेत्तस्य तस्मादुद्वाहयेत्पुनः ।
पञ्चाशद्वर्षादूर्ध्वं तु विवाहो न समीरितः ॥

तदाह गौतमः ।

पञ्चाशद्वत्सरादूर्ध्वं न ग्राह्यं पाणिपीडनम् ।
कलौ युगस्य दुष्टत्वात् त्याज्यमाहुः मनीषिणः ॥

युवानं प्रीणयेन्नारी स्वय जीर्णापि सर्वदा
व्यभिचारात्कुलं नश्येत् कुलनाशात्कुलाङ्गना ॥

भ्रश्यते सङ्करात् राजन् सङ्करो नरकाय वै ।
सङ्करान्ननिवर्तन्ते तस्माद्गर्हन्ति पण्डिताः ॥

तस्मादनाश्रमे वासो न स्थातव्यो द्विजातिभिः ।
अग्निहीनो यदा विप्रः पतिहीना यथाङ्गना ॥

न तयोः भाषणं कुर्यात् न पश्येत्सर्वकर्मसु ।
अनाश्रमस्य यावन्ति दिनानि मुनिसत्तमाः ॥

मासि मासि गतान्यत्र गणयित्वा तदा द्विजाः ।
तावत्कृच्छ्रान् प्रकुर्वीरन् यद्यशक्तो भवेत् तदा ॥

तावन्ति पुत्राः कुर्वीरन् कृच्छ्राणि श्रद्धया पुनः ।
एवं कृत्वा तु ये पुत्रा स्सत्पुत्रा इति गम्यते ।
तत्पिता लोकमाप्नोति गयायां पिण्डदानतः ।

भृतकाध्यापने प्रायश्चित्तमाह ब्रह्माण्डपुराणे ।

वेदमूल्यं धनमिदं मासि मासि द्विजोत्तमः ।
गृहीत्वा यः पठेद्वेदं भृतिं दत्वा तु संविदा ॥

तद्गृहीत्वा द्विजो यस्तु प्रत्यक्ष पठते श्रुतिम् ।
स विप्रो भृतकाध्यायी सर्वकर्मबहिष्कृतः ॥

लिङ्गपुराणे ।

मासि मासि गृहीत्वा यः मूल्यं यत्परिभाषितम् ।
भृतकं तद्विजानीयात्परलोकविगर्हितम् ॥

स वै नारायणद्रोही सर्वदा सूतकी भवेत् ।
न योऽर्ग्यो हव्यकव्येषु न दानेषु मुनीश्वर ॥

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः ॥

जाबालिः ।

अब्दं यो भृतकं कृत्वा वेदपाठं द्विजातये ।
तस्य चान्द्रायणं प्रोक्तं शाखाभावे प्रपूरणे ॥

अब्दद्वये चान्द्रचतुष्टयम् । अब्दत्रये चान्द्रषट्कम् । अत ऊर्ध्वं न शुद्धि. स्यात् ब्रह्महा परिकीर्तितः ॥

अतः परं ब्रह्महन्ता ललाटे तापवर्जितः ।
ब्रह्महत्या व्रतं कुर्यात् कपालध्वजवर्जितः ॥
ततः शुद्धिमवाप्नोति वेदहन्ता न चान्यथा ।
तथैव भृतकाध्यायी कल्पपादपसंगृही ॥
हिरण्य-धेनु हर्ता च हिरण्याश्वप्रतिग्रही ।
प्रायश्चित्तादिकं कृत्वा पुनः कर्म समाचरेत् ॥

भृतकाध्ययन प्रायश्चित्तम् ।

ब्रह्मवैवर्ते ।

शिष्यो यस्तु धनं धृत्वा भृतकं पूर्ववद्वहेत् ।
शाखासमाप्तिपर्यन्तं स चण्डालसमो भवेत् ॥

अधीत विस्मृति प्रायश्चित्तम् ।

वेदान्तं मन्त्रशास्त्रं वा वेदं वा तत्त्वमेव वा ।
ब्रह्मबन्धु सयोविप्रः विस्मृत्य यदि वर्तते ॥
सर्वेण चाभिमानेनैश्वर्यमदवत्तया ।
सद्यो वै नरकस्थायी पतितस्सर्वकर्मसु ॥

प्रत्यहं गोवधदोषमाप्नोति, मासमात्रे पराकः, मासत्रये तप्तम्, ऋतुत्रये चान्द्रम् । अब्दे औद्दालकम् । वर्षद्वये पतितः ।

स विप्रो नरकं याति नरकाद्धीनजातिमान् ।

मासि प्राजापत्यं, मासद्वये पराकं, मासत्रये चान्द्रायणं षण्मासे तु षडब्दं स्यात् वत्सरे तद्द्विगुणम् ।

अथ गुर्वधिक्षेपप्रायश्चित्तमाह पद्मपुराणे ।

जनिता चोपनेताच यश्चविद्यां प्रयच्छति ।
श्वशुरश्चाग्रजो भ्राता पञ्चैते पितरः स्मृताः ॥

एते वै गुरवो लोके पूज्या वन्द्याश्च सर्वदा ।
एतेभ्यो नापकुर्वीतैतद्वाक्यं न लंघयेत् ॥

नारदः। गुरु त्व कृत्य हु कृत्य यो वदेन्मूढधीर्नरः ।
अरण्ये निर्जने देशे भवन्ति ब्रह्मराक्षसाः ॥
तद्दोषपरिहारार्थं नाचिकेत व्रतं चरेत् ।

अज्ञाने प्रायश्चित्तमाह मार्कण्डेयपुराणे ।

विप्रस्तु सत्कुले भूत्वा वेदशास्त्राधिकारवान् ।
अयं गुरुरियं माता ज्योष्ठोऽयं मातुलोऽपि वा ॥

अयं विद्वानिदं शास्त्रं आचारो श्रुतिचोदितः ।
देवोऽयं दैवतं चेदमिदमित्थमियं नदी ॥

इतीव सर्वं सहसा यो न जानाति पूर्वजः ।
उन्मत्त इव वर्तेत सोऽह्यज्ञः प्रकीर्तितः ॥

तस्यैव रिष्कृतिर्दृष्टा मुनिभिर्धर्मवित्तमैः ॥
प्रत्यहं दोषशान्त्यर्थं महापातकनाशनम् ॥
तण्डुलान्प्रस्थमात्रेण पाचयित्वा चरुं मुदा ।

भक्षयेत् देवतोद्देशं मण्डलेन विशुध्यति ॥
अन्यथा दोषमाप्नोति यथा शूद्रः तथैव सः ।

अथ अपण्यविक्रय प्रायश्चित्तम् । शिवपुराणे ।

तण्डुलांश्च तिलान्माषान् फल पुष्प तथा गुडम् ।
नागवल्ली तथा पूगश्चूर्ण कर्पूरमेव च ॥
कस्तूरी कुङ्कुमं मूत्रं दुग्ध दधि घृतं तथा ।
कृष्णाजिनं च रुद्राक्षं ब्रह्मसूत्रं कमण्डलुम् ॥
ताम्रं कांस्यं तथा वस्त्र कम्बलं रोचनं तथा ।
लवणं तिन्त्रिणीशाकं पक्वमन्नं जनेश्वरः ॥
इमान्यपण्यानि विप्राणामेतेषां क्रयविक्रये । दोषः ॥

महोल्को भवति । महानारदीये ।

कार्पास-ताम्र-कांस्यानां त्रपु-सीसाऽयसामपि ।
विक्रये नरकं प्राप्य पाश्चात्यो जायते नरः ॥
स्वारामसम्भवान्क्रीत्वा उचितव्ययमाचरेत् ।
धनस्य सङ्ग्रहार्थ तु द्विगुणं कृच्छ्रमाचरेत् ॥
उचितव्ययसिद्ध्यर्थं गव्यं विप्रो न विक्रयेत् ॥
षाण्मासं लोभन. कृत्वा शूद्रो भवति निश्चयः ।
तत्र क्रीत्वा द्विजगृहे पैतृकादीनि सञ्चरेत् ॥
भोक्तारो दोषवन्तस्ते कर्तास्यात्पातकी भुवि
रौरवं नरकं याति विप्रो यद्यन्नविक्रयी ॥
तस्योपनयनं भूयः कृत्वा शुद्धिमवाप्नुयात् ।

अथ निन्दितार्थोपजीवन प्रायश्चित्तम् । कूर्मपुराणे ।

अश्वो धेनुर्मनुष्यश्च रासभः कुञ्जरस्तथा ।
कन्या नारी मेषबस्तौ पुस्तकं ब्रह्मसूत्रकम् ॥

लवणं पललं चर्म लशुनं गृञ्जनं तथा ।
ओषधानि च यावन्ति मत्स्य कुक्कुट सूकरान् ॥
हिङ्गुजीरकवस्त्राणि ताम्रकांस्यादिकं तथा ।
एतान्मूल्यैः द्विजः क्रीत्वा सुलभैः मूल्यसंख्यया ॥
तेभ्यश्च द्विगुणैर्मूल्यैरल्पमूल्यैरथापिवा ।
विक्रवित्वाऽऽत्मभरणं कुर्याद्यदि स पापभाक् ॥
मृत्वा नरकमासाद्य क्रिमिकूपे पतत्यधः ।
तस्मादेतद्विशुध्यर्थं प्रायश्चित्तमिहोच्यते ॥
तप्तं पराकं चान्द्रं च यावकं वर्षमाचरेत् ।
तस्योपनयनं भूयः पञ्चगव्येन शुध्यति ॥

वृथा कृषीवलस्य प्रायश्चित्तमाह लिङ्गपुराणे ।

वत्सरस्याग्निहोत्रार्थं कुटम्बभरणाय च ।
यावता धान्यजातेन तावता कृषिमाचरेत् ॥
धान्ये गृहागते पश्चात् भाग विंशतिमव्ययम् ।
कृत्वाऽतिथिभ्यः सत्कारी वैश्वदेवपरायणः ॥
दर्शश्च पूर्णमासश्चाग्निहोत्रं दिने दिने ।
संवत्सरे पशून्कृत्वा शुद्धिमाप्नोति पूर्वजः ॥
कृषिदोषेण महता कदाचिन्न विलिप्यते ।

अन्यथा दोषमाह मार्कण्डेयः ।

वृथा कृषि द्विजः कृत्वा धान्यं तद्विक्रयीत वा ।
भोगार्थं सञ्चयार्थं वा महापापं समश्नुते ॥
वत्सरे धान्य विक्रेता कृषि कृत्वाऽथ यो द्विजः ।

तस्य देह विशुध्यर्थं वत्सरे चान्द्रमीरितम् ॥
द्वितीये द्विगुणं प्रोक्तं तृतीये पतितो भवेत् ।

पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति । निन्दितात् धनाऽऽदान-प्रायश्चिम् । मार्कण्डेय पुराणे ।

ब्रह्महा च सुरापी च स्तेयी गुर्वङ्गनागमः ।
महापातकिनश्चैते तत्संसर्गी च पञ्चमः ॥

कुण्डश्च गोलकश्चैव तथा सोमलताक्रयी ।
परिवित्तिः परिवेत्ता परिविन्नश्च वै तथा ॥

शूद्रापति द्विजश्चैव कानीनो वृषलीपतिः ।
तथैव भृतकाध्यायी तुलास्वीकृतिमान्नरः ॥
तुलास्वीकृतिः, षोडशमहादानोपलक्षणम् ।

दुश्चर्माक्षयरोगीच कुनखी श्यावदन्तकः ।
गणकः चारुवाकश्च गायको नर्तकस्तथा ॥

परदाराभिगामी च भिषक् देवलकस्तथा ।
एते वै निन्दिता राजन् हव्यकव्येषु सर्वदा ॥

असंभाष्या सदाविप्रैः परलोक परायणैः ।
एतेभ्यो याचनाद्राजन्नुत पण्यपरिग्रहात् ॥

यागार्थं नित्यकामार्थं न प्रतिग्रहमाचरेत् ।
दृष्ट्वा मार्तण्डमालोक्य सम्भाष्य द्विजपुङ्गवम् ॥

स्पृष्टवा सचेलस्नायी च चान्द्रं धान्यपरिग्रहे ।
सहैव भोजनं कृत्वा चान्द्र द्वयमुदीरितम् ॥

वार्धुष्यजीवनप्रायश्चित्तम् । नृसिंहपुराणे ।

वृद्धेरपि च या वृद्धि चक्रवृद्धिरुदाहृता ।
मासेमासे च या वृद्धिः साशिखा वृद्धिरुच्यते ।
ताभ्यां जीवेत् यदा विप्रः स वार्धुषिक उच्यते ॥

पैतृकादीनि कर्माणि देवकार्याणि यानि च ।
तानि सर्वाणि विप्रेन्द्र निष्फलं यान्ति सर्वदा ॥

धर्मशास्त्रविरोधेन जीवयेद्यति पूर्वजः ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।
धर्मो विप्रस्य पाथेयः स्वर्गारोहणकर्मणि ॥

तस्मादिदं परित्याज्यं वार्धुष्यं विप्रसत्तमैः ।
तस्यैव निष्कृतिर्दृष्टा पाराशार्येण चक्षुषा ॥

मासे पराकं, मासद्वये तप्तं, मासत्रये चान्द्रम् ।
षाण्मासे महाचान्द्रं, संवत्सरे द्विगुणम् ।
पतित स्यात् परं विप्रः सर्वकर्म बहिष्कृतः ।

ततः वार्धुषिकजीवने पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति ।

अथ हिंसायां प्रायश्चित्तं । गौरीकाण्डे ।

मनुष्यपशुपक्ष्यादि हिंसने यत्र कुत्रचित् ।
मार्गेऽरण्ये जलेवाऽपि पर्वते चैत्यवृक्षके ॥

देवालये सभायां च हिंसार्थं यन्त्रधारणम् । यन्त्रस्वरूपमाह ।

गजबन्धने भुवः खननम् । अश्व पशु मनुष्यबन्धने मार्गेषु भ्रमनिर्माणम् । अरण्ये पशु-पक्षि हिंसानार्थं जालवागुराऽऽस्त-

रणम् । पर्वतेषु व्याघ्र-भल्लूक-वराहादि हिंसार्थं दाहः । जलेषु मनुष्य हननार्थं शङ्कादिस्थापनं गृहे मूषिक हननार्थं फलकादि-यन्त्रविधानं वृक्षेषु शुक-शारिकादिहनने ग्रीवारज्वादिकरणं एतानि यन्त्रविधानानि शास्त्रगर्हितानि । एतानि द्विजः सङ्ग-दोषात् स्वयं वा कृत्वा नरकमाप्नोति ।

तदेतद्दोषशुध्यर्थं पराकद्वयमीरितम् ।
संवत्सरात्परं राजन् चान्द्रद्वयमुदाहृतम् ॥
ततः परं न शुद्धोऽपौ यथा व्याधः तथैवसः ।

संवत्सरात्परं विप्रस्य यन्त्र निर्माणे पतित प्रायश्चित्तं कृत्वा शुद्धिमाप्नोति । इत्युपपातकप्रायश्चित्तप्रकरणम् ।

## अथ सङ्कलीकरणप्रायश्चित्तम् ।

ब्रह्माण्डपुराणे । मनुष्यविक्रये ।

अज्ञातकुलनामानमन्यदेशादुपागतम् ।
ब्राह्मण क्षत्रियं वाऽपि वैश्य पादजमेव वा ॥
भ्रामयित्वा नरं विप्रः त्वौषधादिभिरादरात् ।
विक्रयित्वा नरः पापी जीवयेद्यदि मोहतः ॥
महापातकिसंज्ञः स्यात् मृत्वा नरकमश्नुते ।
न तस्य निष्कृतिश्चास्ति ब्रह्महत्यां च विन्दति ॥
एतेषां विक्रयं कृत्वा सहस्रं कृच्छ्रमाचरेत् ।
स्त्रीणां मनुष्यविक्रये तत्प्रायश्चित्तार्धम् ॥

## अथात्मविक्रयप्रायश्चित्तम् । स्कन्दपुराणे ।

पानभक्षः स्त्रियश्चैव मृगया चोग्रदण्डनम् ।
अतीव परुषं वाक्यं सर्वस्वं दानमेव च ॥

एतानि सप्त व्यसनानि । अथापराणि व्यसनसमानि ।

अनृतं गन्धपुष्पाणां सेवनं दोषचारणम् ।
सदा ताम्बूलवस्त्राणां सेवनं दोषसाधनम् ॥

ऋणं कृत्वा घृतं पीत्वा प्रत्यहं भोजने स्पृहा ।
स्वस्याऽकिञ्चिन्यमज्ञात्वा ऋणं कृत्वा व्ययं चरेत् ।
एवं भोग समासक्तः स्वात्मानं विक्रयेद्यदि ॥

नित्यकर्माणि काम्यानि इष्टापूर्तादिकानि च ।
सर्वं तस्यैव भवति निष्फलं स्वयमेव च ।
हिरण्यगर्भप्रतिग्रहप्रायश्चित्तवत्सर्वं कुर्यात् ॥

अथ सुतविक्रयप्रायश्चित्तम् । कूर्मपुराणे ।

यो विप्रो धन लोभेन स्वसुतं विक्रयेद्यदि ।
स वै पिशाचतां याति यावदाभूतसम्प्लवम् ॥

लिङ्गपुराणे ।

गृहदाहो दारनाशः देहपीडा सुतात्मनोः ।
राजा हरति सर्वस्वं पशवश्चोरनाशिताः ॥
बान्धवैश्च परित्यागो ह्यन्नवस्त्रविहीनता ॥

अष्टौ कष्टा इमे राजन् सम्भवेष्वेषु मानवः ।
सुतं न विक्रयेत् पापी स वै पैशाचजन्वान् ॥

अहो कष्टमहो कष्टमहो कष्टं दरिद्रता ।
तथापि पुत्र दाराणां बाहुल्यमतिकष्टता ॥

औरसं वाऽन्यपत्नीजं न द्विजो विक्रयं चरेत् ।
स एव नरकं गत्वा पिशाचत्वमवाप्नुयात् ॥

तद्दोषपरिहारार्थं महासान्तपनं चरेत् ।
बाले सान्तपनं प्रोक्तं पौगण्डे तद्द्वयं स्मृतम् ।
कौमारे प्रौढकाले च महासान्तपनं स्मृतम् ॥
तत्स्त्रीणां च तदर्धं स्यात् ।

**अथ पत्नीविक्रये प्रायश्चित्तम् । देवस्वामी ।**

पूर्वोक्तेष्विह कष्टेषु महदापत्सु भूमिप ।
न पत्नीं विक्रयेद्विप्रः दुष्टामपि सतीमपि ॥
यदि विक्रीयते तत्र महान्तं नरकं व्रजेत् ।
पुनर्भुवमुपागम्य दारहीनो भवेद्भुवि ।
एतद्दोष विशुध्यर्थं पराकं चान्द्रमेव च ॥

**अथ मातृविक्रये शिवपुराणे ।**

मातरं वा सपत्नीं वा भगिनीं भ्रातृयोषितम् ।
पितृव्यपत्नीं विधवां स्नुषां मातुलयोषितम् ।
न विक्रयेत् द्विजो लोभात् मृत्वा नरकमश्नुते ।
महासान्तपनं चान्द्रं षडब्दं भूपरिक्रमः ।

**अथ पुत्रीविक्रयम् ।**

विवाहोर्ध्वं विवाहात्प्राक् कन्यां गौरीमथापि वा ।
रोहिणी वा पुष्पिणी स्यात् यो विप्रः कन्यकाधनम् ॥
विवाहार्थमिति व्याजं कृत्वा स्वीकरणं चरेत् ।
पतितो नरकं याति स्वयं पत्नीसमन्वितः ॥
रौरवे नरके घोरे वसत्याऽऽचन्द्रतारकम् ।
अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ॥
दशवर्षाभवेद्गौरी अतऊर्ध्वं रजस्वला ।

क्रयक्रीताऽपि या नारी न सा पत्न्यभिधीयते ।
न योग्या हव्यकव्येषु दासीं तां मुनयो विदुः ॥
रोहिणीविक्रये राजन् महाचान्द्रायणं स्मृतम् ।
गौरी विक्रये तात महासान्तपनं स्मृतम् ।
रजस्वलाविक्रयणे कारीषवध एव हि ॥

कन्यादाने विशेषफलमाह मार्कण्डेयः ।

सम्बन्धिनं माणवकं श्रोत्रियं व्याधिवर्जितम् ॥
आहूय दानं तस्मै तां व्रतस्नातकशुद्धये ।
मातृतः पितृत, श्चैव सप्त सप्त च सप्त च ।
पितॄनुद्धरते पूर्वं पश्चात् ब्रह्मणि लीयते ॥

अथ धेनुविक्रये निष्कृतिः शिवपुराणे ।

संपाद्य बहुधा यत्नैः धेनुं विप्रः प्रतिग्रहात् ।
विक्रयेद्यदि मूढात्मा रौरवं नरकं व्रजेत् ॥
तस्य निष्कृति रियं गोसूक्तं मण्डलं जपेत् ।
आसायं प्रातरारभ्य मण्डलेन विशुध्यति ।

अथ गजविक्रये प्रायश्चित्तम् । कूर्मपुराणे ।

गजं क्रीत्वा तु धृत्वा वा व्यवहारतया द्विजः ।
विक्रयेद्यति लोभात् च महानरकमाप्नुयात् ।
तस्य निष्क्रयणार्थं च दश तप्तं समाचरेत् ॥

अथ अनड्वाहविक्रये प्रायश्चित्तम् । मार्कण्डेयः ।

अनड्वाहं यदा विप्रः विक्रयेद्यदि मोहितः ।
द्रव्यलोभेन महता ह्यसिपत्रं सुदारुणम् ॥

तस्य दोषोपशान्त्यर्थं तप्त कृच्छं समाचरेत् ।
पोषयित्वा गृहे वत्सं स्वधेनूदर सम्भवम्
तं विक्रयित्वा मोहेन कुर्याच्चान्द्रायणं बुधः ।

अथ महिषीविक्रये प्रायश्चित्तम् । ब्रह्माण्डपुराणे ।

महिषीं पोषयित्वा तु स्वगृहे पुत्रवत्सदा ।
विप्रो यदीह तां पश्चात् विक्रयेत् पापधीर्नरः ॥

स याति नरकं घोरं कङ्कोलं नाम नामतः ।
गृहजां विक्रयेद्राजन् तस्य चान्द्रायणं स्मृतम् ॥
तत्स्त्रीणां तु तदर्धं स्यात् क्षत्रियाणां द्विजोक्तवत् ।

महिष विक्रये ।

महिषं स्वगृहे जातं विक्रयेत्पूर्वजो यदि ।
नरकं सोऽनुभूयाशु हीनजातिः भवेत् भुवि ॥

महिषविक्रयप्रायश्चित्तमनड्वाहवदुन्नेयम्
अजं बस्तं द्विजो यस्तु सम्पाद्य बहुमूल्यतः

पश्चात्तौ विक्रयेत् मूल्यात् नरक याति दारुणम् ।
तत्पाप परिशुध्यर्थं प्राजापत्यं समाचरेत् ।।

हरिणीविक्रये ।

अरण्यजां वा गृहजां विप्रोयदिह विक्रयेत्
हरिणीं द्रव्यलोभेन स याति ब्रह्महन्तृताम् ॥

तत्पापशोधनार्थाय निष्कृतिं प्राह पद्मभूः ।
रहः स्थानमुपाविश्य स्वगृह्याग्नौ विधानतः ॥

अग्नीन्धनादि पात्रान्ते पिष्टाज्यसहितैः तिलैः ।
विरजाहोमविधिना कृत्वा होमं सहस्रकम् ॥

जयादिं च ततो हुत्वा होमशेषं समापयेत् ।
एवं पञ्चदिनं कृत्वा विरजाहोममादरात् ॥

सहस्रमित्यत्र "तिलान् जुहोमि" इति चतुर्विंशतिवाक्यैः पृथक्संख्या कर्तव्या ।

अथ गोधूमादिविक्रये प्रायश्चित्तम् । मार्कण्डेयपुराणे ।

गोधूमाश्च तिला-माषा-हव्य-कव्य-शुभप्रदाः ।
स्वकृषिप्रापिता राजन् पितृप्रीतिकराश्शुभाः ।
द्विजो यदिह लोभेन सञ्चयार्थं हि विक्रयेत् ।
तस्यैव निष्कृतिर्नास्ति यमलोकात् कदाचन ।

गोधूमविक्रये प्राजापत्यम् । माषतिलानां विक्रये तप्तचान्द्रे । एतत्प्रमाणं खारिप्रमाणे वेदितव्यं अल्पविक्रये तदर्धम् ।

मुद्ग-तण्डुलादि विक्रये प्राजापत्यं खारिप्रमाणम् । तदभावे तदर्धम् । व्रीह्यादिविक्रये प्रायश्चित्तम् ।

व्रीहय चणका राजन् श्यामाकाः कोद्रवास्तथा ।
प्रियङ्गवः कुलुत्थाश्च यावनाला महोन्नताः ॥
एतानि कृषिजातानि स्वोद्भवानि नृपोत्तम ।
एतेषां विक्रयं कृत्वा नित्यलोपं समाचरेत् ॥

नित्यलोप इति दर्शपूर्णमासाग्रयणपशु पित्र्योराब्दिकादि लोपः तन्निमित्तम् तेषां विक्रये न दोषः, द्रव्यसंचयार्थं विक्रये दोषमाह । विक्रयित्वा द्विजो धान्यं नित्यलोपे न दोषभाक् ।

आत्मनश्चोपभोगार्थं महान्तं नरकं व्रजेत् ।

निष्कृतिः पराकम् ।

गुडलवणविक्रये चान्द्रायणम् । उपनयनं च । कार्पास विक्रये उपनयनं चान्द्रायणं च ।

नीलीविक्रये महान्तं नरकं घोरं प्राप्नोति ।
अतः तप्तं चान्द्रायणं कृत्वा पुनः संस्कारमर्हति ।
पलाण्डुं लशुनं गृञ्जं कलञ्जं यदि विक्रयेत् ॥
स नरकं याति दुष्टात्मा चरेच्चान्द्रायणव्रतम् ।
औषधार्थं पिबेत्पञ्चगव्यं चैकोपवासतः ।
एतस्मात् शुद्धिमाप्नोति नान्यथा गतिरस्ति ॥

गृञ्जं वीर्यजनक पर्णविशेषः, कलञ्जं सुरालेपनं कृत्वा उन्मादजनकौवटकविशेषः ।

रामठं स्वर्णबन्धं वा एलं वा जीरकद्वयम् ।
अजामोदं पिप्पलीं च जातीपत्रं तदुद्भवम् ।
अन्यानि सूक्ष्मद्रव्याणि सर्षपादीनि यानि च ।
द्विजः क्रीत्वाऽथ सम्पाद्य विक्रयेद्यति लोभतः ।
यदि ज्ञानमुपागम्य मासे तप्तं समाचरेत् ॥
द्विमासे तु पराकं स्यात् कार्यं पश्चादृतुत्रये ।
चान्द्रं तु वत्सरे प्रोक्तं अभ्यासे तु द्वयं चरेत् ॥

रसविक्रयः । लिङ्गपुराणे ।

शम्भोर्वीर्यं यदा विप्रः क्रीत्वा लोभमुपाश्रितः ।
स पश्चाद्विक्रयं कृत्वा स वै पातकिनां वरः ॥

**पराशरसंहितायाम्**

पश्चात्तापसमायुक्तः जपेन्मन्त्रं त्र्यम्बकम् । लक्षत्रयं जपेन्मन्त्रं न्यासध्यानसमन्वितम् । ततः शुद्धिमवाप्नोति ।

**अथ चर्मविक्रये ।**

व्याघ्रं चर्म रुरोश्चर्म ऐणेयं वल्कलादिकं ।
द्विजः क्रीत्वा स्वयं पश्चात् विक्रयेत् धनलोभतः ॥
स चण्डालसमो ज्ञेयः मृत्वा यमपुर व्रजेत् ।
तत्र भुक्त्वा महद्दुःखं चर्मकारो भवेत् भुवि ॥
तस्यैव निष्कृतिरियं प्राजापत्यं विशोधनम् ।
एकवारे पञ्चगव्यं द्विवारे यावकं भवेत् ॥
त्रिवारे बहुवारे वा प्राजापत्य त्रयं चरेत् ।
दन्तं करिसमुद्भूतं अश्वजं किटिजं तथा ।
कपि-व्याघ्रसमुद्भूतं विक्रयित्वा द्विजाधमः ।
नरकं प्रतिपद्याऽथ दन्तकारो भवेद्भुवि ।
प्रायश्चित्तमिदं तस्य शोधकं मुनिचोदितम् ॥
हस्ति दन्ते तु तप्तं स्यात् अश्वदन्ते तु यावकम् ।
प्राजापत्यं किटेर्दन्ते त्रिरात्रं नखविक्रये ॥

**अन्नविक्रये प्रायश्चित्तमाह विष्णुधर्मोत्तरे ।**

देवालये महामार्गे स्वगृहे राजवेश्मनि ।
अन्नं पक्त्वा द्विजो यस्तु विक्रयेद्यदिपापधीः ।
शाकसूपादिकांश्चैव उपदंशमथापि वा ।
भक्ष्या नानाविधाश्चैव द्रव्यलोभ परायणः ॥

महान्तं नरकं गत्वा धनहीनो भवेत् भुवि ।
उपदंशे विधुं प्रोक्तं मासं मासद्वयं च वा ॥
शेषेषु पञ्चरात्रं स्यात् शाके यावकमुच्यते ।
अब्दं मासद्वयं क्रीत्वा षडब्दं कृच्छ्रमाचरेत् ॥
षण्मासे तद्द्वयं प्रोक्तं वर्षान्ते पतितो भवेत् ।
पतितप्रायश्चित्तं कृत्वा शुद्धिमाप्नोति ।
स्त्रीणां तदर्धम् । गोरसविक्रये ।
पयो दधि घृतं चैव नवनीतं च गोमयम् ।
तैलमैरण्डकं चैव क्रीत्वा स्वगृहसम्भवम् ।
विक्रीयमासं बैडालं द्विमासं वा तथोदरः ।
मासत्रये सौचिकः स्यात् षण्मासे शूद्रतां व्रजेत् ।
मासे तप्तं पराकं च द्वितीये चान्द्रमुच्यते ।
तृतीये शृणु राजेन्द्र षण्मासे तु षडब्दकम् ।
अतः परं पतत्यत्र द्विजो यो गव्यविक्रयी ॥

सालग्रामविक्रये शिवपुराणे ।

प्रतिमां लक्षणोपेतां सालग्रामं शिवं तथा ।
चक्रपाणिं च राजेन्द्र द्विजः सम्प्राप्य यत्नतः ॥
तदर्चनं पराकृत्य भुक्तिमुक्ति फलप्रदम् ।
विक्रयेदात्मभोगार्थं तस्य पापफलं शृणु ।
आद्वादशाब्दपर्यन्तं यमलोकं सुदारुणम् ।
पश्चाद्भवति लोकेऽस्मिन् नास्तिको जायते ध्रुवम् ।
महाचान्द्रं प्रकुर्वीत चान्द्रायण मथाऽपि वा ।

पुष्पविक्रये ।

सुगन्धीनि च पुष्पाणि जाति कुन्दमुखानि च ।
चम्पकाशोक पुन्नागं वकुलं कैतकं तथा ॥

स्वारामसंभवानीह क्रीत्वा वा लाभलोभतः ।

विक्रयेद्यदि मूढात्मा कालसूत्रमवाप्नुयात् ।
एकवारे पराकं स्यात् अभ्यासे चान्द्रमुच्यते ।

स्वारामसम्भवविक्रये इदं प्रायश्चित्तम् ।
क्रीत्वा विक्रये द्विगुणम् । मुषित्वा विक्रये त्रिगुणम् ।

रत्नविधः ।

मौक्तिकं पुष्परागं च पद्मरागं प्रवालजम् ।
गोमेधकं महारत्नं रत्नं गारुत्मतं तथा ॥

इन्द्रनीलं च वज्रं च नवधा रत्नमीरितम् ।
एतानि बहुमूल्यानि सम्पाद्य विक्रयेद्यति ॥

तस्य देहविशुद्ध्यर्थं षडब्दं कृच्छ्रमाचरेत् ।
तस्योपनयनं भूयः तस्य दोषस्य शान्तये ॥

रुद्राक्षविक्रये गौतमः ।

रुद्राक्षं पूर्वजो राजन् शतं सहस्रमेव वा ।
विक्रयेद्यति तस्यैव निष्कृति र्नास्ति हि क्वचित् ॥

भुवस्त्रिः परिक्रमणं कुर्यात् । अथवा कार्मुकाग्रेतु पत्यहं स्नान-
माचरेत् मासेनैव विशुद्धिः स्यात् अन्यथा पतितो भवेत् ।

द्विजोमासं सुवर्णेन वर्तयेत्क्रयविक्रयैः ।
सुवर्णघातीविज्ञेयः सर्वकर्मबहिष्कृतः ।
तद्दोषपरिहारार्थं प्राजापत्यं समाचरेत् ।

इति सुवर्णविक्रये ।

दशनिष्कं समारभ्य शतनिष्कान्तमादरात् ।
वणिग्भावमुपागम्य विक्रये व्रजतं यदि ।
स्वर्णस्तेयसमं पापमवाप्नोति नराधिप ।

मासं रजतविक्रये प्राजापत्यं, संवत्सरे चान्द्रं ऊर्ध्वं स्वर्णस्तेय-प्रायश्चित्तम् ।

अथ ताम्रादिविक्रये पराशरः ।

ताम्रं कांस्यं द्विजः क्रीत्वा त्रपुं पित्तलकं तथा ।
तानि पश्चात् विक्रयित्वा मासं वा ऋतुमेव वा ॥
पलानिशतपर्यन्तं प्राजापत्यं चरेन्नरः ।

अथ गृहोपकरणविक्रये ।

उलूखलं च मुसलं दृषदं चोपलं तथा ।
पीठं कुन्तालिनं चैव तथा सम्मार्जनीमपि ॥
तुषं काष्ठं च कारीषं गोमयं शूर्पमेव वा ।
पूर्वजो विक्रयेद्राजन् प्राजापत्यं समाचरेत् ॥
अब्दे चान्द्रं तथा शुद्धिः नान्यथा शुद्धिरीरिता ।

अथ वस्त्रविक्रये मनुः ।

कम्बलं पट्टवस्त्रं च कौशेयं चित्रवस्त्रकम् ।
सूक्ष्मतन्तुकृतं वासः विक्रयेत् पूर्वजः पुमान् ।

द्रव्याधिक्ये तु चान्द्रं स्यात् वत्सरे तद्वयं भवेत् ।
द्रव्यहीने पराकं स्यात् सूक्ष्ममूल्ये तु यावकम् ॥

संवत्सरात्प्राक् एतत् प्रायश्चित्त वेदितव्यम् अत ऊर्ध्वं द्विरावृत्तिः ।

अथ धर्मविक्रये यमः ।

स्नानादि नित्यकर्माणि इष्टापूर्त्तादिकानि च ।
तटाकारामकासारनिर्माणादीनि यान्यपि ॥

काशीक्षेत्राटनादीनि तेषां यो विक्रयं चरेत् ।
उपोषणव्रतादीनि श्रौतस्मार्तादिकानि च ॥

स विप्रो नरकं याति पुनरावृत्ति दुर्लभम् ।
यदीच्छेदात्मनः शुद्धि चान्द्रायणत्रयं चरेत् ॥
पुन. संस्कारमापन्न पञ्चगव्यं पृथक् पिबेत् ।

अथ स्मृतिविक्रये ।।

श्रुति स्मृति धर्मशास्त्रं पुराणं ज्योतिषं तथा
वैद्य काव्यं नाटकं च प्रबन्धं स्वकृतं द्विजः ॥

विक्रयेद्यदि पापात्मा पुस्तक फलकं तु वा ।
महान्तं नरकं गत्वा जायते स निरक्षरः ॥

यदीच्छदात्मनः शुद्धि पश्चात्ताप परायण. ।
चान्द्रायणं पराकं च कृत्वा शुद्धिमवाप्नुयात् ॥

एतत्सकृदाचरणाविषयम् । अभ्यासे द्विगुणम् ।

नामधेयविक्रये ।

आत्मनः च सुतस्यापि दाराणां भ्रातुरेव हि ।
मातुः पितुः वा राजेन्द्र नामधेयं महत्तरम् ॥
विक्रयित्वा द्विजो मोहात्परस्मै धनदायिने ।
धनशब्दः क्षेत्र-धान्य-पश्वारामाणामुपलक्षणम्
न तस्य निष्कृतिर्नास्ति कायकृच्छ्रशतादिह ।
पुनः संस्कारपूतात्मा शुद्धिमाप्नोति पूर्ववत् ॥

इति सङ्कुलीकरणप्रायश्चित्तम् ।

अथ मलिनीकरणप्रायश्चित्तम् ।

निक्षेपहरणप्रायश्चित्तम् गार्ग्यः—

निक्षेपं स्वगृहे क्षिप्त परकीयं वनान्तरे ।
देवालये बहिर्देशे स्थापितं यत्र कुत्र वा ॥
ब्राह्मणो द्रव्यलोभेन अञ्जनादिभिरौषधैः ।
हृत्वा नरकमाप्नोति पापिनां पापकर्मवान् ॥
तेन विप्रो यदा जीवेत् देवर्षिपितृकार्यकृत् ।

निक्षेपप्रमाणमाह ।

रूपकाणां नवप्रोक्तं निष्कद्वयमुदाहृतम् ।
निष्कद्वयं वराहं स्यात् सुवर्णं तच्चतुष्टयम् ॥
पलं सुवर्णाश्चत्वारः भारं स्यात् तच्चतुष्टयम् ।
तच्चत्वारिंशत्तु भारंस्याद्वणिजां भारमुद्वहन् ॥
भारद्वयं महासूत्रं तद्द्वयं निखनं स्मृतम् ।
तच्चत्वारि महाराज निक्षेपः परिकीर्तितः ॥

निक्षेपं तद्द्विजो धृत्वा तत्क्षणात् पतितो भवेत् ।
तत्पत्नी च तथा पुत्र मातरं पितरं तथा ॥

सर्वे तत्सन्ततिर्ज्ञेया येन निक्षेपितं क्षितौ ।
पुनः प्रत्यर्पयेत्तस्मै न तेन स हि दोषभाक् ॥

सर्वाभावे तु राज्ञे वा दत्वा दोषैर्न लिप्यते ।
अग्नौ दग्धं जले मग्नं भूमौ निपतितं च यत् ॥

तत्सर्वं परलोकाय धूते नष्टं विनश्यति ।
निक्षेपहरेण विप्रः पतितोऽभून्न संशयः ॥

णस्य हरणे, चान्द्रायणचतुष्टयं, पुनरुपनयनं पञ्चगव्यप्राशनम् । तदर्धं रजतनिक्षेपे, ताम्रकांस्य निक्षेपे तदर्धं त्रपु-पित्तलयोः पादं चरेत् ।

धेनुहरणे ।

धेनुहरणे राजागोसवमाचरेत् । विप्रस्य चान्द्रायणद्वयम् । राज्ञ तद्द्विगुणम् । वैश्ये तत्त्रयं स्मृतम् । शूद्रे हस्तच्छेदः स्त्रीणामर्धम् ।

वत्सहरणे ।

विप्रस्य चान्द्रं । अनडुद्धरणे - तप्तकृच्छ्रत्रयम् । महिषीहरणे । चान्द्रायणम् ।

महिषहरणे । अनडुत्प्रायश्चितवत् सर्वं कुर्यात् । वस्ताजहरणे । प्राजापत्यम् । ग्राम्यमृगहरणे ।

मायूरं सारमेयं च कपोतं जलपादुकम् ।
शुकं चाषं बलाकं च शिशुमारं च कच्छपम् ॥

एतेष्वन्यतमं हृत्वा द्वादशाहमभोजनम् ॥ इति पराशरः ।

भूहरणे देवलः ।

स्वदत्तां परदत्तां वा यो हरेद्वसुधां द्विजः
षष्टिर्वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥

एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।
न भोज्या न करग्राह्या विप्रदत्ता वसुन्धरा ॥

करः तस्यामुत्पन्न धान्यहरणम् ।

क्षेत्रं हृत्वा षडब्दं स्यात् । तटाके वने च चान्द्रायणद्वयम् ।

इदमेकवारे द्विवारे द्विगुणमित्यादि

स्वदत्तापहरणे - प्रायश्चित्तम् देवलः ।

क्षेत्रं धनं च धान्यं च, वस्त्रं कन्यां विभूषणम् ।
सालग्रामं च लिङ्गं च गृह शय्यां महोन्नतिम् ।
पूर्वं दत्वातु विप्राय हरेच्चत् यमलोकभाक् ।

रौरवं नरकं क्रूर स याति हि महद्भयम् ।
पुनर्दत्वा तु तद्वस्तु प्राजापत्यद्वय चरत् ।

नवरत्नेष्वेकैकस्य प्राजापत्यम् । बालहरणे ।

बालं हृत्वा द्रव्यलोभात् स चण्डालसमो भवेत् ।
ब्राह्मणे तप्तकृच्छ्र स्यात् पराकं क्षत्रिये स्मृतम् ॥

वैश्ये च यावकं प्रोक्तं पादजे वातं स्मृतम् -
एतत्पुनर्दानविषयम् । अदाने द्विगुणम् ।

कन्याहरणे । मार्कण्डेयपुराणे ।

कन्यां सुरूपिणीं विप्रः जारबुद्ध्याहरेद्यदि ।
नरकं दारुणं गत्वा भिल्लयोनौ स जायते ॥
दत्वा तां स्वामिने पश्चात् शुद्धिः चान्द्रायणव्रतात् ।
अदत्वा पुनरप्येनां महाचान्द्रायणं स्मृतम् ॥

नारी हरणे ।

विप्रः सतीं सुकुलजां विप्रपत्नीं हरेद्यदि ।
तस्यैव निष्कृतिर्नास्ति कारीषदहनादृते ॥

इदमनङ्गीकारे, अङ्गीकारे तु केशवपनं कृत्वा तप्तकृच्छ्रत्रयं चरेत् । अभ्यासे द्विगुणं प्रोक्तं, अत्यन्ताभ्यासे करीषवध एव ॥

पुरुषहरणे पराशरः ।

विप्रो हरेत् पुमांसं चेदुन्मत्तं मन्त्रभेषजैः
देशाद्देशान्तरं गत्वा स विप्रो नरकं व्रजेत् ॥
दत्वा तं देहशुद्ध्यर्थं तप्तकृच्छ्रं समाचरेत् ।

दासीहरणे । मार्कण्डेयपुराणे ।

वञ्चयित्वौषधैर्वाक्यैः दासीं यो हरते द्विजः ।
मृत्वा नरकमासाद्य भुवि भूयात् निरिन्द्रियः ॥
तद्दोषस्यविशुद्ध्यर्थं महासान्तपनं स्मृतम् ।

शय्याहरणे चान्द्रं पराकं तप्तकृच्छ्रं यथावर्णं कुर्यात् ।
उपानत्पादुकाहरणे । प्राजापत्यं समाचचरेत् ।

छत्रहरणे । वस्त्रावृते पराकं स्यात् केतकीपर्णसंवृते यावकम्, तालपत्रैश्च निर्मिते राजवल्लभ ॥

पञ्चगव्यं पिबेत्पश्चात् पुनर्दत्वा तु तद्धनम् ।
अभावे द्विगुणं प्रोक्तं क्षत्रियाणामिदं व्रतम् ।
तत्स्त्रीणां तदर्धम् ।

पुष्पहरणे वसिष्ठः ।

आरामे पुष्पहर्ता यो देवपूजार्थकल्पिते ।
यावन्त्यथैव पुष्पाणि तावन्नरकमश्नुते ।
पुनर्भुवं गतः पापी जायते वक्रनासिकः ।
प्रायश्चित्तमिदं प्रोक्तं चान्द्रायणमुदाहृतम् ।

फलहरणे ।

फलानि विविधानीह देवप्रीतिकराणि वै ।
मुषित्वा यो द्विजो लोभात् नरके वासमश्नुते ।
भुवःस्थलमुपागम्य फलहीनो वृथा भवेत् ।
ऋतुत्रये पराकं स्यात् वत्सरे चान्द्रमुच्यते ।

कन्दादिहरणे ।

सूरं च शृङ्गिबेरं च हरिद्रा मूलकं तथा ।
अन्यानि देवयोग्यानि मुषित्वा दोषभाग् भवेत् ।
हृत्वा नरकमाप्नोति पापयोनिषु जायते ।
तत्पुनः स्वामिने दत्वा जपेदष्टोत्तरं शतम् ।
दशादिशतपर्यन्तं मूलद्रव्यापहारवान् ।
अदत्वा स्वामिन स्तेयी ह्ययुतं जपमाचरेत् ।

कोषहरणे ।

अलाबु घृतकोशं च वृन्ताकं शिग्रुजं तथा ।
पटोरकारवल्लीं च कूष्माण्ड चूतसंभवम् ।

तथैव तिन्त्रिणी कोषं अन्यकोषानपि द्विजः ।
हृत्वा पापमवाप्नोति नरकं चाधिगच्छति ।

उपोष्य रजनीमेकां स्वगृह्याग्नौ विधानतः ।
महाव्याहृतिभिर्होमः पञ्चगव्यं पिबेत्ततः ।

इदमल्पकोशहरणविषयम् । बहुकोशहरणे द्विगुणम् ।

शाकहरणे देवलः ।

उपोतक्यानि शाकानि अरण्यग्रामजान्यपि ।
नाना नामानि शाकानि नाना वर्णानि पूर्वजः ॥

अपहृत्य यदा लोभात् महाशोकमवाप्नुयात् ।
प्राजापत्यं भारमात्रे पञ्चगव्यमथाल्पके ॥

पर्णहरणे मार्कण्डेयः ।

कदलीनां तु पर्णानि ताम्बूलीनामथापि वा ।
परकीयानि पर्णानि पलाशानि विशेषतः ॥

ग्राम्यान्यरण्यजातानि विप्रो हृत्वा स पातकी ।
भारमात्रे पराकं स्यात् वत्सरं स्तेयसम्भवे ॥

अन्यथा (इतरे) पञ्चगव्यं स्यात् प्राजापत्यं चरेद्द्विजः ।

इन्धनहरणे देवलः ।

इन्धनं दारुकाष्ठं वा समिधो दर्भसञ्चयात् ।
स्रुक्स्रुवादीनि पात्राणि परकीयं द्विजोहरेत् ॥

स गत्वा नरकं क्रूरं क्रिमियोनिषु जायते ।
इध्म सङ्ग्रहणे राजन् शतषष्टोत्तरं जपेत् ॥

स्रुवस्रुवादिषु पारक्यं शरण्या तप्तमीरितम् ।
यूपस्तम्भे च चान्द्रं स्यात् इन्धने पञ्चगव्यकम् ।
दर्भेषु भारमात्रेषु प्राजापत्यं विधीयते ॥

जलहरणे मनुः ।

परकीयं जलं हृत्वा केदारार्थं द्विजो यदि ।
आराम पोषणार्थाय ह्यथवा शाकवृद्धये ॥
स एव नरकं गत्वा मण्डूको जायते भुवि ।
तस्य दोषोपशान्त्यर्थं प्रायश्चित्तमुदीरितम् ॥
एकेऽह्नि शत गायत्री मासे तद्दशधास्मृतम् ।
संवत्सरेऽयुतं प्रोक्तं अथ ऊर्ध्वं तु निष्कृतिः ॥
तृषार्तो यदि यो विप्रः तावन्मात्रं हरेद्यदि ।
पीत्वा पश्चात् विचार्याथ शत नामत्रय जपेत् ॥

भक्ष्य-भोज्यहरणे देवलः ।

अपूपं माषसम्भूतं तथा मुद्गसमुद्भवम् ।
गोधूमाणां विकाराणि भक्ष्याणि विविधानि च ।
परमान्नं च चित्रान्नं संयावं चोष्यमेव च ।
लेह्यं पेयं च यो मोहात् जिह्वा चापल्यतो हरेत् ॥
तस्यैव जिह्वा पतति यमलोके सुदारुणे ।
स पश्चाद्भुवमासाद्य वायसोऽभून्न संशयः ॥
तस्यैव निष्कृतिरियं सहस्र वेदमातरम् ।

जपेदिति शेषः । क्रमुक-रुद्राक्षहरणे ।

रुद्राक्षान् क्रमुकान् पूगान् परकीयान् द्विजो हरेत् ।
स एव द्विजन्मासौ शिवद्रोही प्रजायते ।

महान्तं नरकं गत्वा जायते विकटाकृतिः।
प्रायश्चित्तमिदं ब्रह्मन् चान्द्रद्वयमितीरितम्।
शतादूर्ध्वं सहस्रान्तं प्राजापत्ययुतं चरेत्।
अतऊर्ध्वं निष्कृतिर्नास्ति

गुडहरणे। गुडहर्ता नरकमनुभूय मधुमक्षिको जायते।
अल्पमाने पराकं स्यात् भारे चान्द्रमुदाहृतम्

क्षीरहरणे। अग्निहोत्रार्थमानीत क्षीरं विप्रो हरेद्यदि।
नरकं प्रतिपद्याथ पशुहीनो भवेन्नरः।
उपोष्यरजनीमेकां परेद्युर्गोजलं पिबेत्।
एतदेकवारविषयम्, अभ्यासे द्विगुणम्।

दध्यादिहरणे गौतमः।

दधि तक्रं मधु द्रव्यं पारक्य घृतमेव वा।
नवनीत द्विजो हृत्वा नरक याति दारुणम्।
पुनः भुवमुपागम्य पाषाणत्वमवाप्नुयात्।
एकवारे दश जपं तक्रे दध्नि द्विजोत्तमाः।
नवनीते मधुद्रव्ये अष्टोत्तरशतं जपेत्।
द्विवारे तु सहस्रं स्यात् बहुवारेऽयुत स्मृतम्।

अथ त्रिकटुहरणे जाबालिः।

मरीचि पिप्पलीं शुण्ठि सर्वरोगहरा द्विजः।
मुषित्वा स ययौ पापी महान्तं नरकं ध्रुवम्।
पक्षद्वये पराकं स्यात् प्राजापत्यं दशात्मके।
शतोपरि च चान्द्रं स्यात् सहस्रे स्तेयभाग्भवेत्।
स्तेयः स्वर्णस्तेयः।

अथ रसौषधहरणे गौतमः ।

रसौषधानि यो हृत्वा द्विज.पापं विदन्नपि ।
स्तेयदोषोपशान्त्यर्थं प्रायश्चित्तमितीरितम् ।
प्राजापत्यं निष्कमात्रे स्वर्णमात्रे विधुं चरेत् ।
पलमात्रे भुवः क्रान्ति द्विपले पतितो भवेत् ।
भुवः क्रान्तिः - भूप्रदक्षिणम् ।

शस्त्रादिहरणे–खनित्र खेटक कुठार गदा चक्रादिहरणे प्राजापत्य-मनुष्ठेयम् । ततः पञ्चगव्यं पिबेत् । परिधानपरिग्रहणे देवलः ।

ग्रामणीः प्राड्विवाकश्च राजद्वारे पुरोहितः ।
मन्त्री राजगृहे राजन् सर्वाध्यक्षत्वमागतः ॥

प्रजाभ्यः कार्यसिद्ध्यर्थं मूल्यं भागाहृतः क्रमात् ।
यो हरेत् सततं पापी स वै नरकमश्नुते ॥

प्रजाभ्यो मूल्यहारी यः तासां कार्याभिवृद्धये ।
तत्पापं सकलं प्राप्य यमकूपे निमज्जति ॥
एकवारे तु चान्द्रं स्यात् अतो नास्तीह निष्कृतिः ।

कूटसाक्ष्यप्रायश्चित्तम् । मार्कण्डेयः ।

व्यवहारेषु कलहे प्रायश्चित्तादि कर्मसु ।
धनं गृहीत्वा यो विप्रः कूटसाक्षि वदेत चेत् ।
तस्यैव पुत्रा. पौत्राश्च सदानष्टत्वमाप्नुयुः ॥

यमलोकमुपागम्य निष्पुत्रत्वमवाप्नुयात् ।
तस्य देहविशुद्ध्यर्थं महाचान्द्रमुदीरितम् ॥

इति मलिनीकरणादि ।

## अथ अपात्रीकरणप्रायश्चित्तानि ।

देवलः । चण्डालीं ब्राह्मणो गत्वा पञ्चबाणार्दितः स कृत् ।
न तस्य विष्कृतिर्दृष्टा कारीषेण वधादिह ।

तत्र गमने हेतुमाह ।

कामातुराणां चाण्डाल्याः विलासं दृष्टि भाषणे ।
मुखं शिरोरुहांश्चैव दृष्ट्वा तत्र प्रवर्तयेत् ॥
अतस्तद्दर्शनं भाषां वर्जयन्ति महाजनाः ।

भरद्वाजः ।

चाण्डाल्या गमनं कुर्यामिति सङ्कल्प्य यो हृदि ।
पदे पदे ब्रह्महत्या पापमेव समश्नुते ॥

यमलोके तस्य पादौ जिह्वां चैव छिनत्ति हि ।
रामसेतुमुपागम्य चापाग्रे प्रत्यहं शुचिः ।
प्रातस्नात्वा मासमात्रं नियतः शुद्धिमाप्नुयात् ॥

तुरुष्की गमेन देवलः ।

चण्डालः च तुरुष्कश्च द्वावेतौ तुल्यपापिनौ ।
तदङ्गना तथाज्ञेया तस्मात्तां परिवर्जयेत् ॥

संभाषणे द्विजैर्भाषा दर्शने भानुदर्शनम् ।
तच्छायास्पर्शनेनैव सचेलं स्नानमाचरेत् ॥

तुरुष्कीं यो द्विजो गच्छेत् पञ्चपाणातुरः सकृत् । चण्डालतुरुष्कयोः भेदाभावात् पूर्वोक्तप्रायश्चित्तं कार्यम् । षोडशविध्रचण्डालगमने । तदाह पराशरः ।

रजकः चर्मकारश्च नटो बुरुड एव च ।
कैवर्त्त-मेद-भिल्लाश्च स्वर्णकारस्तु सौचिकः ।
तक्षकः तिलयन्त्री च सौनश्चक्री तथा ध्वजी ।
नापितः कारुकश्चैव षोषशैतेऽन्त्यजाः स्मृताः ।

ग्रामचण्डाला इत्यर्थः ते चण्डालसमाः स्मृताः । ते परित्याज्याः । तेषां स्त्रीषु गमने सकृद्वासरे चान्द्रम् । मासमात्रे चान्द्रत्रयम् । अत ऊर्ध्वं पतन्त्येते नरकं प्राप्नुयुः ध्रुवम् । अत्र एकैकस्यागमने प्रातिस्विकं प्रायश्चित्तमुक्तम् । विस्तरभयान्नेह तानि प्रपञ्च्यन्ते ।

रजस्वलागमने ।

प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ।

अत्र दिनत्रये गमने चाण्डाल्यादिगमने यत्प्रायश्चित्तमुक्तं तदेव कुर्यात् ।

विधवागने ।

ब्राह्मणो मदलोभेन विधवां विप्रनन्दिनीम् ।
यभेत् कामातुरः पश्चात् ज्ञात्वाऽसौ परिवर्जितः ॥
गन्धमादनमासाद्य प्रातः स्नायाद्दिने दिने ।
मासमात्रेण शुद्धिः स्यात् पुनःसंस्कारमर्हति ।

दासीगमने । देवलः ।

दासीं द्विजो यदा गत्वा स्वधर्मान् नावलोकयन् ।
महापापमवाप्नोति मानहानिश्च जायते ।

**मार्कण्डेयः ।**

दासी मानधनं हन्ति वेश्या हन्ति तपो यशः ।
विधवाऽऽयुः श्रियं हन्ति सर्वं हन्ति पराङ्गना ॥

एतद्दोषविशुद्ध्यर्थं दिनत्रये पराकं, मासे प्राजापत्यं, वर्षे चान्द्रं, अत ऊर्ध्वं चण्डालत्वमवाप्नोति । अतः पतितप्रायश्चित्तम् ।

**पाषण्ड-पतित शूद्रस्त्रीगमने - देवलः ।**

बौद्ध-पाषण्ड-पतित शूद्रस्त्रीणां तु सङ्गमम् ।
मासे चान्द्रायणं प्रोक्तं वर्षे तत्त्रितयं स्मृतम् ॥

अत ऊर्ध्वं पतितप्रायश्चित्तम् । पुनः संस्कारश्च । ऋतुकालपरित्यागे ।

ऋतुस्नातां तु यो भार्यां स्वस्थश्चेन् नोपगच्छति ।
भ्रूणहत्यामवाप्नोति ऋतुकालव्यतिक्रमे ।
व्रतादिश्राद्धकालेषु ब्रह्मचर्यं तु यो द्विजः ॥
भार्यां ऋतुमतीं स्नातां यो गत्वा स न पापभाक् ।

श्राद्धव्रतपरित्यागे दोषबाहुल्यात् ऋतुकालस्य षोडश-दिनात्मकत्वात् व्रतादिरहितैकाले पुत्रकामी नियमेन गमनं कुर्यात् । पूर्वोक्तनिमित्तैर्विना ऋतुमतीं भार्यामगच्छन् विप्रः प्राजापत्यं कृत्वा दोषमुक्तो भवति । इति महाराजविजये ।

**कन्यागमने । देवलः ।**

अप्रौढां कन्यकां विप्रः यभेत् कामातुरो रहः ।
तस्यैव नरके वासः कानीनः स्यात् तदुद्भवः ।
प्राजापत्यं तथा मासे वर्षे चान्द्रं प्रकल्पितम् ।

**वर्षादूर्ध्वं पतितप्रायश्चित्तम् ।**

कन्यादूषणे चान्द्रायणम् ।

> यो विप्रः पुंसि संसर्गं स्वदारेषु रतिर्मुखे ।
> एकस्मिन् दिवसे तप्तं मासे चान्द्रायणं स्मृतम् ।
> तस्योपनयनं भूयः पञ्चगव्यं पिबेत् स कृत् ।

एकस्मिन् दिवसे तप्तं मासे चाद्रं अब्दे षडब्दम् ।

महिषी वडबा उष्ट्री बस्तादीनां गमने प्राजापत्यद्वयम् । पुन-
स्संस्कारश्च ।

तटाकादौ रेतस उत्सर्गे मार्कण्डेयः ।

> अयोनौ च वियोनौ च पशुयोनौ च यो नरः ।
> समुत्सृजन्ति शुक्लं वै ते वै निरयगामिनः ॥

अयोनिः, वस्त्रादिः, वियोनिः काकादिः, पशुः गोवत्सादि ।

नारदः । पश्वादौ च जले वाऽपि वह्निमध्ये तु कामतः ।

> रेतोत्सर्गं यदा कुर्यात् तदा यमपुरं व्रजेत् ॥
> परेद्युर्वा तदानीं वा स चेलस्नानमाचरेत् ।
> जपेत्सहस्रं गायत्रीं ततः शुद्धिमवाप्नुयात् ॥

अवकीर्णिप्रायश्चित्तं वदति देवलः ।

> ब्रह्मचारी यदा गच्छेत् योषितं काममोहतः ।
> अवकीर्णी स विज्ञेयः सर्वकर्मबहिष्कृतः ॥
> तस्य देहविशुद्ध्यर्थं पराकं कृच्छ्रमीरितम् ।
> यष्टा गर्दभमालभ्य शुद्धिमाप्नोति पौर्विकीम् ॥
> पुनः संस्कारपूतात्मा पञ्चगव्यं पिबेत्ततः ।
> एतेन शुद्धिमाप्नोति ब्रह्मचारी न चान्यथा ॥

मिथ्योदितप्रायश्चित्तम् । देवलः ।

यो विप्रः साधुवृत्तेषु पुण्यवत्सु द्विजेषु च ।
मिथ्यारोपो महान् दोषो नरकाय भवेत् ध्रुवम् ॥

मार्कण्डेयः ।

पापिनां पापगणनां न वदेत् वै कदाचन ।
अस्तिचेत् समपापी स्यात् मिथ्यात्वे द्विगुणं भवेत् ॥

स एव नरकं गत्वा श्वान योनिषु जायते ।
तस्य पापविनाशाय प्राजापत्यमुदीरितम् ॥
न मिथ्याभाषणं कुर्यात् दोषारोपं परित्यजेत् ।

अभिशस्तप्रायश्चित्तम् । देवलः ।

पाप्माऽस्ति वा न वा लोके वार्ता सर्वत्र गृह्यते ।
सोऽभिशस्त इति प्रोक्तः सर्वकर्मबहिष्कृतः ॥
तद्दोषपरिहारार्थं प्राजापत्यं समाचरेत् ।

अथ कुग्रामवासप्रायश्चित्तम् । कुग्रामलक्षणमाह मरीचिः ।

श्रोत्रियश्च तटाकादि तृणं पर्णं तथैव च ।
बान्धवाः स्वकुलीनाश्च विद्वान् वैद्यो महाधनी ॥

न सन्ति यत्र ग्रामे च स कुग्राम इतीरितः ।
यत्र [पुण्या] विद्यागमो नास्ति च तत्र दिवसं वसेत् ॥

तत्र वर्षे वासे चान्द्रायणम् ·मासे पराकं षण्मासे प्राजापत्यम् ।
तस्मात्कुग्रामं परित्यज्यान्यत्र वसेत् ।

कुत्सितसेवाप्रायश्चित्तम् । देवलः ।

नटश्च गायकश्चैव स्तेयी च कितवस्तथा ।
एतेषां सेवने विप्रः तप्तकृच्छ्रद्वयं चरेत् ॥

खरोष्ट्रादि आरोहणप्रायश्चित्तमाह स एव ।

खरमुष्ट्रं च महिषी अनड्वाहमजं तथा ।
वसमारुह्य मुखजः क्रोशमात्रं प्रवर्तयेत् ॥
तप्तकृच्छ्रत्रयं प्रोक्तं ततः शुद्धिरितीर्यते ।

उद्वाहितायां पुनरुद्वाहे । देवलः ।

समुद्रयात्रास्वीकारः कमण्डलु विधारणम् ।
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ॥
दीर्घकालं ब्रह्मचर्यं वर्ज्या एते कलौ युगे ।
एतान् करोति यो विप्रः स वै दोषेण युज्यते ।
तस्यैव निष्कृतिर्नास्ति तप्तकृच्छ्रशतादिह ॥

मातृस्वसृसंबन्धपरिणये देवलः ।

सम्बन्धान् शोधयित्वादौ मातृतः पितृतस्तथा ।
सगोत्रप्रवरां कन्यां मातुश्च भगिनीं त्यजेत् ॥
यदि पुत्रावतीं गच्छेत् लोभात्कामातुरः स कृत् ।
मातृगामी स विज्ञेयः सर्वकर्मबहिष्कृतः ॥
पुत्रोत्पत्तौ तयोः पुत्रा अन्त्यजत्वमवाप्नुयुः ।
तद्दोषपरिहारार्थं देहशुद्धिं समाचरेत् ।
गुरुतल्पसमं प्रोक्तं मुष्कच्छेदविवर्जितम् ।

सगोत्रकन्यायाः परिणये सा मातृवत्परिपालनीया तां न गच्छेत् ।

दारपरित्यागे देवलः ।

निष्कारणतया पत्नीं यस्त्यजेत् पूर्वजोरुषा ।
न तस्येह परत्रापि सद्गतिर्विद्यते क्वचित् ॥

आह गौतमः ।

खराजिनं बहिर्लोम परिधाय समन्ततः ।
शरावपात्रमादाय भिक्षार्थं ग्राममाविशेत् ॥
दारव्यतिक्रमिणे भिक्षां देहिदेहीति याचयेत् ।
सप्तागाराण्यटित्वाऽथ भोजयेत्सायमादरात् ।।
षण्मासमेव कृत्वा तु शुद्धिमाप्नोति पौर्विकीम् ।

आपस्तम्बोऽपि-दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षां देहीति सप्तागाराणि भिक्षेत । सावृत्तिः षण्मासान्[1] । स्त्रीणां भर्तृपरित्यागेऽपि निष्कारणतया एवमेव प्रायश्चित्तम् ।

अथ पितृगृहे असंस्कृता रजस्वला चेत्प्रायश्चित्तम् ।

देवलः ।

पितृगृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
साकन्या वृषली ज्ञेया तत्पतिः वृषलीपतिः ।

वृषलः शूद्रः ।

एतां परिणयन्विप्रः न योग्यः सर्वकर्मसु ।
माता पिता च पुत्रश्च त्रयस्ते वृषला मताः ॥

---

1. आपस्तंब धर्मसूत्रम्, प्रश्नः, १, पटलः १०, खण्ड-२८ सू-१९ ।

यदीच्छेदात्मनः शुद्धिं त्यक्त्वा चान्द्रायणं चरेत्[1] ।
न त्यजेत् यदिकामेन चण्डालत्वमवाप्नुयात् ।

कारागृहवास प्रायश्चित्तमाह देवलः ।

कारागृहे बलात्कारात् स्थित्वामासमतन्द्रितः ।
न स्नानं च न सन्ध्यां च न देवर्षि पितृतर्पणम् ।
न स्वाध्यायो न वा होमः शूद्रएव न संशयः ।
प्राजापत्यं मासमात्रे वत्सरे चान्द्रमाचरेत् ।
इमां निष्कृतिमाहिताग्निस्तु त्रिवारमाचरेत् ।
कृत्वाविप्रः पुनः कर्मकुर्यात् शुद्धिमवाप्नुयात्
नान्यथा शुद्धिमाप्नोति यथा भुविसुराघट. ।
स्त्रीणां तदर्धम् ।

अथ बन्दीकृतप्रायश्चित्तम् । मार्कण्डेयः ।

बन्दीकृतास्तु या नार्यः निवसेयुः तदालये ।
पक्षं मासं ऋतुं वाऽपि संवत्सरमथापि वा ।
न तस्या निष्कृतिर्दृष्टा व्यभिचारो यदा भवेत् ।
तत्रापि गर्भसंपत्तौ परित्यागो विधीयते ।

---

1. अतः आश्वलायनोक्तां निष्कृतिं कृत्वा तां परिणयेत् । सा च निष्कृतिरेवम् । कन्यायाः ऋतून् संख्याय तावत्संख्याका गाः दद्यात् । अशक्तौ एकां गां दद्यात् । तत्राप्यशक्तौ ऋतुसंख्याकब्राह्मणान् भोजयेत् । अथ वा ऋतुसंख्याकगोमूल्य दानं कुर्यात् एतत्कन्यापितुः । कन्या त्रिदिनमुपोष्य पयः पीत्वा अदृष्टवसे कन्यायै रत्नभूषणं दद्यात् । तामुद्वहन् वरः कूश्माण्डहोमं कुर्यात् । कूश्माण्डमन्त्राः यद्देवा देव हेडनमित्यादिमन्त्राः ।

एवं निष्कृतिं कृत्वा शुद्धिं सम्पाद्य उद्वहेत् । एवं कृते ।
वृषलीपतित्वदोषो नापद्येत ।

दैवात्तैः पुनरुत्सृष्टा तत्र शुद्धिः कथञ्चन ।
तां पतिः पुनरादातुमिच्छेद्यदि सभां गतः ॥

निवेदयेद्यथातत्वं विचार्य सभया ततः ।
षष्टिभिर्मृत्तिकाभिश्च पुनशौचमनन्तरम् ॥

कारयित्वा विधानेन स्नापयित्वा नदीजलैः ।
पूर्वमुक्तं ततः कृत्वा प्रायश्चित्तमुपोषणम् ।

**रोगनिवृत्यर्थं स्तन्य मद्यपाने ।**

यदिरोगनिवृत्यर्थं स्तन्यं मद्यं पिबेद्यदि ।
तदा रोगनिवृत्तिश्चेत् मरणं वा भवेदुत ॥
तस्यदेहविशुध्यर्थं तप्तकृच्छ्र समाचरेत् ।

पुनः संस्कारः कर्तव्यः । स यदि मृतः पुत्रैस्तप्तकृच्छ्रं कारयेत् ।

**अथ जातिभ्रंशकरण प्रायश्चित्तम् ।**

व्यतीपाते यदन्नं च महापुरुषभोजनम् ।
कुमारभोजनेभुक्तिः दशाहे बलिरेव च ।
भूतप्रेतपिशाचानां यदन्नमुपकल्पितम् ।
कुटुम्बभोजनं चैव ब्रह्मराक्षसभोजनम् ॥

एतानि दुरन्नानि ।

एष्वन्नेषु च यो विप्रः धनलोभपरायणः ।
भुक्त्वा तस्य गतिर्नास्ति पिशाचत्वमवाप्नुयात् ॥

तस्य दोषोपशान्त्यर्थं प्राजापत्यद्वयं चरेत् ।
पुनः संस्कारमापन्नः पञ्चगव्यं पिबेत्ततः ।

अथाऽयुतब्राह्मणभोजन सहस्त्रब्राह्मणभोजनप्रायश्चित्तम् ।

अयुते वा सहस्रे वा नानावर्णसमागमे ।
पतितक्लीब-बैडाल-व्रात्य-तस्करपूरिते ॥

कुण्डगोलकसङ्घातनटगायकसङ्कुले ।
पाषण्डजनसंसर्गे सर्वपातकिसङ्कुले ॥

विप्रस्तु लोकमन्विच्छन् न भुञ्जीयात् कदाचन ।
यमो जिह्वां दहत्याशु संन्दशैः भृशदारुणैः ॥

तदन्ते भस्ममासाद्य विड्वराहत्वमाप्नुयात् ।
एकस्मिन्दिवसे भुक्त्वा पञ्चगव्यं पिबेत्ततः ॥

पक्षं मासं वत्सरं वा पराकं चान्द्रमाचरेत् ।
वर्षोपरीह शूद्रत्वम् अतस्तद्वर्जयेत् बुधः ॥

दीर्घसत्रभोजने ।

वर्षद्वयं वा वर्षं वा योवा कोवा नराधिप ।
सङ्कल्प्यभोजयेत् विप्रान् तद्दीर्घं सत्रमुच्यते ॥

विप्रस्तत्र न भुञ्जीयात् भुक्त्वा नरकमश्नुते ।
कर्तारं स्वकृतं पुण्यं गच्छत्येव न संशयः ।
तस्य निष्कृतिः पूर्ववत्कार्या ।

देवलः । शूद्रसत्रे न भुञ्जीयात् प्राणैः कण्ठगतैरपि ।
देहान्ते नरकं गत्वा भुवि भूयात्सवायसः ।

शूद्रान्नं शूद्रसम्पर्कं मासमेकं निरन्तरम् ।
कृत्वा शूद्रत्वमासाद्य चण्डालत्वमवाप्नुयात् ।

मनुः । तदन्नं तद्गृहे भुक्तिः तदनुज्ञानिरीक्षणम् ।
तदाज्ञामप्यवाप्याथ भुक्त्वा शूद्रत्वमाप्नुयात् ।

**आद्यमहैकोद्दिष्टभोजने प्रायश्चित्तम् ।**

देवलः । मृताहैकादशे विप्रः भुक्त्वा कवलसंख्यया ।
तावद्युगसहस्राणि रौरवं नरकं व्रजेत् ।
तदन्ते भुवमासाद्य रक्तपास्तु भुवस्थले ।
कवले कवले चान्द्रं कृत्वा शुद्धिमवाप्नुयात् ।
पुनः संस्कारः कार्यः ।

**अथ नग्नश्राद्धे प्रायश्चित्तम् ।**

नग्नश्राद्धे नवश्राद्धे गृहीत्वाऽऽमं द्विजोत्तमः ।
न तस्य पुनरावृत्तिः यमलोकात्कदाचन ।
जायते भुवि दुष्टात्मा स्थावरत्वमवाप्नुयात् ।
नग्नश्राद्धे तु चान्द्रं स्यात् प्राजापत्यं नवादिके ।
आद्यश्राद्धे तदर्धं स्यात् तदर्धं स्यात्सपिण्डने ।

**अथ सूतकान्नभोजने ।**

सूतकद्वितये राजन् ज्ञातेरन्यो द्विजो यदि ।
अज्ञानाद्भोजनं कृत्वा सद्यः संस्कारमर्हति ।
ज्ञात्वा तदन्नं संछर्द्य पञ्चगव्यं पिबेत्तदा ॥
छर्द्यभावे ह्युपोष्यैव पञ्चगव्येन शुध्यति ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्ततः ॥

**श्राद्धशिष्टान्नभोजने देवलः ।**

अमायां पैतृकश्राद्धे सर्वश्राद्धे महालये ।
श्राद्धेवं षण्णवत्याख्ये सपिण्डीकरणे तथा ।
मासिकेषु सदा विप्रः न कुर्याच्छेष भोजनम् ॥

महाभारते ।

चौलकर्मणि भोक्तारः भोक्तारो यज्ञकर्मणि ।
श्राद्धशिष्टान्न भोक्तारः ते वै निरयगामिनः ॥

सगोत्राणां सकुल्यानां ज्ञातीनां च न दोषभाक् ।
पुत्रीणां अन्यगोत्राणां विधवानां च दुष्यति ॥

यतीनां कर्मनिष्ठानां महतां ब्रह्मचारिणाम् ।
न भोक्तव्यं पैतृकादौ पितृशेषं महात्मनाम् ॥

जाबालिः ।

श्वशुरस्य गुरोर्वाऽपि मातुलस्य महात्मनः ।
ज्येष्ठभ्रातृ पितृव्यस्य ब्रह्मनिष्ठस्य ज्ञानिनः ।
एतेषां श्राद्धशिष्टान्नं भुक्त्वा दोषो न विद्यते ॥

इति केचित्प्रशंसन्ति इति, यत्तदसाम्प्रतम् ।

लिङ्गपुराणे ।

मातुलस्य गुरोर्वाऽपि श्वशुरस्य महात्मनः ।
पित्रोश्च ब्रह्मनिष्ठस्य ज्येष्ठभ्रातुश्च ज्ञानिनः ॥

पैतृकेषु न भोक्तव्यं विधवानां तु सर्वदा ।
शिष्टान्नमन्यगोत्राणां तथा च ब्रह्मचारिणाम् ।
प्राजापत्यं विशुध्यर्थं ज्ञातीनां तु न दोषभाक् ॥

व्रतिनां योगनिष्ठानां तथा सन्यासिनामपि ।
शेषभुक् देहशुध्यर्थं पराकं कृच्छ्रमाचरेत् ॥

ब्रह्मचारिणां स्वपितृशिष्टान्न भोजने न दोषः ।
विधवानामन्यगोत्राणां तत्रापि न भोक्तव्यम् ॥

## अथ क्रीतान्नभोजने

देवलः ।

देवालयेषु मार्गेषु तीर्थेषु नगरेषु च ।
विप्रः क्रीतान्नभोक्ता चेत् तदा नरकमाप्नुयात् ॥
विप्राः कण्ठगतप्राणा. क्रीत्वान्नं यदि भुञ्जते ।
ते गत्वा नरकं घोरं नानायोनिषु सम्भवः ॥

तस्मात्तस्य विशुद्ध्यर्थं प्रायश्चित्तमुदीरितम् ।

त्रिरात्रे प्राजापत्यं, पक्षे तप्तं, मासे महातप्तं, वत्सरे चान्द्रम् ।

अतः परं शूद्रतुल्य· विद्वानपि स दोषभाक् ।
विधवानां ब्रह्मचारिणां च द्विगुणम् ।

सङ्घातभोजने देवलः ।

सङ्घीभूय यदा विप्रा स्वै· स्वै. द्रव्यैः एकभाण्डे पाचयेयुः तदा दोषमवाप्नुयुः ।

शूद्रतुल्या भवन्त्येते प्रायश्चित्तं समाचरेत् ।
एकरात्रे पञ्चगव्यं, द्विरात्रे यावकं चरेत् ।
प्राजापत्यं त्रिरात्रे तु पक्षे चान्द्रायणं स्मृतम् ।
मासमात्रे शूद्रतुल्याः स्युः स्त्रीणामर्धं मुनीरितम् ।

यागान्नभोजने ।

यज्ञेषु पशुबन्धेषु यागार्थं पचनं हविः ।
तदा विप्रै. न भोक्तव्यं लोकेप्सुभिरकल्मषैः ॥

पचनं हविरिति यज्ञशालादीक्षितगृहे सम्पादितमन्नमित्यर्थः । वपायागात्पूर्वं भोजने प्राजापत्यं पुनरुपनयनम् । सुबोधिनीमते

तद्धूर्तुः पादोदकपानं विधवानां केशवपनम् । ब्रह्मचारिणां सन्यासिनां च चान्द्रम् ।

चौलादौ भोजने ।

चौलकर्मणि सीमन्ते भुक्त्वा पुंसवने सदा ।
प्रायश्चित्तं द्विजैः कार्यं तथा दुष्टान्नभोजने ॥

सु मुहूर्तात् परं तप्तं तत्पूर्वं वेदमातरम् ।
जप्त्वा शुद्धिमवाप्नोति सहस्रं विधिपूर्वकम् ।
स्त्रीणामर्धं यतीनां च व्रतिनां चान्द्रमुच्यते ॥

गणकदेवलकान्नभोजने । देवलः ।

देवलकान्नभुक् पापी तथा गणकभोजनः ।
मद्यपौ तौ विजानीयात् सर्वकर्म बहिष्कृतौ ॥

एकरात्रे पञ्चगव्यं द्विरात्रे यावकं स्मृतम् ।
मासमात्रे पराकं स्यात् अब्देचान्द्रमुदीरितम् ॥
अतः परं तत्समः स्यात् स्त्रीणामर्धमुदीरितम् ।

अथास्नानभोजने ।

अस्नाताशीमलं भुङ्क्ते ह्यजपः पूयशोणितम् ।
अहुताग्निः क्रिमिं भुङ्क्ते ह्यदाता विषमश्नुते ।

श्राद्धकाले तु चान्द्र स्यात् ग्रहणे तद्वयं स्मृतम् ।
पञ्चपर्वसु तप्तं स्यात् इतरत्र तु यावकम् ।

इतरत्रेत्यनेन ज्ञायते यत् अस्नात भोजनादौ यावकमिति । इद-मरोगिविषयम् ।

**पर्युषितान्नभोजने**

जले निधाय पूर्वेद्युः यदन्नमुपकल्प्यते ।
तत्पर्युषितसंज्ञं स्यात् भुक्त्वा पापमवाप्नुयात् ।
हिंगु-जीरक-सम्मिश्रं-तिन्त्रिणीरसवेष्टितम् ।
दुर्गन्धरहितं चान्नं भोक्तव्यं द्विजपुङ्गवैः ।
पर्युषितान्नभक्षणे चान्द्रायणम् ।
त्रिरात्रं पञ्चरात्रं वा भुक्त्वा पर्युषितं द्विजः ।
तस्योपनयनं भूयः चान्द्रायणमथाचरेत् ॥
ब्रह्मचारिणो वत्सरभोजने पुनरुपनयनम् चान्द्रद्वयं च ।
दुर्गन्धसहितं भक्ष्यं तथा पर्युषितं च यत् ।
शष्कुलीमाषनिर्माणं विपणिस्थं च यद्भवेत् ।
तैलपक्वविहीनं च न भोज्यं स्याद्द्विजातिभिः ।
दुर्गन्धं पूतिगन्धं च पितृदेवविवर्जितम् ।
निष्कारणतया विप्रः न भुञ्जीयात कदाचन ।
जिह्वाचापल्यमागम्य भक्षयेद्यदि पूर्वजः ।
तद्दोषपरिहारार्थं यावकं कृच्छ्रमाचरेत् ।
दुष्टशाकभक्षणे ।
पलाण्डु लशुनाक्रान्तं भावदुष्टं परित्यजेत् ।
एतानि विप्रो नाश्नीयात् अशित्वा दोषभाक्भवेत् ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्ततः ।
कारणं विना परमान्नादि भक्षणे देवलः ।
परमान्नं च कृसरं वृथा पक्वं द्विजोत्तमः ।
भुञ्जीयात् केवलं तच्च नरके वासमश्नुते ।

रवौ धनुः समायाते गृहे कन्या रजस्वला ।
पित्रर्थं देवकार्यार्थं परमान्नं प्रशस्यते ।

रजस्वला - प्रथमरजस्वला । तीर्थयात्रायां परमान्नाशनं न दोषाय । एतैर्निमित्तैर्विना भक्षणे पञ्चगव्यं पिबेत् ।

एकादश्यां अन्नभोजने ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
ब्रह्महत्यादि पापानि ह्यन्नमाश्रित्य सन्ति हि ॥
तस्मादन्नं परित्यक्त्वा ह्युपवासं समाश्रयेत् ।
कृष्णपक्षेऽन्नभुक् तत्र स पापफलभुक् भवेत् ॥

'शुक्लामेव सदा गृही' इति वचनं पाक्षिकं काम्यं च ।

एकादश्यन्नभुक् पापी शुद्ध्यर्थं चान्द्रमाचरेत् ।
विधवानां संन्यासिनां व्रतिनां द्विगुणं प्रायश्चित्तम् ।

व्रात्याद्यन्नभोजने ।

व्रात्यान्नं यदि कुष्ठ्यन्नं भुङ्क्ते विप्रो क्षुधातुरः ।
कवले कवले चान्द्रं कृत्वा शुद्धिमवाप्नुयात् ॥
नग्नो वेदपरित्यागी व्रात्योगायत्रि नाशकः ।
कुष्ठी तत्र स विज्ञेयः दुश्चर्मा मन्त्रघातुकः ॥
तेषामन्नं द्विजोभुक्त्वा चान्द्रायणमथाचरेत् ।

कुण्डगोलकादि अन्नभक्षणे ।

स्वस्थे भर्तरि या नारी जारासक्ता भवेद्यति ।
तदुत्पन्नस्तु कुण्डःस्यात् मृतेभर्तरि गोलकः ॥
स्वस्थं ज्येष्ठमतिक्रम्य कनीयानुद्वहेत् स्त्रियम् ।

सज्येष्ठः परिवित्तिः स्यात् परिवेत्ता स ह्यानुजः ।
तत्पुत्रः परिविन्नः स्यात् परिविन्दो द्वितीयजः ।

पराशरः ।

परिवित्तिः परिवेत्ता च तथा तौ कुण्डगोलकौ ।
तेषां पुत्रश्च पौत्रश्च तदन्नं परिवर्जयेत् ।
तेषां गृहे तु योऽश्नीयात् सकृत् चान्द्रायणं चरेत् ॥

मासे चान्द्रं पराकं च वत्सरे श्रृणु निष्कृतिम् ।
चान्द्रायणं पराकं च प्राजापत्यं समाचरेत् ॥
ततः परं तत्समः स्यात् विधवानां तु पूर्ववत् ।

यत्यन्नभक्षणम् ।

यत्यन्नं यदि पात्रस्थं यतिना प्रेषितं तथा ।
दम्पत्योर्भुक्तशेषं यत् भुक्त्वा चान्द्रायणं चरेत् ॥
यतिः द्रव्याण्यर्जयित्वा समाराधनमाचरेत् ।
तत्रचान्नं न भोक्तव्यं द्विजैः शुद्धैः कदाचन ॥

भुक्त्वा चान्द्रायणम् । यतिना भिक्षामटित्वा भुक्त्वा तत्र यच्छिष्यते तत्पात्रस्थम् ।

बालाश्च कुलवृद्धाश्च गर्भिण्यातुरकन्यकाः ।
संभोज्यातिथि भृत्यांश्च दम्पत्योः शेषभोजनम् ॥

कर्तव्यमिति शेषः

अथ उच्छिष्टान्नभोजने देवलः ।

उल्लङ्घितं पादघातं बिडालाखुविमर्दितम् ।
देवपूजाविहीनं यत् वैश्वदेव विवर्जितम् ॥

देवालये तु यद्भुक्तं यदन्नं मूल्यसम्भवम् ।
पुत्रैः पौत्रैश्च यद्भुक्तम् पुत्रीपुत्रैरथापि वा ॥
अनुजेन च पत्न्या वा सहैकत्र तु भोजनम् ।
भार्याविलोकने चैव दुष्टमन्नं तदा विदुः ॥
एतद्भुक्त्वा द्विजोयस्तु महापापं समश्नुते ।
भोक्तुरागमनात्पूर्वं अन्न यत् परिवेषितम् ॥
उच्छिष्टं तद्विजानीयात् तप्तकृच्छ्रं समाचरेत् ।
द्विजः कामातुरो यस्तु पत्न्या सह यदन्नभुक् ॥
पश्चाच्चान्द्रायणं कृत्वा शुद्धिमाप्नोति पौर्विकीम् ।

पत्न्यासह भोजनमाह मनुः ।

महारण्ये च यात्रायां पथि चोराकुले सति ।
असहायो यदि भवेत् तदा भुक्तिर्न दोषभाक् ॥

गालवः ।

विवाहकाले यात्राया पथिचोरसमाकुले ।
एकत्र यानमारोहे भार्या सह न दोषभाक् ॥

अन्यत्र भोजने चान्द्रायणम् । अभ्यासे द्विगुणम् ।

अतीवतृषितो विप्रः न शूद्रस्योदक पिबेत् ।
तद्भाण्डे भोजनं चैव पुनः संस्कारमर्हति ॥
शूद्रान्न ज्ञानतो भुक्त्वा पुनः संस्कारमर्हति ।
पश्चाद्देहविशुद्ध्यर्थं तप्तकृच्छ्रं समाचरेत् ॥

देवलः ।

पतितश्च खलश्चैव दुर्जनः पिशुनः तथा ।
जारश्च गायकश्चैव नित्यं याच्ञापरस्तथा ॥

भिषक् चोरश्चाततायी ह्यते वै दुर्जनाः स्मृताः ।
एतैरावेष्टिता पङ्क्ति पापदा सर्वदा नृणाम् ।
एतेषामन्नभुक् विप्रः चान्द्रायणमथाचरेत् ॥
मासे चान्द्रं पराकं च वर्षे चान्द्रं महृच्चरेत् ।

पिण्याकादि भक्षणे ।

पिण्याक कम्मथिततक्र-पलाण्डु-वृञ्जन-लशुन- छत्राक-श्वेतवार्तिक-रक्तशिग्रू-ताम्रपात्रस्थ-दुग्ध-दधि-नारिकेलोदकानि ज्ञात्वा भक्षणे चान्द्रम् । अज्ञाने तप्तम् ।

पीतशेषं द्विज पीत्वा प्राजापत्यं समाचरेत् ।
पात्राभावे जलाभावे पीतशेष द्विजः पिबेत् ॥
भूमौकिञ्चिद्विनिक्षिप्य पीत्वा विप्रो न दोषभाक् ।
आसन शयन वस्त्र जायापत्य कमण्डलुम् ।
आत्मनः शुचिरेतानि परेषां न शुचिर्भवेत् ॥

अत्र स्वपात्रस्थोदकमेव शुद्धम् । प्राजापत्यं प्रायश्चित्तम् ।

देवलः ।

उष्ट्री क्षीरं मृगी क्षीरं सान्धिन्य मृतवत्सकम् ।
मुखनोदकपान च पुनः संस्कारमर्हति ।

तप्त कृच्छ्रं समाचरेत् ।

खरोष्ट्र्यो क्षीरपाने औषधार्थं चेत् तप्तकृच्छ्रम् । न पुनः संसस्कारः ।

मनुष्यस्य खरस्यापि सूकरस्य द्विजन्मनः ।
मलं मूत्रं पिबेद्यस्तु रेतो वा रोगपीडितः ॥
द्विजः पश्चात् पुनः कर्म तप्तं कृत्वा तु शुध्यति ।

एतदज्ञाने । ज्ञात्वा चान्द्रम् । पुनः संस्कारः ।

आतुरविषये एतेषां रोगनिवृत्त्यर्थपाने तप्तमात्रम् ।
अल्पेऽन्ने शाकमध्ये वा दधिक्षीरादिषु द्विजः ।
दन्तकेश-नखा-विष्ठा कीटो लोमास्थि चर्म च ।
यदि पश्येत्तदा त्याज्यं स्वपात्रस्थं पिबेद्यदि ॥
एकरात्रमुपोष्याथ गायत्र्यष्टशतं जपेत् ।
पञ्चगव्यं च प्राशयेत् ।

बह्वन्ने जले सम्प्रोक्ष भस्मक्षिप्त्वा पश्चाद्भोजने न दोषः ।

भोजनकाले दीपो यदि विनश्यति । पात्रं धृत्वा भानुं स्मरेत् पुनः दीपं प्रज्वाल्य गायत्र्या सम्प्रोक्ष्य पुनः भुञ्जीत । पुनः अन्नं न गृह्णीयात् । पात्रस्थमेवाश्नीयात् ।

एकहस्तेन वामेन पटे पुष्पे फले त्वचि ।
पाषाणे दारुताम्रे च भुक्त्वा दोषमवाप्नुयात् ॥
भुक्त्वाऽन्नं पूर्वजोऽज्ञानात् प्राजापत्यं समाचरेत् ।
व्रतार्थं वामहस्तेन भोजने स्त्रीणां न दोषः ।

शवाश्रित ग्रामभोजने ।

ग्रामे वा पत्तने वा स्यात् कुणपो विप्रसंज्ञितः ।
न तावत् भोजनं कुर्यात् यावत् ग्रामान्न निष्कृतः ।
यदि भुङ्क्ते स पापीयान् प्राजापत्यं समाचरेत् ।
पाकयज्ञं तथा भुक्तिः जलाहरणमेव च ॥
न कुर्यात्तावतो विप्रः कुणपो यदि तिष्ठति ।
बालानां क्षीरपानेऽपि न दोषः । सूर्य-सोमोपरागभोजने

प्रदीपिः ।

सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् भुक्त्वा पापं समश्नुते ॥
यदि धर्मं परित्यज्य यो विप्रस्त्वन्यथा चरेत् ।
तस्योपनयनं भूयः तप्तसान्तपनं स्मृतम् ॥

सूर्यग्रहे तप्तं - चन्द्रग्रहे सान्तपनम् ।

उभयोः पुनः संस्कारः ।

विधवानां संन्यासिनां च संस्कारवर्जं प्रायश्चित्तम् ।

भिन्नपात्रस्थभोजने ।

स्वर्ण-रजत-कांस्येषु पालाश कदलीषु च ।
विप्रो भुञ्जन् महत्पुण्यमवाप्नोति न संशयः ॥
यदि भिन्नं परित्याज्यं तत्र भुक्त्वैन्दवं चरेत् ।
सन्ध्याभोजनादिकाले चण्डलादि ध्वनि श्रुतौ ॥
स्नानभोजनवेलयां जपहोमेषु पैतृके ।
सन्ध्यादि नित्यकाम्येषु देवपूजासु सर्वदा ॥
चण्डालादि ध्वनिं श्रुत्वा सर्वमन्नं परित्यजेत् ।
श्रोत्रं स्पृष्ट्वा दक्षिणं तु जलेन तु विशुध्यति ॥
दर्शने सम्परित्यज्य पुनः कर्मसमाचरेत् ।

देवलः । सूकरं कुक्कुटं श्वानं यो दृष्ट्वा शुभकर्मसु ।
तत्कर्म सम्परित्यज्य पुनः कृत्वा विशुध्यति ॥
भोजने भोजन त्यजेत् ।

रजस्वलान्नभोजने ।

रजस्वलान्नं यो भुक्त्वा द्विजोऽज्ञानात् सकृद्यदि ।
रौरवं नरकं याति तस्मात् चान्द्रायणं चरेत् ॥

ऋतुमत्यज्ञानात्पचनादिकं कृत्वा भुक्त्यनन्तरं ईषच्छुष्कं रजः दृष्ट्वा अहो रजस्वला भवामीति ज्ञात्वाऽपसरति, तदपसरणे ये भुक्तवन्त ते रजस्वलान्नभोक्तारः । तेषां पुनरुपनयन-चान्द्रायणादिना शुद्धिः ।

पुनः संस्कारश्च । तदाह मार्कण्डेयः ।

अज्ञात्वा पुष्पिणी नारी कृत्वा वै पचनक्रियाम् ।
पश्चात् शुष्करजो दृष्ट्वा तस्माद्देशादपक्रमेत् ॥
तदन्नभक्षणे पुनरुपनयन चान्द्रायणाभ्यामन्तरा न शुद्धिः ।

पञ्चगव्यप्राशनं च ।

शूद्राद्यैः त्रिविधैर्वर्णैः चण्डालादिनिरीक्षितम् ।
पुष्पवत्या सूतिकया दृष्टं वा पतितादिभिः ।

अन्न भक्ष्य तथा शाकं भुक्त्वा विप्रः सकृद्यदि ।
प्रायश्चित्तं चरेत्तत्र कर्मार्हः संभवेदिह ।

कायकृच्छ्रं चरित्वाऽथ पञ्चगव्येन शुध्यति ।
पूर्वोक्तैश्च निमित्तैर्यत् स्पृष्टमुच्छिष्टमेवतत् ।

निषिद्धदिवस भोजने ।

पित्रोर्मृताहात्पूर्वेद्यु भानुवारे च सङ्क्रमे ।
तथा चतुर्दश्यष्टम्योः व्रतेषु च महोत्सवे ।
श्रोत्रिये मरणं प्राप्ते गुरूणां दुःखसंभवे ।

पितरौ व्याधिनाग्रस्तौ महाराजनिपातने ।
उक्तेष्वेव निमित्तेषु द्विवारं नैव भोजनम् ।

**मार्कण्डेयः ।**

अर्के द्विपर्वरात्रौ च चतुर्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्त्वा कृच्छ्रं चरेत्तदा ।
अज्ञानात् कायकृच्छ्रं स्यात् ज्ञात्वा तप्तं समाचरेत् ।

**देवपूजां वैश्वदेवं च परित्यज्य भोजने देवलः ।**

देवताराधनं त्यक्त्वा वैश्वदेवं तथातिथिम् ।
नित्यहोमं ब्रह्मयज्ञं त्यक्त्वा भुञ्जीत यो द्विजः ।
तप्तकृच्छ्रं चरन् नत्र पञ्चगव्येन शुध्यति ।

**उष्णोदकस्नाने प्रायश्चित्तम् । स एवाह ।**

उष्णोदकेन सप्ताहं तथा कूपोदकेन च ।
मृत्तिकाभिर्विना शौचं तथा सप्ताहमादरात् ॥
प्राजापत्यं विशुद्धयर्थं चरेत् पूतोभवेदिह ।
पञ्चगव्यं पिबेत्पश्चात् तेनशुद्धिः न चान्यथा ।
ब्रह्मचारि-सन्यासि-विधवानां द्विगुणम् ।

**शिखा उपवीतादिविना भोजने देवलः ।**

विना यज्ञोपवीतेन शिखयावा द्विजोत्तमः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।

**गौतमः ।** शिखां च ब्रह्मसूत्रं च नष्टं भ्रष्टं यदा भवेत् ।
धृत्वा नवं पुनः मन्त्रात् भ्रष्टं तत्र जले क्षिपेत् ।
यावत् शिखा पुनर्जाता गोवालं तत्र धारयेत् ।
ब्रह्मविष्णुमहेशाद्याः ब्रह्मयज्ञस्य तन्तवः ।

ब्रह्मसूत्रं यदा सव्यात् अंसात् भ्रष्टं भवेद्यदि ।
चतुरङ्गुलतः पश्चात् प्राणायामशत चरेत् ॥
मणिबन्धे स्थितं चेत् स्यात् प्राणायामसहस्रकम् ।

अथ भोजनकाले क्षुतादि सम्भवे ।

विप्रो भोजनकाले तु जृम्भणं क्षुतमेव वा ।
अपानवायोरुत्सर्गे स्नत्वा कायं समाचरेत् ।

भोजनकाले अन्योन्यसंसर्गे ।

एकपङ्क्त्युपविष्टौ यौ परस्परं स्पृशेद्यदि ।
तदन्न मांसतुल्यं स्यात् भुक्त्वा चान्द्रायण चरेत् ।
पिता पुत्रं भ्रातरं वा स्पृष्ट्वा काय समाचरेत् ।

शिवनिर्माल्यभोजने ।

शंभोर्निवेदितं भोज्यं प्रत्येक देवतां विना ।
द्विजोऽज्ञानाद्यदा भुक्त्वा तदा तप्तं समाचरेत् ।

सालग्रामादिसहिते चान्द्रायणफलं स्मृतम् ।
अन्यथा मांसतुल्यं स्यात् तत्तोयमसृजा समम् ।

नीलवस्त्रधारणे ।

नीलवस्त्रं च तच्चिह्नं द्विजोऽज्ञानात् धरेद्यदि ।
न कर्मार्हो भवेत्तत्र यावकं कृच्छ्रमाचरेत् ।

अभ्यासे तु पराकं स्यात् वत्सरे चान्द्रमुच्यते ।
नीलवासास्तु यो भुङ्क्ते दिने कायं समाचरेत् ।
अभ्यासे तु महान्दोष. नीलवस्त्रं न धारयेत् ।

**अथ प्रकीर्णक प्रायश्चित्तम् ।**

पापेभ्य पूर्वमुक्तेभ्यः नवभ्योऽन्यत्प्रकीर्णकम् ।

**तत्र दुर्मृतौ ।**

विद्युदग्निपयः पाश चण्डालैः ब्राह्मणो हतः ।
एकद्वित्रि चत् पञ्च षडब्दं कृच्छ्रमाचरेत् ।

एतै निमित्ते यो विप्र प्रमादात् म्रियते यदि ।
तस्य चैतानि कृच्छ्राणि कृत्वा दाहं समाचरेत् ।

**गौतमः ।** दुर्मृतानां तथा पुत्रः कृत्वा कृच्छ्राणि धर्मतः ।
दहेत ?ात्विशुद्धोऽभून अन्यथा दोषमाप्नुयात् ।

व्याघ्रभल्लूक वाराह सर्प वृश्चिक कुञ्जरैः ।
शृङ्गिभि विषपानाद्य वृक्ष-शैल-निपातनैः ।

विप्रो यदा मृत ?ा? खड्ग दण्डादिभि खलैः ।
सद्य कृत्वा षडब्द च ?त्रो दहनमाचरेत् ।
वत्सरे द्विगुणम् ।

क्षत्रियवैश्ययोः दुर्मृतौ अर्धं पादजस्य पादम्
स्त्रीणामर्धम् ।

दुर्मृतौ रज्जुपाशच्छेदे तप्तकृच्छ्रम् ।

दुर्मृतवहने पराकं प्रायश्चित्तम् ।

मूल्यग्रहणेन शववहने प्राजापत्यं चरेत् ।

मूल्य विना तु यो विप्रः कुणपं संवहेद्यदि ।
पादे पादेऽश्वमेधस्य सम्पूर्णं फलमश्नुते ।

**धनिष्ठापञ्चकमृतौ ।**

धनिष्ठापञ्चके यस्तु विप्रो यदि विपद्यते ।
तदा गृह पतेर्भीतिः गृहं वाऽरिष्टमश्नुते ।
तद्दोषपरिहारार्थं तत्र दानं समाचरेत् ।
एकाशीति फल कांस्यं तदर्धं वा तदर्धकम् ।
तिलं प्रक्षिप्य दानत्र्यं दत्त्वा दोषात् विमुच्यते ।

**पक्षान्तरमाह गौतमः ।**

धनिष्ठापञ्चकमृतौ हिरण्यं वह्नने क्षिपेत् ।
'वह्नवपामिति' मन्त्रेण ह्याहुतित्रयमाचरेत् ।

**अथ नन्दादिमरणे ।**

उभयोः पक्षयोः प्रतिपत् षष्ठीचैव हरेर्दिनम् ।
एता नन्दा महाराज भद्रा वक्ष्ये तथा श्रृण ।
द्वितीया सप्तमी चैव द्वादशी पक्षयोर्द्वयोः ।
एतासु मरणं प्राप्य सर्वदाऽरिष्टकृत् भवेत् ।
नन्दायां गौ प्रदातव्या भद्रायां मेदिनी तथा ।
विप्रेभ्यो दीयते येन न दोष तत्र वर्तते ।

**दुष्टवारे मृतौ ।**

भानुः कुजो भृगुर्मन्द वारो दुष्टो भवेन्मृतौ ।
भानौ कुजे शनौ वस्त्रं तत्तद्वर्ण प्रदापयेत् ।
भृगौ गुरौ हिरण्येन सहितं वस्त्रं सादरात् ।
एतेन शुद्धिमाप्नोति ह्यदत्वा दोषमाप्नुयात् ।

दुष्टनक्षत्रमाह ।

वह्निभेऽदितिभे चैव नक्षत्रे भगवदेवते ।
इन्द्राग्नीते वैश्वदेवे उत्तराषाढ एव च ।

पूर्वभाद्रपदे चैव मृत्वाऽरिष्टं भवेत्तदा ।
त्रिपान्नक्षत्रे हिरण्यदानम् ।

अथ षण्णिमित्तप्रायश्चित्तम् ।

ऊर्ध्वोच्छिष्टमधोच्छिष्टं अन्तरामरणं तथा ।
कर्णमन्त्रेण राहित्यं अस्नानमरणं तथा ।
तथा पर्युषितं चैव षण्णिमित्तमुदीरितम् ।

मरीचिः । षण्णिमित्ते द्विजो मृत्वा त्रयेण द्वितयेन वा ।
मृतो नरकमाप्नोति तत्कर्तुश्चाशुभं भवेत् ।

तद्दोषपरिहारार्थं प्राजापत्यं पृथक् पृथक् ।
कृत्वा शुद्धिमवाप्नोति कर्तरायुर्विवर्धते ।

गौतमः । पिपीलिका मक्षिका च क्रिमयः श्लेष्मक तथा ।
कुणपोऽस्पृश्यतां याति स्पर्शे कर्ता च पापभाक् ।

तत्पापपरिहरार्थं शुद्धिं कृत्वा दहेत्ततः ।
रजस्वलाभिः स्त्रीभिर्वा श्वभिः पतितकुण्डजैः ।

शूद्रमार्जारकाकाद्यैः स्पृष्टंचेत् रजकादिभिः ।
शवस्य च गतिर्नास्ति कर्तुरायुः क्षयो भवेत् ।
तद्दोषपरिहारार्थं प्राजापत्यं समाचरेत् ।

आसन्दीभञ्जने शालिहोत्रः ।

आसन्दी यदि राजेन्द्र भञ्जयेद्यदि दैवतः ।
आदाहदेशपर्यन्तं कर्तुर्दुःखप्रदं तदा ।
तद्दोषपरिहारार्थं प्राजापत्यं चरेद्द्विजः ।

अथ शवपतने देवलः ।

आसन्देः शकटाद्वापि कुणपो भुवि यः पतेत् ।
तस्यारिष्ट गृहे भूयात् व्याधितस्कर‌राजभिः ।
तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् ।

अथाग्निपतने ।

ग्रामश्मशानयोर्मध्ये यदि वह्निः पतेत् भुवि ।
मृतस्य च गतिर्नास्ति कर्तुरायुर्विनश्यति ।
तद्दोषपरिहारार्थं तस्मिन्अन्नौघृताहुतिः ।
'अग्निमीले'ति मन्त्रेण ह्यग्निर्मूर्धेति मन्त्रत. ।
पुनः पात्रान्तरे स्थाप्य कर्मशेष समाचरेत् ।

दहनयोग्यस्य खनने ।

बालं वा बालिकां वाऽपि दाहयोग्यं खनेद्भुवि ।
महान्त नरकं गत्वा भवेत् बालग्रहस्तदा ।
बिलादुद्धृत्य तं बालं प्रोक्षयेत् पञ्चगव्यतः ।
तत्तन्मन्त्रै जलै पश्चात् भूभिर्भूम्नातु मन्त्रतः ।
कर्ता तं दाहयेत्पश्चात् कृच्छ्रं दत्वा विधानतः ।

खननयोग्यस्य दहने देवलः ।

यो विप्रः खनने योग्यं द्विवर्षात्किञ्चिदूनकम् ।
यदा दहेत् निर्वोढस्तु बालो याति पिशाचताम् ।

तद्दोषपरिहारार्थं वह्नौ हुत्वाऽऽहुतित्रयम् ।
वह्निं प्रजापतिं सोमं व्याहृतीस्तदनन्तरम् ।
हुत्वाऽन्त्रशवमादाय खनेत् भूमौ प्रयत्नतः ।

**दहनयोग्यस्य दहनाभावे ।**

योविप्रो मातरं तातं भ्रातरं भगिनीं सतीम् ।
स्नुषां दुहितरं साध्वीं पत्नीं वा पुत्रमेव वा ।
दाहयोग्यान् नास्तिकाद्वा लोभाद्वा न दहेद्यदि ।
कर्ता नरकमाप्नोति मृतः प्रेतत्वमश्नुते ।
तद्दोषपरिहारार्थं प्राजापत्यत्रयं चरेत् ।
कर्ता शुद्धिमवाप्नोति ततस्तं दाहयेत्पुनः ।

**उत्तरीयशिलापात्रादिविपर्यासे देवलः ।**

उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये ।
कृच्छ्रत्रयं तदा कृत्वा पुनः कर्म समारभेत् ।
उत्तरीयम् - उदकदानार्थं वस्त्रम् ।

पात्रं चरुश्रपणार्थपात्रम् । देशः पिण्डपचनस्थानम् , पिण्डप्रक्षेपस्थानम् । द्रव्यं तण्डुलमुद्गादिकम् ; एतेषामेकैकस्य नाशे प्रत्येकं कृच्छ्रत्रयं कृत्वा तत्कर्म प्रथमदिवमारभ्य पुनः कुर्यात् ।

**गौतमः** । असगोत्रः सगोत्रो वा यदिस्त्री यदिवा पुमान् ।
प्रथमेऽहनि यः कर्ता स दशाहं समापयेत् ।
अन्यथा दोषमाप्नोति प्रेतत्वान्नविमुच्यते ।
क्षत्रियादीनामप्येवम् ।

**अथ पिण्डोपहति प्रायश्चित्तम् ।**

सृगालगमभ श्वानै दत्तः पिण्डो भुवः स्थले ।
स्पृष्टो भिन्नोऽथवा राजन् कर्तुरायुष्यनाशनम् ।
प्रेत तम्मिन्निराश स्यात् प्राजापत्यं तदाचरेत् ।

**अथ अस्थिसंचयनात्प्राक् दहनाग्निशमने । देवलः ।**

प्रेताग्निश्च विवाहाग्नि व्रनाग्निर्जातकर्मणि ।
नष्टो हुतश्चोपहृत शान्तश्चेत् तत्र दोषभाक् ।
तत्तन्द्रुस्म समूह्याशु 'शंनोदीवी'त्यृचा जलै ।
प्रोक्ष्य तत्रैव समिधं निधाय मनसा हरिम् ।
स्मृत्वा स्मरन् एतैश्च मन्त्रैश्चाभिमन्त्रयतां पुनः ।
'अयं त' इति मन्त्रेण आजुह्वानेति मन्त्रतः ।
उद्बुध्यस्वेति तां त्यक्त्वा लौकिकाग्नि निधापयेत् ।
चतुष्पात्रप्रयोगेण स्रुचाऽऽज्यं परिगृह्य च ।
अयाश्च जुहुयात्पूर्व पञ्चहोतारमादित. ।
ब्राह्मण एकहोतेति दशमन्त्रैः जुहुयात् ।
मिन्दा च जुहुयात् पश्चात् महाव्याहृतय तथा ।
अनाज्ञातत्रय हुत्वा व्याहृतीः प्रणवैः सह ।
इमं मे वरुण तत्वायामि ततस्तन्तुमतीं हुनेत् ।
हुत्वा विप्र. ततः पश्चात् तत्तत्कर्म समाचरेत् ।
प्रायश्चित्तविहीनं चेत् तत्कर्म विफलं भवेत् ।

## विवाहाग्निनाशे

स्थालीपाकप्रभृति शेषहोमपर्यन्तं विवाहाग्निनाशे इदमेव प्रायश्चित्तम् ।

उपनयनादूर्ध्वं चतुर्थदिनपर्यन्तं शान्ते तथैव ।

शिशौ जाते तदा जातकर्मफलीकरणाग्नौ शान्ते दशरात्रमध्ये तदेव ।

अस्थिसञ्चयनात्पूर्वं प्रेताग्नौ नष्टे तदेव प्रायश्चित्तम् अस्थ्युपहृति प्रायश्चित्तम् ।

यस्य सञ्चयनात्पूर्व अस्थीन्यपहृतानि चेत् ।
खरे सृगाले शुनके कङ्कगृध्रादिभिः तथा ।

प्रेतस्य यमलोकः स्यात् कर्तुरायुर्विपर्ययः ।
तद्दोषपरिहारार्थं पञ्चगव्येन शोधयेत् ।

पुरुषसूक्तेन तान्यद्भिः स्नापयेत् अस्थिसञ्चयम् ।
प्राजापत्यद्वयं कुर्यात् उभयोः शुद्धिहेतवे ।

अन्यथा त्वशुभं ज्ञेयं तत्कर्तृगृहवासिनः ।
विप्रस्य कीकसानीह कर्ताऽम्भसि न निक्षिपेत् ।

प्रेतो वैतरणीं याति तत्पुत्रो व्याधिमाप्नुयात् ।
आहिताग्नेर्विना राजन् अन्येषां विधिगौरवात् ।

गङ्गादौ ।

यावदस्थिमनुष्याणां गङ्गातोयेषु तिष्ठति
तावद्युगसहस्राणि स्वर्गे लोके महीयते ।

भागीरथ्यभावे यत्र कुत्राऽपि समुद्रगामिनी जले स्थापयेत् क्षत्रियाणामप्येवमेव ।

अथ परिषद्विप्र प्रायश्चित्तम् ।

परिषत्स्थितस्य विप्रस्य पापबाहुल्यमस्ति यत् ।
तत्पापस्य विशुद्ध्यर्थं प्राजापत्यत्रयं चरेत् ।

मार्कण्डेयः ।

पञ्चगव्यं पिबेत्पश्चात् शुद्धिमाप्नोति सर्वदा ।

विधायक प्रायश्चित्तम् ।

विधायकश्च पापानां तदर्धं दोषभाक् भवेत् ।
तप्तकृच्छ्रद्वयं कृत्वा शुद्धिमाप्नोति पूर्वजः ।
पञ्चगव्य पिबेद्विप्रः नात्रकार्या विचारणा । इति ।

अनुवादकप्रायश्चित्तं देवलः ।

सभामध्ये द्विजोयस्तु पापान्यनुवदेन्नृणाम् ।
तुल्यपापी भवेत्पश्चात् नरकं याति दारुणम् ।

देया द्विजाय गौरेका तत्पाप परिशोधने ।
तुलातिलङ्गृहीतॄणां महतामपि पापिनाम् ।

अनुवानो भवेद्यस्तु तत्तुल्यफलभाग्भवेत् ।
सर्वत्र प्रतिग्रह चतुर्थांश त्यागः कर्तव्यः ।

अथ देशान्तरगमने ।

जननी जन्मदेशश्च जम्बूद्वीपो जनार्दनः ।
तथा च जाह्नवी दुर्गा अजरा पञ्चदुर्लभम् ।

मरणं जाह्नवीतीरे नृणां मुक्तिप्रदायकम् ।
ततोऽस्य स्मरणे मुक्तिः स्मरणेस्यात् जनार्दनः ।

जननी जन्मभूमिश्च मरणे मुक्तिदा सदा ।
तस्मात् स्वजन्मदेशश्च पापनाशकरो नृणाम् ।

देशान्तरे मृतिर्यस्य तस्य जन्म निरर्थकम् ।
तस्य दोषनिवृत्यर्थं प्राजापत्यं समाचरेत् ।

अथ देशान्तरमृतानामस्थि शरीराभावे प्रायश्चित्तं देवलः ।

देशान्तरमृतो पुंसः शरीरास्थ्नोरभावतः ।
अग्नौ स्थिते गृहे तस्य पलाशविधिरुच्यते ।

अथ व्रणे क्रिम्युत्पत्तिप्रायश्चित्तम् ।

यस्य कस्य व्रणे साधु क्रिमयः सम्भवन्ति हि ।
तेनैव मरणं गत्वा सर्वे नरकमश्नुते ।

तद्दोषपरिहारार्थं कृच्छ्रं सान्तपनं चरेत् ।
पश्चात् दहेत विधिना न तेन स तु दोषभाक् ।
स्त्रीणामप्येवमेव ।

मृतस्य पुनरागमने ।

कृत्वा पूर्वं दैवयोगात् कृतप्रेतक्रियः तदा ।
द्विजोऽस्पृश्यो भवेत् सर्वैः ब्रह्मधर्मपरायणैः ।

न तं सम्भाषयेत् क्वाऽपि द्विजो वाऽन्यः पुमांस्तुयः
तस्य दोषनिवृत्यर्थं पितृसूक्तं जपेत्तदा ।

पञ्चगव्येन सम्प्रोक्ष्य स्नाप्य शुद्धजलै तदा ।
प्राजापत्यं षडब्दं च कृत्वा स्वस्त्ययनं चरेत् ।

गर्भाधानादिकं कुर्यात् ततः शुद्धिमवाप्नुयात् ।
अन्यथा दोषमाप्नोति मृतवत्तं परित्यजेत् ।

जाबालिः । पूर्वं सर्वानसून त्यक्त्वा दुराचारपरोद्विजः ।
पश्चात् जीवमपागम्य कृतप्रेतक्रियो यदि ।

तस्य एवं प्रायश्चित्तम् ।

कृतप्रेतक्रियः, कर्णमन्त्र षण्णिमित्त उत्क्रान्ति सर्वप्रायश्चित्तप्रेत-वाहकवरणादिकम् । अनाचार सन्ध्यादिकर्मलोप ।

एतत् मृतइति भ्रान्त्या करणे वेदितव्यम् ।

देशान्तरवासिनः द्वादशवर्षादूर्ध्वं प्रेतक्रियाकरणानन्तर पुनराग-मने प्रायश्चित्तम् ।

गालवः । पूर्वं देशान्तरं गत्वा भ्रमन भूमण्डलं पुनः ।
द्वादशाब्दे गते तस्मिन गत्वा स्वगृहमञ्जसा ।

पराशरः । कृतक्रियस्य पित्रादेः कथं शास्त्रप्रवर्तनम् ।
द्वादशाब्दात् परं प्राप्तं भ्रातृभिः कृतसंस्कृतम् ।

कृत्वा कांस्यादिकं छित्त्वा पश्चात स्वगृहमानयेत् ।
स्नानमभ्यज्य कर्तव्य तान्याह्वान यथाक्रमम् ।

षटगर्भविधानेन पुन संस्कारमाचरेत ।
ब्रह्मोपदेशादारभ्य सर्व कर्म समाचरेत् ।

उशन्तस्त्वेति मन्त्रेण स्वगृह्याग्नौ विधानतः ।
अष्टोत्तरशतं कृत्वा तमग्निं त्रिः परिक्रमेत् ।

लाजहोमविधानेन कृत्वा शेषं समापयेत् ।
षडब्दमुभयोः कृत्वा पूर्वोक्तं विधिपूर्वकम् ।

ब्राह्मणान् भोजयेत् पश्चात् ततो भुञ्जीत वाग्यतः ।
सूतकद्वितये मृतस्य प्रायश्चित्तम् ।

द्वयोराशौचयोर्मध्ये विप्रो दैवान्मृतो यदि ।
तस्य शुद्धिः षडब्दाच्च परिपाद्विधिपूर्वकम् ।

जातके तु षडब्दं [illegible] मृतके [illegible] ।
अस्थिसञ्चयनात्पूर्वं [illegible] ।

सहगमनभीतायाः स्त्रियः प्रायश्चित्तं देवल ।

मृतं भर्तारमुद्दिश्य [illegible] ।
इति या भाषते पूर्वं [illegible] ।

सैव यानि [illegible] क्रमशः ।
तिस्रः कोटचर्धकोटीच रोमाणां [illegible] मानवे स्मृताः ।

तावत्काल वसेत्स्वर्गे भर्तारं याऽनुगच्छति ।
भीत्यानिवृत्ताया दोषनिवृत्यर्थं सत्राग्नौ जहुयात् ।

शतायस्त्वाहेति नवभिः तथैव दशभिर्हुनेत ।
शेषेण आज्येन पत्न्यास्तु सर्वाङ्गं पारलेपयेत ।

ततः शुद्धिमवाप्नोति तथा भर्तापि विशुद्धो भवति
देशान्तर मृतस्याहिताग्नेः लौकिकाग्निदहन ।

देवलः । देशान्तरमृतं राजन् यज्वानं लौकिकाग्निना ।
दहेत्पुत्रः वृथा भूयात् सोऽग्निभिश्च विभिर्विना ।

तदस्थीनि समादाय पुत्रः स्वं देशमागतः ।
प्राजापत्यत्रयं कृत्वा मथित्वाग्नि ततो दहेत् ।

ततः त्वौर्ध्वदैहिकं कर्म धर्मशास्त्रोक्तमार्गतः ।
अनेन शुद्धिमाप्नोति नान्यथाशुद्धिरिष्यते ।
तत्पत्न्या अपि एवमेव ।

अथ गर्भिणी मृतप्रायश्चित्तम् देवलः ।

यदा सा गर्भिणी नारी षण्मासात् मृतिमाप्नुयात् ।
गर्भं छित्वा शिशुं हृत्वा पाददेशे शिशुं खनेत् ।

यदि जीवेत् तदा बालं गृहीत्वा पोषयेत् च तम् ।
तृतीये पञ्चमे षष्ठे दहने तु न दोषभाक् ।
गर्भस्य छेदनार्थं तु तत्पकृच्छ्रं समाचरेत् ।

अथ सूतिकामरणे देवलः ।

सूत्वा पुत्रं यदा नारी दशाहाभ्यन्तरे मृता ।
न तस्या यमलोकाद्वै निवृत्तिः बहुवत्सरैः ।

तद्दोषपरिहारार्थं चत्वारो ऋत्विजः पृथक् ।
एक एव द्विजो वाऽपि वारुणान् कलशान् क्षिपेत् ।

पूर्वादि दिक्षु सर्वत्र जलेनापूर्य यत्नतः ।
वरुणं पूजयेत्तत्र मन्त्रानेतानुदीरयेत् ।

नमकं चमकं चैव पुंसूक्तं वैष्णवं तथा।
पावमानानुवाकं च हिरण्यश्रृंगमिति क्रमात् ।
शान्तिभिः दशभिश्चैव कलशानभिमन्त्रयेत् ।

दशशान्तयः । भद्रं कर्णेभि, नमो ब्रह्मणे, तच्छंयोरावृणीमहे

वमोवाचेयाचोदिता, शंनोवातःपवतां, सन्त्वासिञ्चामि, शंनोमित्रः शंवरुण, अवसाने विद्यमानं च, शंनोमित्रः शं वरुणः, सहनाववतु । अन्येन वासखाच्छाद्य सूतिकां मार्जयेत् जलैः ।

अपोहिष्ठादिभिर्मन्त्रैः देवस्यत्वेति मन्त्रतः ।
शातकुम्भोदकैः प्रोक्ष्य दहेदौपासनाग्निना ।

गौतमः ।

तुषाग्निना दहेत्कन्यां कपालेन वटुं तथा ।
विधुरं विधवां चैव दहेदुत्तपनाग्निना ।

गृहस्थं चैव तत्पत्नीं दहेद्गृह्याग्निना पृथक् ।
आहिताग्निं च तत्पत्नीं वह्निभिश्च त्रिभिः दहेत् ।
अन्यथा दोषमाप्नोति गतिस्तेषां न विद्यते ।

रजस्वलामरणे ।

रजस्वला यदा नारी मृतिं प्रायात् तदा सती ।
नरकं याति सा नारी रक्तकुण्डे निमज्जति ।

अतः तस्याः अपि सूतिकामृतिप्रायश्चित्तमेव ।
अथाहिताग्नेः दुर्मरणे ।

भारद्वाजसूत्रम् ।

यद्याहिताग्निरध्वानं गच्छन् सहाग्निहोत्रेणानुव्रजेत् । पत्नी ग्राममर्यादां नदीश्च नातिहरेयु । यदि हरेयु लौकिकाः सम्पद्येरन । यद्यन्यरण्योर्वा समारूढेष्वग्निषु यजमानो म्रियेत पूर्ववत् आयतनानि कल्पयित्वा यजमानायतने प्रेतं निधाय गार्हपत्यायतन अरणी निधाय मन्थति । दक्षिणपाणिं निधायाभिमन्थति तत्पुत्रो भ्राता वान्यः प्रत्यासन्न । उपावरोह जातवेदः इम त स्वर्गाय लोकाय नय प्रजानन्नायु प्रजां रयिमस्मासु धेहि प्रताहुतिश्चास्य जुषस्वस्वाहेति, अरण्योर्वोपावरोह्य मन्थेत् । यद्यरण्या समारूढः स्यात् जायमाने अग्नौ प्रेतमन्वारभ्येमं मन्त्र जपत् ।

अपस्मार श्व सृगालादि दंशेन मृते ।

अपस्मारशुना दष्टो विप्रःस्यात् प्रबपन् तदा।
जम्बुकनाथवा दष्टः मृतो यदिह दैवतः ।
न तस्यनिष्क्रान्तिःदृष्टा षडब्दैः कृच्छ्रसंज्ञकैः ।
विनति शेषः । विधिना दाहयेत् पश्चात्
न तेन सतु दोषभाक् ।

शुनादंशमृते ।

दिवा वा यदि वा रात्रौ शुनाविप्रो पदंशितः ।
स्नात्वा दिवा विशुद्धिः स्यात् रात्रौ न स्नानमाचरेत् ।
तद्दंशं क्षालयेत्तोयैः आग्नसस्पर्शनं चरेत् ।
उपोष्य रजनीमेकां पञ्चगव्यन शुध्यति ।

इति प्रकीर्णकप्रायश्चित्तानि ।

अथ गर्भाधानादि षोडशकर्मणां तत्तत्कालातिक्रमे प्रायश्चित्तम् ।

गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।
नामान्नप्राशनं चोलं मौञ्जी व्रतचतुष्टयम् ।
गोदानाख्यं स्नातकं च विवाह पैतृमेधिको ।

श्रावणहोमः च, एतेषामतिक्रमे कर्मविभ्रष्टाः, ब्रह्मविभ्रष्टाः, पथभ्रष्टाः । शाखारण्डाः । अपाङ्क्तेयाः असंभाष्याः च ।
गौतमः ।

येनास्यपितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्नदुष्यति ॥

अन्यथा यदि वर्तन्ते चक्रलिङ्गादिधारिणः ।
पथभ्रष्टास्तु ते ज्ञेयाः सर्वकर्मबहिष्कृताः ॥

गर्भाधानादि संस्कारान् शक्ताः कर्तुं भुवि द्विजाः ।
तैर्विना ये प्रवर्तन्ते कर्मभ्रष्टास्त एव हि ॥

य.स्वशाखां परित्यज्यान्यशाखामनुस्मरन् ।
शाखारण्डः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥

सन्ध्यादिनित्यकर्माणि गायत्रीजपमेव च ।
दानादिकं परित्यज्य समर्थोऽपि द्विजोत्तमः ॥

यदि वर्तेत लोकेऽस्मिन् प्रभ्रष्टः स निगद्यते ।
अत एतानि कर्माणि श्रुतिस्मृत्युदितानि च ।
परित्याज्यानि विप्रेन्द्रैः न कदा पापभीरुभिः ॥

निमित्ता गर्भाधानाकरणे प्राजापत्य त्रयम् । पुंसवनाकरणे, सीमन्ता, करणे च पृथक् प्राजापत्य त्रयम् ।

जातकर्मकरणे, नामकरणाद्यकरणे च पृथक् पृथक् प्राजापत्य-द्वयम्। एतेषां कालातिक्रमे प्राजापत्यद्वयम्।

यमलयोः व्युत्क्रमेण कर्मकरणे अज्ञानतः, व्युत्क्रमेण मौञ्जीबन्धनादिकं कृत्वा परिवित्ति परिवेत्तृ प्रायश्चित्त कृत्वा विवाहादिक कुर्यात्।

तस्माद्विमृश्य कर्तव्य व्रतकर्मादिकं तथा।

चौलकालातिक्रम प्राजापत्यद्वय कृत्वा चतुष्पात्रविधानेन अग्निं परिस्तीर्य महाव्याहृतिहोम च कृत्वा समापयेत्।

**अक्षराभ्यासः। देवलः।**

पञ्चमेऽब्दे ।शशूनां च कुर्यात् विद्यापरिग्रहम्।
विनायक शारदां च पूजयित्वा जनार्दनम्॥

आरोग्यं भास्करादिच्छेत् विद्यामिच्छेद्विनायकात्।
श्रिय महेश्वरादिच्छेत् मोक्षमिच्छेत् जनार्दनात्॥

अतस्तु पञ्चमे वर्षे विद्याभ्यासः प्रशस्यते।
मेधावी जायते बालः तत्यागे विष्कृतिःस्मृता॥

प्राजापत्य तु कर्तव्यमन्यथा दोषमाप्नुयात्।
विद्याग्रहण नाम पञ्चाशद्वर्णमातृकास्वीकारः।
उपनयनकालातिक्रमे।

गर्भाष्टमेऽष्टमेवा ब्राह्मणस्योपनायनम्।
गर्भैकादशे राज्ञः वैश्य द्वादशवार्षिकम्॥

तथाह गृह्यकारः। गर्भाष्टमेषु ब्राह्मणमुपनयीतेत्यादि

अथकाम्यकालाः, सप्तमे ब्रह्मवर्चसकामं; अष्टमे आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकामं, एकादशे इन्द्रियकामम् । द्वादशे पशुकामम् ।

नवमे दशमेऽब्दे च व्रतबन्धोऽस्य मध्यम. ।
एकादशे द्वादशे च निन्द्यं स्यात् व्रतबन्धनम् ।

मुख्यकाले व्रतीभूयात् नवमे मध्यमो भवेत् ।
निन्द्याब्दे नीचतां याति अष्टमाब्दं न लङ्घयेत् ।

आषोडशाब्दं मुख्यं च कालमाहुर्मनीषिणः ।
यदि कामात् अष्टमाब्द लङ्घयित्वा चरेत् व्रतम् ।

व्रतं प्राजापत्यम् ।
नवमे तप्तकृच्छ्रं स्यात् दशमे चोभयम् स्मृतम् ।
एकादश द्वादशौ वाऽतिक्रम्यैन्दवं चरेत् ।

[1]त्रयोदशाब्दादारभ्य षोडशाब्द व्यतिक्रमे न मम्भाष्यौ न पाङ्क्तेयौ सर्वकर्मबहिष्कृतौ ।

ततः परं यदीच्छेत द्विजत्वं तु पिताऽऽत्मजे ।
कृत्वा स्वयं पुनः कर्म चरेत् चान्द्रायणत्रयम् ।
पुत्रस्य देहशुद्ध्यर्थं कुर्यात् गोमुखसम्भवम् ।

गोमुख जननमित्यर्थः ।

प्राजापत्यत्रयं कृत्वा मौञ्जीबन्धं समापयेत ।
अन्यथा पतितं विद्यात न कर्मार्हो भवेद्द्विजः ।

---

1. त्रयोदशात् षोडशपर्यन्तं चान्द्रायणद्वयं त्रयंवा कुर्यात् ।

दण्डाजिनमौञ्ज्यभावे गौतमः ।

मेखलामजिनं दण्डं ब्रह्मचारी सदावहन् ।
सन्ध्यादिकं तथा वेदान् अधीयीत व्रतीसदा ।
नष्टे भ्रष्टे नवं मन्त्रात् धृत्वा भ्रष्टं जले क्षिपेत् ।
तेषां मासपरित्यागे तप्तकृच्छ्रं समाचरेत् ।
अब्दमात्रपरित्यागे तेषां चान्द्रायणं स्मृतम् ॥

ब्रह्मचारिव्रत लोपे ।

अशुचित्वं दिवास्वापं तथा तम्बूलभक्षणम् ।
नृत्यगीतं तथा वाद्यं द्यूतं स्त्रीव्यसनं तथा ।
गन्धपुष्पं तथा क्षौद्रं दण्डं वा पादुकाद्वयम् ।
तथा वेदपरित्यागः ग्रामचण्डालभाषणम् ।
एतानि सन्त्यजेत् नित्यं ब्रह्मचारी जितेन्द्रियः ।
एतेषां सम्परित्यागे व्रती ब्रह्मपदं व्रजेत ।
एतांस्तु नियमान् त्यक्त्वा ब्रह्मचारी यथा व्रजन् ।
चान्द्रायणव्रतं कृत्वा शुद्धिमाप्नोति निश्चितम् ।
अग्निकार्य-ब्रह्म-यज्ञ-तर्पणलोपे ।
अग्निकार्यं ब्रह्मयज्ञं देवर्षि पितृतर्पणम् ।
एकत्र दिवसे त्यक्त्वा तदा व्याहृतिभिर्हुनेत् ।
मासे तु पञ्चगव्यं स्यात् ऋतौ कायविशोधनम् ।
संवत्सरेतु चान्द्रं स्यात् ततः पतित एवहि ।

वेदाभ्यास लोपे ।

मौञ्जीव्रतमुपक्रम्य परं श्रावणकर्मणः ।
ब्रह्मचारी वृथा कुर्वन् वेदाभ्यासं विना दिवम् ।

वेदघाती स विज्ञेयः सर्वकर्मबहिष्कृतः ।
तद्दोषपरिहारार्थं कायकृच्छ्रं चरेत् पुनः ।

कृत्वाभ्यासं च वेदानामधीत्य ब्रह्मविद्भवेत् ।
एतदेकवर्षविषयम् वर्षद्वये वर्षत्रये वा चान्द्रायणम् ।

अनध्ययनेषु वेदपाठे ।

मासे मासे तु सङ्क्रान्तिः तथा मन्वादयः स्मृताः ।
युगादयः पर्वकालः ह्यष्टमी च चतुर्दशी ।

शयनोत्थानद्वादश्यो सन्ध्याकालस्तथैव च ।
भूकम्पे मेघगर्जने ..... ।

मातापित्रोः मृताहेषु श्रोत्रिये मरणं गते ।
जाताशौचे मृताशौचे ग्रामचण्डालदर्शने ।

योऽधीते मोहयतः पापी मृत्वा नरकमश्नुते ।
अनध्यायेष्वधीतानां प्रज्ञामायुः प्रजांश्रियम् ।

मन्त्रवीर्यं क्षयं याति इन्द्रो वज्रेण हन्ति च ।
पक्षे पराकः कथितः मासे तप्तमुदीरितम् ।

वर्षे चान्द्रं ततः पश्चात् चरेत् ब्रह्मणो व्रतम् ।
वेदान्तं वाऽथ वेदं वा अनध्यायेष्वधीतवान् ।
द्विजः पापमवाप्नोति ब्रह्महत्यां च विन्दति ।

वेदव्रतातिक्रमे ।

प्राजापत्यं तथा सौम्यं आग्नेयं वैश्वदेविकम् ।
चत्वारि वेदसंज्ञानि व्रतानि सुमहान्ति च ।

प्राजापत्यमृचां वेदे, सौम्यं याजुषमेव च ।
आग्नेयं सामवेदं च, वैश्वदेवं चतुर्थकम् ।
एतानि कुरुते यस्तु द्विजः पापात्प्रमुच्यते ।
एतानि क्रमशः कृत्वा वाजपेयफलं लभेत् ।

अकृत्वा यो द्विजो मोहात एतद्व्रतचतुष्टयम् ।
एकतन्त्रेण वा राजन् कर्महीनो भवेद्भुवि ।

प्राजापत्य विशुध्यर्थं चरेत् दोषोपशान्तये ।
ततः परमदोषः स्यात् विवाहे स्नातकव्रत ।

**गोदानाकरणे ।**

गोदानिकं महत्कर्म कुर्याद्विप्रः समाहितः ।
षोडशे वर्षके राजन् विप्राणां पापनाशनम् ।
न कुर्यात् चेत् द्विजो मोहात् प्राजापत्यं विशोधनम् ।
सर्वपापहर पुण्यं प्राजापत्यं विदुर्बुधाः ॥

**स्नातकव्रतलोपे ।**

स्नातकव्रतसंत्यागे कुर्यात् चान्द्रायणद्वयम् ।
पश्चाद्विवाहयेत्कन्यां कुलशीलानुवर्तिनीम् ॥

**उपाकर्मलोपे बोधायनः ।**

संवत्सरकृतं पापं गृहस्थैः ब्रह्मचारिभि ।
उपाकर्म हरेत् क्षिप्रं अतस्तन्नित्यमाचरेत् ॥

वेदमूलो हि विप्रोऽसौ मूलाभावे कुत फलम् ।
तप्तत्रय व्रतीकुर्यात् गृहस्थो द्वयं चरेत्
उपाकर्मपरित्यागे प्रायश्चित्तमितीरितम् ।

अथ राक्षसादि कन्याविवाहे ।

ब्राह्मो दैवः तथा चार्षः प्राजापत्यः तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोमतः ॥
ब्राह्मो विवाहो राजेन्द्र बन्धुशीलश्रुतं तथा ।
आरोग्यं सम्यगालोक्य परीक्ष्यैव प्रयत्नतः ॥

प्रजासहत्वकर्मभ्य. तस्मै कन्यां प्रदापयेत् । इति ब्राह्म-विवाहः । यज्ञे ऋत्विजे दानं दैवम् ।

कन्यापित्रे गोमिथुनं दत्वा कन्याग्रहणमार्षः । यावज्जीवं अनया सहैव धर्माचरणं कर्तव्यमिति संकल्प्य दीयते यत्तत्प्राजापत्यम् ।

इच्छया परस्परं संयोगः गान्धर्वः । धनदानेन कन्याग्रहणमासुरः । बलात्कन्यास्वीकरणं राक्षस । सुप्तां प्रमत्तां वा कन्यां हृत्वा विवाह्यते स पैशाच । आद्यो चत्वारः विवाहाः समीचीनाः । गान्धर्वादीनां विप्रविषये निषिद्धत्वात् पृथक् प्रायश्चित्तम् । गान्धर्वे चान्द्रत्रयम् । आसुरे चान्द्रद्वयम् । पराकं च कुर्यात् । राक्षसे महाचान्द्रं तप्तकृच्छ्रत्रयम् । पैशाचे कायकृच्छ्रत्रयं, चान्द्रायणत्रयं च ।

आसुरादि विवाहेषु दैवाद्यदिह पुंसम्भवः ।
प्रायश्चित्त तदा कृत्वा पश्चात् तासु प्रवर्तयेत् ।
अन्यथा दोषमाप्नोति पापयोनिषु जायते ।

परिवेत्रादिप्रायश्चित्तम् ।

अनूढे भ्रातरि ज्येष्ठे यवीयान् उद्वहेद्यदि ।
ज्येष्ठस्तु परिवित्तिः स्यात् परिवेत्ता तदाऽनुजः

मार्कण्डेयः ।

पतितं क्लीबमुन्मत्तं कुब्जं काणं रुजार्दितम् ।
अपस्मारं परित्यज्य विवाहे न स दोषभाक् ।
परिवित्तिः चरेत्सम्यक् पूर्वः चान्द्र चतुष्टयम् ।
परिवेत्ता चरेत्कृच्छ्रं शतं देहविशुद्धये ।
विवाहमध्येवध्वा आर्तवे ।
विवाहे वितते तन्त्रे होमकाले उपस्थिते ।
वधूः पश्येत् यदा पुष्पं तत्पतिः वृषलोपमः ।
तयोः पुत्रस्तु वृषलः ते यान्ति नरकं ध्रुवम् ।
शेषहोमात्प्राक् चेत् ।
शेषहोमात्प्राक् वधूर्वा प्रथमार्तवा ।
तत्पतिः सावधूश्चोभौ प्रायश्चित्तमिहार्हतः ।
अन्यवस्त्रेण संछाद्य तस्मिन्नग्नौ विधानतः ।
संस्कृताज्येन जुहुयात् 'युञ्जाने'ति स्वयम् मुदा ।
कृत्वा तदाचरेत् कृच्छ्रं पावनं कायसंज्ञकम् ।
शेषहोमादपूर्वं यस्मिन् दिने सम्भवति तस्मिन् दिने
एवं निष्कृतिरनुष्ठेया, तत ऊर्ध्वं यथाशास्त्रं समाचरत् ।

अथ उद्वाहे लाजहोमानन्तरं प्राग्वा अग्निशान्तौ ।

लाजहोमानलो दैवात् रात्रेरोपासवावधः ।
शान्तश्चेदुभयोर्दोषः प्रायश्चित्तं विशुद्धये ।
कुर्याद्वर. तदाग्नौ वा हुपुतरात्रौ विशेषतः ।
तप्तकृच्छ्रं तदा कृत्वा लौकिकाग्नि समाहरेत् ।
प्रतिष्ठाप्यविधानेनाज्यभागान्तमाचरेत् ।

महाव्याहृतयः तत्र व्याहृतीनां त्रयं पुनः ।
तमग्निं धार्यवत् कृत्वा मन्त्रावृत्तिं पुनश्चरेत् ।
कृत्वा तत्र न दोषः स्यात् ततस्त्वौपासनं हुनेत् ।

लाजहोमात्पूर्वं सम्भवे एवं निष्कृतिमनुष्ठाय तावत्पर्यन्तं पुनर्मन्त्रपठनं कुर्यात् ।

अथस्थालीपाक समये अग्न्यनुगमे ।

[1]स्थालीपाकसमये अग्नेः शान्तौ तप्तकृच्छ्रं चरित्वा ततः-पूर्वोक्तेन प्रकारेण निष्कृतिः कर्तव्या । स्थालीपाकात्परं औपासनाकरणे महासान्तपनं कृत्वा औपासनमारभेत । वरस्य रोगादिना अशक्तौ अध्वर्युरेव पत्नीसमक्षं सर्वं कुर्यात् ।

तदाह कात्यायनः ।

सन्निधौ यजमानस्तु उद्देशत्यागकारकः ।
असन्निधौ तु पत्नी स्यात् अध्युर्युस्तदनुज्ञया ॥

कुर्यादिति शेषः ।

अन्वारम्भणीयस्य लोपं विप्रो न कारयेत् ।
कुर्याद्यदिह मूढात्मा पतितोऽभूत् न संशयः ॥

प्रथमायां तु पौर्णम्यां वोढा देवाहुतीः यजेत् ।
अग्निः तथाग्नाविष्णू च सरस्वांश्च सरस्वती ॥
[2]अग्निश्च भगिनी चैव स्विष्टकृद्देवताश्च याः ।
प्रथमे पौर्णमास्यां तु अन्वारंभणमिष्यते ॥

---

1. आग्नेयस्थालीपाकः ।
2. अग्निर्भगिनी देवत

यो यजेद्देवतास्त्वेताः तस्यायुः वृद्धिमन्वगात् ।
यदि कर्तुं न शक्येत प्रायश्चित्तमुदीरितम् ॥
प्राजापत्यत्रयं कुर्यात् अन्वारंभणलोपने ।

प्रतिपद्धोमलोपे प्रा० देवलः ।

गृहीताग्निः होमकुण्डे प्रतिपत्पर्वणोः द्वयोः ।
अग्निस्विष्टकृदग्निश्च देवते द्वे न सन्त्यजेत् ॥
त्यजेद्यदिह मूढात्मा ह्यग्निस्तं स परित्यजेत् ।
तस्याग्नेः सम्परित्यागात् विप्रस्याधो गतिर्भवेत् ॥
तस्य दोषविशुध्यर्थं कायकृच्छ्रं समाचरेत् ।

आग्रयणलोपे देवलः ।

नवधान्ये समायाते ब्राह्मणो ब्रह्मवित्तमः ।
स्थालीपाकं तदा कुर्यात् हुत्वाऽऽग्रयणदेवताः ।
शेषं चरुं प्रभुञ्जीयात् अन्यथा दोषमाप्नुयात् ।
इन्द्रश्चाग्निश्च विष्णुश्च विश्वेदेवा महाबलाः ।
द्यौश्च पृथिवी चैव अग्निस्विष्टकृदत्र हि ।
एताः यजेत् गृही सम्यक् लोपे चान्द्रायणं स्मृतम् ॥
व्याधिमान् भवति क्षिप्रं गुदे रक्तं निरन्तरम् ।

मरीचिः । पुनस्तदेवकर्तव्यं श्यामाकैः व्रीहिभिः नवैः ।
पुनस्तमेवेति होमान्ते श्यामाकैः नवैः व्रीहिभिः स्थालीपाकं कृत्वा पूर्वोक्तदेवता यजेत् ।

अत्र पौर्णमास, आग्रयण, अन्वारम्भण, स्थालीपाकादिकं सर्वशाखासमम् । एतेषां परित्यागे गृहस्थानामेतत् प्रायश्चित्त-मुक्तम् अन्यथा उक्तदोषः सम्पद्यते ।

ब्रह्मयज्ञलोपे ।

ब्रह्मयज्ञपरित्यागी गृहस्थः स्वास्थ्यमास्थितः ।
ब्रह्महन्ता स विज्ञेयः दुष्टब्राह्मण ईरितः ॥
एकत्रदिवसे त्यागे व्याहृतिभिः हुनेत् ।

मासपरित्यागे प्राजापत्यं चरेत् । फलकृच्छ्रं च । ऋतुत्रयपरित्यागे पक्षमेक निरन्तरं उपनिषदं तथा नारायणं पठेत् । उपनिषन्महावाक्यं च । नवमासपरित्यागे, मार्ताण्डोदयमारभ्य यावदस्तंगतोरवि । तावद्विरम्य सहस्र हविष्याशी भवेत्तथा । पक्षमात्रेण शुद्धिः स्यात् । संवत्सरपरित्यागे ब्रह्महणोव्रतं कुर्यात्, कपालभोजनवर्जितम् । दशरात्रपरित्यागे विभूतिं धृत्वा ऊर्ध्वमूलमिति श्लोकं पठेत्

औपासनलोपे – मरीचिः ।

गृह्याग्नौ प्रत्यहं विप्रः सायं प्रातः हुनेत् ध्रुवम् ।
न जुहोति यदा विप्रः अहरेकमुपोषयेत् ॥
अयाश्च व्याहृतीस्तत्र प्रायश्चित्तमुदीरितम् ।
पक्षत्यागे तु द्विदिनं मासत्यागे दिनत्रयम् ॥
मासं संवत्सरत्यागे पयो वा भक्षयेत्तदा ।
अयाश्च व्याहृतीस्तत्र जुहुयात् विधिपूर्वकम् ॥

देवतार्चनपरित्यागे ।

भास्करं गणपं स्कन्दं शम्भुं चैव सरस्वतीम् ।
महालक्ष्मीं महादुर्गां नित्यं विप्रः समर्चयेत् ॥
सालग्रामशिलातीर्थं पिबेद्योमानुषोत्तमः ।
तस्य पापानि नश्यन्ति ब्रह्महत्यादिकान्यपि ॥

गौतमः ।

> यदि विप्रः समुत्सृज्य देवतार्चनमादरात् ।
> स याति नरकं घोरं यावच्चन्द्रदिवाकरम् ॥
> तस्य पापविशुद्ध्यर्थं प्रायश्चित्तमुदाहृतम् ।

एकस्मिन् दिनेऽकरणे प्राजापत्यम् । मासत्यागे पर्णकृच्छ्रम् । वर्षे औदुम्बरं चरेत् । गृहस्थ ब्रह्मचारि सन्यासिनामेवम् ।

वैश्वदेवाकरणे ।

> वैश्वदेवं द्विजैः कार्यं पञ्चसूनापनुत्तये ।
> अन्यथा दोषमाप्नोति वृक्षः स्यात् कण्टकीभुवि ॥

अन्नं त्रिविध दुष्टं संस्कारदुष्टं क्रियादुष्टं स्वभावदुष्टम् । देव-पूजावैश्वदेवविहीनं संस्कारदुष्टम् । एकपङ्क्तौ भुञ्जानो विप्रः यदिमध्ये भोजनं त्यजति शेषं यत् भुक्तं तत् क्रिया-दुष्टम् । लशुनपलाण्ड्वादि स्वभावदुष्टम् । तस्मात् वैश्वदेवं करणीयम् । वैश्वदेवाकरणे फलकृच्छ्रम्, एकस्मिन् दिने त्यागे, वर्षादूर्ध्वं पतितप्रायश्चित्तम् ।

पित्रोः प्रत्याब्दिकश्राद्धत्यागे । देवलः ।

> मृताहं समतिक्रम्य चण्डालः कोटिजन्मसु ।
> अतो विप्रैः न तत्त्याज्यं प्राणैः कण्ठगतैरपि ।

नारदः ।

> अध्वगश्चातुरश्चैव विहीनश्च धनैर्यदा ।
> आमश्राद्धं प्रकुर्वीत हेम्ना वा द्विजसत्तमः ।
> द्रव्याभावे द्विजाभावे ह्यन्नमात्रं तु पाचयेत् ॥

पैतृकेण तु सूक्तेन होमं कुर्याद्विचक्षणः ।
अत्यन्तद्रव्यशून्यश्चेत् भक्त्यादद्यात् गवां तृणम् ॥
स्नात्वा च विधिवद्विप्रः कुर्याद्वा तिलतर्पणम् ।
अथवा रोदनं कुर्यात् अत्युच्चैः विजनेवने ॥
दरिद्रोऽहं महापापी वदन्निति विचक्षणः ।
परेद्यु. श्राद्धकृन्मर्त्यः यो न तर्पयते पितॄन् ।
तत्कुलं नाशमाप्नोति भ्रूणहत्यां च विन्दति ।
एतद्दोषविशुद्ध्यर्थं कुर्याच्चान्द्रायणं व्रतम् ॥

श्राद्धकृन्मर्त्यः परेद्युः तदङ्गतर्पणं न करोति चेत् तत्कुलं नाश-माप्नोतीत्यन्वयः । आब्दिकपरत्यागे चान्द्रं चरेत् ।

अथ अर्घ्यविस्मरणे देवलः ।

पित्रोः कार्यपरो विप्रः पूर्वजो विस्मरेदिह ।
अर्घ्यपात्रोदकं विप्रः पाणौ पैतृककर्मणि ॥
कर्तायाति महत् घोरं पितरो यान्त्यधोगतिम् ।
भोजनान्ते यदि स्मृत्वा लौकिकाग्नौ हुनेत् तदा ॥
स्रुवेणाज्यं समादाय "समुद्रायवायुनायेति"मन्त्रतः ।
चतस्र आहुतीः हुत्वा भूर्भुस्व रितीयं च ॥
पुनरर्घ्यपात्रं संस्थाप्यार्घ्यदानं कुर्यात् ।
सर्वशाखासममिदम् ।

अग्नौकरणलोपे देवलः ।

पार्वणेतु समुत्पन्ने विस्मरेदन्नहोमकम् ।
निराशाः पितरो यान्ति तच्छ्राद्धं राक्षसं भवेत् ॥

स्मरेद्यति भुजेः पूर्वं हविरग्नौ तदा हुनेत् ।
अन्ते वा भोजने कामं स्मृत्वा चेत् पूर्ववद्धुनेत् ॥

भोजने भोजनान्ते वा कृत्वा तन्नपरित्यजेत् ।
श्राद्धान्ते स्मृतौ ।

एकं विप्रं द्वयं वाऽपि निमन्त्र्य पुनराचरेत् ।
सायंकाले न दोषःस्यात् पैतृकं बलवत्तरम् ॥

एकपङ्क्तौ भुञ्जानानामन्योन्यस्पर्शे ।

श्राद्धपङ्क्तौ द्विजोऽन्योन्यं प्रमादात् संस्पृशेद्यदि ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

परेद्युः स्नात्वा अष्टोत्तरंशतं गायत्रीं जपेत् । भोजनेऽन्यस्य उच्छिष्टबिन्दुपतने । तत्प्रान्नं त्यक्त्वा स्थलं प्रक्षाल्य पात्रान्तरं निधाय भोक्तव्यम् । एवं कृते भुक्तेऽपि स न दोषभाक् ।
पिण्डप्रदानाकरणे ।

यो विप्रः पार्वणश्राद्धे पिण्डं विस्मृत्य भोजयेत् ।
परेद्युः श्राद्धकृत्पूत ह्यन्यथा दोषमाप्नुयात् ॥

मनुः । स्वभुक्तेः पूर्वतः स्मृत्वा श्राद्धे पार्वणसञ्ज्ञके ।
पिण्डः तदा प्रकर्तव्यः भुक्त्वा श्राद्धं परेऽहनि ॥

भोजनानन्तरं स्मरणे परेद्युः श्राद्धं समाचरेत् ।
मोहेन पिण्डदानाकरणे फलकृच्छ्रं समाचरेत् ॥

पिण्डभङ्गे बिडालादिस्पर्शे ।

पार्वणे पैतृके कर्ता पिण्डं कृत्वा दृढं मुदा ।
निक्षिपेत् पार्वणस्थाने ह्यप्रमत्तो भयातुरः ॥

तदाविदीर्यते पिण्डः कुलहानिः प्रजायते ।
यदा विदलितः पिण्डः बिडालाद्यैर्विघातितः ॥
फलकृच्छ्रं तदा कृत्वा पुनः पिण्डं समाचरेत् ।

आहिताग्नेरग्निहोत्रलोपे दर्शपूर्णमासलोपे ।

सोमं पिबन्ति यत्रैव तदारभ्या नलं यजेत् ।
त्यजेद्यदि द्विजो मोहात् भ्रूणहत्यामवाप्नुयात् ॥

दिनत्रयेऽग्निहोत्रत्यागे प्राजापत्यम् । पक्षमात्रे तप्तम् । मासे ऐन्द्रम् । वर्षादूर्ध्वं भ्रूणहन्याप्रायश्चित्तम् ।

कलौ पश्चविसर्जयेत् इति पूर्वमुक्तम्' इदानीमग्निहोत्रत्यागे नरकप्राप्तिरुक्ता । तस्मात् दौर्ब्राह्मण्यनिवृत्यर्थं यावद्वर्णविभागं क्रतुं कृत्वा अग्निहोत्रं न सन्त्यजेदिति बोद्धव्यम् ।

दर्शश्च पूर्णमासश्च चक्षुषी सोमयाजिनः ।
त्यक्त्वा यदि प्रवर्तेत चक्षुर्हीनो भवेद्ध्रुवम् ।

तद्दोषपरिहारार्थं पथिकृन्मुखमाचरेत् ।
पश्चात्कुर्वीत तामिष्टिं सर्वपापापहारिणीम् ।

पिण्डपितृयज्ञलोपे गौतमः ।

मासि मासि यदा दर्शः सोमयाजी यदा चरेत् ।
उद्दिश्य स्वपितॄन् पिण्डान् कुर्याद्वै दक्षिणाऽनले ॥

प्रामादात् दैवयोगाद्वा दक्षिणाग्नौ न सञ्चरेत् ।
पुनः पिण्डप्रदानेन यजेद्वै सप्तहोतृकान् ॥
सप्तहोतारमित्यर्थः ।

सूर्यसोमोपरागे आहिताग्नेः कर्तव्यम् ।

सूर्यसोमो परागे तु सोमयाज्यग्निहोत्रवान् ।
गार्हपत्ये समिद्धेऽग्नौ स्रुचा हुत्वा विधानतः ॥

सूर्योपरागे जुहुयादुदुत्यं चित्रमित्यृचा ।
सोमोपरागे जुहुयात् आप्यायस्वेति मन्त्रतः ।
सन्ते पयांसि च पुनः हुत्वा चाज्याहुति द्वयम् ॥
ततः शुद्धिमवाप्नोति सोमयाजी महानिह ।

जाबालिः ।

ग्रहणे चोभयो राजन् अग्नेर्वीर्यक्षयो भवेत् ।
राहुस्पर्शे तयोः पीडा अग्नौ सङ्क्रम्य तिष्ठति ॥

आत्मनश्चाग्निहोत्रस्य पुनः वीर्यबलाप्तये ।
पूर्वोक्तहोमः कर्त्तव्यः इति शेषः ।

आग्रयणलोपे ।

वर्षे वर्षे शरत्काले श्यामाकैः व्रीहिभि. नवैः ।
कुर्यादाग्रयणं याजी बहुदेवोपकारकम् ॥
अकृत्वा नरकं याति कुर्यात्पथिकृतं वशी ।

दर्शपूर्णमासलोपप्रायश्चित्तवत् पथिकृन्मुखेनेष्ट्वा न दोषो भवति इति भाष्यकारमतम् ।

अथ गृहस्थधर्मातिक्रमे देवलः ।

गृहस्थस्य सदाचारं वक्ष्यामि श्रृणु तत्वतः ।
विवाहादिषु विप्रस्य कर्तव्यं यत् श्रृणुष्व मे ।

यज्ञोपवीतद्वितयं सोत्तरीयं च धारयेत् ।
सौवर्णे कुण्डले चैव धौतवस्त्रद्वयं तथा ॥

अनुलेपनलिप्ताङ्गः कृत्तकेशनखः शुचिः ।
धारयेत् वैणव दण्ड सोदकं च कमण्डलुम् ॥

उष्णीषममल छत्र पादुके वाऽप्युपानहौ ।
नित्यं स्वाध्यायशीलः स्यात् यथाऽऽचारं समाचरेत् ॥

परान्न नैवभुञ्जीत परवादं च वर्जयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयादात्मनः शिरः ॥

पूज्यदेवालय चैव नापसव्यं व्रजेत् द्विजः ।
देवार्चन, व्रत, स्नान, जप, होमादिषु क्वचित् ।
न भवेत् मुक्तकेशश्च नैकवस्त्रधरस्तथा ।

अन्यस्त्रियं नसङ्गच्छेत् पैशून्य परिवर्जयेत् ।
न दुर्जनेन सह वसेत् नाशास्त्रं शृणुयात् क्वचित् ॥

नापसव्यं व्रजेत् विप्रं प्रशस्तं च चतुष्पथम् ।
असूयां मत्सरं चैव दिवास्वापं च वर्जयेत् ॥
न वदेत् परपापानि स्वपुण्यं नैव कीर्तयेत् ।
स्ववयश्च स्वनक्षत्रं नामचैवातिगोपयेत् ॥
आसक्तिः द्यूतगीतेषु वरस्तुतिरतिं त्यजेत् ।
नृत्तं गीतं च यः कुर्यात् तं स्पृष्ट्वा स्नानमाचरेत् ।

लौकिकगानविषयमेतत् ।

दीपखट्वातनुच्छाया केशवस्त्रनखोदकम् ।
अजमार्जाररेणुश्च हन्ति पुण्यं पुरातनम् ।

स्नानं रजकतीर्थेषु भोजनं गणिकागृहे ।
नापितस्य गृहे क्षौरं हन्ति पुण्यं पुरातनम् ।

द्वौ विप्रौ विप्रमग्निं च दम्पती गुरुशिष्ययोः ।
नन्दिशङ्करयोर्मध्ये हन्ति पुण्यं पुरातनम् ।

शववातं प्रेतधूमं तथा शूद्रान्नभोजनम् ।
वृषलीपतिसङ्गं च दूरतः परिवर्जयेत् ॥

अवच्छास्त्राभिगमनं लाञ्छनं नखकेशयोः ।
तथैव नग्नशयनं सर्वथा परिवर्जयेत् ।

शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
ताम्बूलमशुचिं नाद्यात् तथा सुप्तं न वोधयेत् ।

पर्णमूले भवेत् व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं हरेदायुः सिराबुद्धिविनाशिनी ।

न वामहस्तेनैकेन पिबेद्वक्त्रेण वा जलम् ।
न चाक्रामेत् गुरोश्छायां तदाज्ञां च न लङ्घयेत् ।

अयने विषुवे चैव युगादिषु चतुर्ष्वपि ।
दर्शे च पितृपक्षे च श्राद्धं कुर्याद्गृहीद्विजः ।

मन्वादिषु मृताहे च ह्यष्टकादिषु सत्तमः ।
पुण्यक्षेत्रोपगमने ग्रहणे चन्द्रसूर्ययोः ।

इत्येवमादयो धर्माः गृहस्थस्य समीरिताः ।
तेषां व्युत्क्रमणे राजन् प्रायश्चित्ती भवेद्द्विजः ।

धर्माणां व्युत्क्रमे विप्रः न शुध्यति कदाचन ।
एतेषां त्यागमात्रेण विप्रो दोषमवाप्नुयात् ।

ब्राह्मे मुहूर्ते उत्थाय शौचाचमनपूर्वकम् ।
दन्तान् संशोध्य यत्नेन स्नायात् शुद्धैः जलैस्सदा ।
पुण्ड्रं धृत्वा ततः सन्ध्यामुपासीत यथाविधि ।
सूर्याभिमुखो भूत्वा जपेद्वै वेदमातरम् ।
ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ।
वानप्रस्थोयतिश्चैव सहस्रादधिक जपेत् ।

कश्यपः । उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
नीचास्यादुदयादूर्ध्वं प्रातः सन्ध्या त्रिधामता ।

तथाच श्रुतिः, "यदह्नात्कुरुते पाप तदह्नात् प्रतिमुच्यते, यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते" इति एवमाचरिता सन्ध्या सर्वाघोघं निकृन्तति ।

पूर्वोक्तानां गृहस्थधर्माणामतिक्रमे सन्ध्यैव प्रायश्चित्तम् ।
अतएव द्विजातीनां सन्ध्यैव बलवत्तरा ।

अथ मानसस्नानमाह देवलः ।
खस्थित पुण्डरीकाक्षं चिन्तयेत्पुरुषोत्तम् ।
अनन्तादित्यसङ्काशं शङ्खचक्रगदाधरम् ।
ध्वजवज्राङ्कुशैः श्लक्ष्णैः श्लक्ष्णपादं सुनिर्मलम् ।
तत्पादादागतां गङ्गां निपतन्तीं स्वमूर्धनि ।
चिन्तयेत् ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ।
तया सङ्क्षालयेत् सर्वमन्तर्देहगतं मलम् ।
तत्क्षणात् विरजा भूत्वा जायते स्फटिकोपमः ।
इदं मानसिकं स्नानं प्रोक्तं हरिहरादिभिः ।

सार्धत्रिकोटितीर्थेषु स्नानात् कोटिगुणं भवेत् ।
यो नित्यमाचरेद् देवं स वै नारायणः स्मृतः ।

एवं यः प्रत्यहं स्नात्वा मानसं स्नानमाचरेत् ।
स देहान्ते परं ब्रह्मपदं याति न संशयः ।

निषिद्धदिवसे ताम्बूलभक्षणे देवलः ।

अमायां च पितृश्राद्धे तीर्थयात्रासु सर्वदा ।
क्षयाशौचे बन्धुमृतौ पक्षद्वयहरेर्दिने ।

सन्ध्ययोरुभयोर्वाऽपि गुरुदेवार्चनेषु च ।
व्रताचरणकालेषु पुराणश्रवणे तथा
ताम्बूलं भक्षयेत् यस्तु विष्ठासममिदं नृप ।

महाराजविजये ।

इक्षूनपः फलं मूलं ताम्बूलं पय औषधम् ।
भक्षयित्वाऽपि कर्तव्या ब्रह्मयज्ञादिकाः क्रियाः ।

एतद्वचनमुक्तनिमित्तव्यतिरिक्तविषयम् । उक्तदिनेषु ताम्बूलभक्षणे गायत्र्या अष्टोत्तरं जपः । अन्यथा विष्ठाशी जायते इति ।

अथ महादानादिप्रतिग्रहे ।

ऋणापकरणार्थं वा उत यागार्थमेव वा ।
द्विजः प्रतिग्रहं कृत्वा तदुद्धरणमाचरेत् ।

तुलाप्रतिग्रहीता च पूर्वजोविषयातुरः ।
तस्यैव निष्कृतिर्नास्ति नवलक्षजपादृते ।

तुला त्रिविधा, स्वर्णमयी रजतमयी रत्नमयी च ।
आत्मतुल्यं स्वर्णं यः प्रतिगृह्य धनातुरः ।

अकृत्वा निष्कृतिं तस्य नरकेषु निमज्जति ।
निष्कृतिः तस्य गायत्र्याः नवलक्ष जपो भवेत् ।

प्रतिग्रहे चतुर्थांशं दत्वा विप्रो न दोषभाक ।
अन्यथा नित्यकर्माणि विफलानि न संशयः ।

अथ हिरण्यगर्भप्रायश्चित्तम् ।

हिरण्यगर्भं गृह्णीयात् द्विजो लोभातुरः क्वचित् ।
तस्योपनयनं भूयो भवेद्वै निष्कृतिः श्रुता ।

देवीपुराणे ।

दक्षिणामात्रमालभ्य प्रधानं सम्परित्यजेत् ।
तथापि यागधर्मादीन् कृत्वा शुद्धिमवाप्नुयात् ।

शेषयेद्यदि मोहेन वृत्यर्थं भोगलोलुपः ।
तस्योपनयन भूयो जननं गर्भगोलतः ।

पञ्चामृतेन शम्भोर्वा ह्यभिषेकात्प्रमुच्यते ।
अष्टलक्षजपोदेव्याः कूष्माण्डायुतहोमतः ।
चतुर्भागव्ययेनापि तस्माद्दोषात्प्रमुच्यते ।

अथ ब्रह्माण्डघटप्रतिग्रहे प्रायश्चित्तम् ।

ब्रह्माण्ड पुण्यतीर्थेषु प्रतिगृह्णातियो नरः ।
निष्कृतिस्तस्य नास्तीह वसु लक्ष जपादृते ।

**कल्पतरुप्रतिग्रहे ।**

आपत्स्वपि न गृह्णीयात् अमुं कल्पतरुं द्विजः ।
यावन्ति तस्य पर्णानि तावदब्दं नराधिप ।
दौर्ब्राह्मण्यनिवृत्यर्थं कृतं सम्यक् समाचरेत ।
एकागौर्नप्रतिग्राह्या द्वितीया च कदाचन ।
सा चेत विक्रयमापन्ना दहत्या सप्तमं कुलम् ।
काशीक्षेत्रे च गौतम्यां कृष्णवेणी नदीतटे ।
श्रीशैले वेङ्कटाद्रौ च क्षेत्रे श्रीमत्यहोबिले ।
धनुष्कोट्यां महाराज तुलां वा गोसहस्रकम् ।
प्रतिगृह्य तु पुत्रपौत्रैः द्विजो नरकमाप्नुयात् ।
ग्रहणे सङ्क्रमे चैव पुण्यतीर्थेषु पर्वसु ।
गोसहस्रं तुलां वाऽपि प्रतिगृह्य पतत्यधः ।

**धराप्रतिग्रहणे ।**

अभ्यर्च्यंगन्धवस्त्राद्यैः धराह्येषा महीभुजाः ।
दीयते विप्रवर्याय सर्वपापापनुत्तये ।
पुण्यकाले तु गृह्णीयात् द्विजोमोहात् कदाचन ।
निष्कृतिः नास्य कथिता दशलक्षजपादिह ।
[1]उपदेशं पुनःकुर्यात् विप्रः शुद्धिमवाप्नुयात् ।

**अथ पशुपुरोडाशभक्षणे कूर्मपुराणे ।**

स्वबन्धुकृतयज्ञेषु प्राप्तं यत्पशुभक्षणम् ।
वेदपारायण कुर्यात् अन्यत्र द्विगुणं भवेत् ।

---

1. उपदेशम् - ब्रह्मोपदेशम् ।

अश्रोत्रिये तु त्रैगुण्यं शूद्रे पञ्चगुणं भवेत् ।
पुनः संस्कारमापन्नः शुद्धिमाप्नोति मानवः ।
शूद्रे, शूद्रद्रव्येण कृते यागे ।

तत्प्रतिग्रहे दोषमाह लिङ्गपुराणे ।

पशुं भक्षयतो यस्य द्विजस्याकृतनिष्कृतेः ।
प्रतिगृह्य सुवर्णं वा ज्ञात्वाऽन्नं संपरित्यजेत् ।
अज्ञात्वा कृच्छ्रमात्रेण ज्ञात्वा वै निष्कृतिं चरेत् ।
पञ्चगव्यं च कृच्छ्रं च ज्ञात्वा ह्युभयमाचरेत् ।

सर्वप्रायश्चित्तम् ।

प्रायश्चित्तमहं कुर्यां धर्मशास्त्रानुसारतः ।
इति सङ्कल्प्य विधिवत् गन्धपुष्पाक्षतैर्मुदा ।
अभ्यर्च्य परिषदं सम्यक् नारायणमनुस्मरन् ।
तदष्टमांश द्रव्यस्य चतुर्थांशस्यवाऽग्रतः ।
भागमेकं ततो हृत्वा बद्ध्वा वस्त्रेण यत्नतः ।
स्वस्य दोषस्य शान्त्यर्थं प्रायश्चित्तं करिष्यते ॥
मया इति विज्ञाप्य तदग्रे स्थातव्यम् ।
विप्रान् सप्त पञ्च त्रयं वा वृणुयात् ।
पूर्वोक्तदक्षिणां दत्वा प्रेषयेदनुवादकम् ।
प्रेषयन्त्विति तानुक्त्वा स्मरेन्नारायणं विभुम् ।
तेऽत्रैकं विदुषं शान्तमनुवादार्थमादरात् ।
दक्षिणां बहुशोदत्वा प्रेषयेतुः द्विजोत्तमाः ।
सोऽपि स्नात्वा दर्भपाणिः कर्तारमनुमोन्त्रयेत् ।
तद्गोत्र-नाम-नक्षत्रमनूच्चार्योपदेशयेत् ।

तत्सर्वमनुवादात्स. श्रुत्वा शक्यं समाचरेत् ।
हिरण्यदानरूपेण प्रायश्चित्तं विशोधनम् ।
प्राच्याङ्गं वपनं कृत्वा दन्तधावनपूर्वकम् ।
स्नानं कृत्वा पञ्चगव्यैः तत्तन्मन्त्रैः पृथक् पृथक् ।
गोदान च ततः कुर्यात् प्राच्यांगपरिपुष्टये ।
उदीच्याङ्गानि सर्वाणि शालाहोमं ततः परम् ।
नान्दीश्राद्धं वैष्णवाख्यं पञ्चगव्यमनुत्तमम् ।
शालाहोमं ततः कुर्यात् उत्तराख्यं विचक्षणैः ।
पुनर्गोदानकृत् कर्ता दशदानमनुक्रमात् ।
भूरिदानं ततः कृत्वा ब्राह्मणान् भोजयेत् सुधीः ।
एवं कृते द्विजो यस्तु मुक्तो दोषात् प्रतिग्रहात् ।
अन्यथा दोषमाप्नोति दुःखीस्यात् जन्मजन्मनि ।

अथ प्रायश्चित्तप्रकारः ।

आदौ मलापकर्षणस्नानं अष्टाविंशतिः चतुर्विंशतिः अष्टादश वा विप्राः परिषदर्थे नियोक्तव्याः । ततः सङ्कल्पः । सङ्कल्पितद्रव्यं वस्त्रान्ते बध्वा दर्भपाणिः मुकुलितहस्तः । समस्तसम्पदिति मन्त्रमुच्चरन् परिषदं त्रिः प्रदक्षिणीकृत्य दण्डवत् प्रणमेत् । दक्षिणां गृहीत्वा अशेषे हे परिषत् मदीयां विज्ञापनामवधार्य मया समर्पितामिमां सौवर्णीं दक्षिणामल्पीयसीमपि यथोक्तदक्षिणात्वेन स्वीकृत्य अमुकगोत्रममुकनक्षत्रे अमुकराशौ जातममुकशाखाध्यायिनममुकनामधेयं मामुद्धरेत्युक्त्वा पुनः प्रणमेत् । एवं सङ्कल्प्य पुनः प्रणम्य मुकुलितहस्तपादः सन् सप्त, पञ्च, त्रीन्वा, विदुषो विप्रान् विधायकान् वृत्वा, परिषद्दक्षिणासपद-

क्षिणया तोषयित्वा परिषदं प्रार्थयेत् । हे परिषत् विधायकैः सह मया विज्ञापितानां पापानामपनोदनं प्रायश्चित्तं धर्मशास्त्रेषु विहितं शक्यमुपदिश । अथ परिषत, हे विधायकाः अमुक नक्षत्रे राशौ जातस्य यजमानस्य उपनयनप्रभृत्येतत्क्षणपर्यन्तं सम्भावितानां (विशेषतः प्रातिस्विकपापानि अत्रकीर्तयेत्) पापानां प्रायश्चित्तं धर्मशास्त्रेषु विहितं शक्यप्रत्याम्नायरूपमनुवादकमुखेनोपदिशन्तु इति प्रार्थयेत् ।

अथ विधायकवाक्यम् । एकं विपश्चितं ग्रहणधारणोच्चारणदक्षं शुद्धं स्वदक्षिणातुल्यदक्षिणया सम्भाव्य. भो अनुवादक,इमां दक्षिणां स्वीकृत्य अमुकगोत्रस्यामुकस्य यजमानस्योपनयनप्रभृति एतत्क्षणपर्यन्तं सन्ध्यादिनित्यकर्मलोप निषिद्धसेवन अभोज्यभोजनापेयपानाप्रतिग्राह्यप्रतिग्रहादीनां (तत्तत्पापानि, विशेषतोऽत्र कीर्तयेत्) सर्वेषां पापानामपनोदकं धर्मशास्त्रेषु विहितं परिषन्निर्णीतं शक्यप्रत्याम्नायरूपेणास्योपदिशेति एकं विप्रं प्रेषयेयुः ।

अथ अनुवादकस्तु सचेलं स्नात्वा दर्भपाणिः कर्तारमभिमुखीकृत्य उत्तानपाणिःसन् भो अमुकगोत्रामुकनक्षत्रजात, अमुकशर्मन्, त्वया परिषत्संन्निधौ विज्ञापितस्य सर्वस्य पापस्यापनोदनं परिषन्निर्णीतं विधायकविहितं सर्वप्रायश्चित्तं प्राच्योदीच्याङ्गसहितं नान्दीवैष्णवश्राद्धसहितं शक्यप्रत्याम्नायरूपेणोपदिशेति विधायकमुखेन परिषन्मां प्रेषितवती । सावधानमनाः समाकर्णय, पूर्वोक्तसर्वपापापनोदकं कर्मानुष्ठानाधिकारसिद्धिकरं षडब्दषड्गुणितप्राजापत्यकृच्छ्रात्मकं विशोधकं भवति,

शक्त्यनुसारेण तत्, प्राच्योदीच्याङ्गगोदानशालाहोमवैष्णव ना-न्दीश्राद्धसहितं सर्वप्रायश्चित्तमाचर। अनुष्ठिते सति सर्वेभ्यः पापेभ्यो मुक्तो भूयाः। इति अनुवादकः उच्चैः वदेत्। परिषद्विधायका अपि एकवाक्येन तथास्त्विति वदेयुः एवं त्रिः। ततः उक्तप्रकारेणकृच्छ्राणि प्रत्याम्नायरूपेण वा स्वयं वा ब्राह्मणैर्वा कारयित्वा शुद्धो भवति।

प्रत्याम्नायाः। धेनुदान, समुद्रगामिनीस्नान,संहितापाठ, वेदपारायणायुतगायत्रीजप, द्विशतप्राणायाम, मृत्युञ्जयमन्त्रेण सहस्रतिलहोम, द्वादशब्राह्मणभोजनानि। एतेष्वन्यतमः प्राजापत्यकृच्छ्रप्रत्याम्नाय.।

ब्रह्मकूर्चविधिना पञ्चगव्यप्राशनं दशदानानि, ततो ब्राह्मणभोजनम्। एवं कृतः उभयोर्लोकयोः व्यवहारक्षमोभवति। एवं कोटिहोमाचार्यादीनां, कालचक्र हिरण्यगर्भ, प्रतिगृहीतॄणां प्रायश्चित्तम्।

अत्र गौतमः।

यथा चर्ममयोवत्सः यथादारुमयो गजः।
तथा विष्कृति हीनोऽसौ द्विजो लोकविगर्हितः॥

यागादिकर्मकृद्विप्र. प्रायश्चित्तपराङ्मुखः।
अपवित्रः सदा भूयात् अनर्हः सर्वकर्मसु॥

यो वा को वा द्विजो लोके विप्रस्त्वकृतनिष्कृतिः।
गृहे तस्य न भुञ्जीयात् सो मांसाशीति गद्यते॥

द्विजस्याकृतनिष्कृतेः गृहे नित्यं समाश्रिताः ।
बालग्रहाः पिशाचाश्च श्मशान सदृशं गृहम् ॥
पितरो नाऽत्र तिष्ठन्ति न देवा ऋषिपुङ्गवाः ।
न विष्णुः पृथिवी गावः शपन्त्येनं नराधमम् ॥

इति सर्वप्रायश्चित्तविधिः ।

**अथ कोटिहोमादि आचार्यत्वे ।**

यो विप्रः कोटि होमेषु लक्षहोमेषु वा नृप ।
अचार्यत्वं यदा कुर्यात् न तदा सन्ति सत्क्रियाः ॥
देहान्ते नरकं गत्वा पिशाचोलूकसंज्ञकः ।
न तस्य निष्कृतिश्चास्ति त्रिःपरिक्रमणात् भुवः ॥

**गौतमः ।**

कोटिहोमेषु नियमाः बहवः सन्ति पार्थिव ।
मौनं पद्मासनं ध्यानं हविष्यान्नमजृम्भणम् ॥
स्थण्डिले शयनं गन्ध ताम्बूलादि विवर्जयेत् ।
मन्त्रान्तमुच्चरन् हुत्वा हविरुत्ताब पाणिना ॥
क्रिमिकीटास्थि केशादिसङ्गमं सम्यगीक्षयेत् ।
एतन्नियमसन्त्यागे न होमफलमश्नुते ।

**महाराजविजये ।**

अयुतं तु तिलान् हुत्वा परार्थं शम्भुमन्त्रतः ।
स एव ग्राम चण्डालः असम्भाष्यो भवेत्सदा ।

शिवपुराणे ।

रजकः चर्मकारश्च कैवर्तोभिल्ल एव च ।
स्वर्णकारः सौचिकश्च स्थपतिस्तन्त्री च तक्षकः ॥
न एते ग्रामचण्डालाः वाङ्मात्रेणापि नालपेत् ।
अतोऽपि दोषबाहुल्यात् कोटिहोमं परित्यजेत् ॥
ईषन्मात्रस्य यज्ञस्य दोषमानन्त्यमिच्छुभिः ।
नृभिस्त्याज्यो लक्षहोमः कोटिहोमोऽपि पार्थिव ।
विप्रैः सार्धं कृते होमे षडब्दं कृच्छ्रमाचरेत् ।
बाहुजातकृते होमे तदेतद्द्विगुणं भवेत ।
वणिग्भिः त्रिगुण प्रोक्तं पादजेभ्यः चतुर्गुणम् ॥
सङ्करेण कृते होमे षाड्गुण्य परिकीर्तितम् ।
सदस्य ब्रह्मणोरर्धं ऋत्विजामपि तत्तथा ॥

मार्कण्डेयपुराणे प्रायश्चित्ताकरणे ।

लक्षहोमे कोटिहोमे आचार्यो ऋत्विजो यदि ।
पिशाचत्वमनुप्राप्य तिलघाती भवेद्भुवि ॥
मूषकः त्रिषुजन्मस्यात् गर्दभः पञ्चजन्मसु ।
वानरत्वं भवेत्पश्चात् कृकलासस्ततः परम् ॥

कालचक्रप्रतिग्रहे पूर्वोक्त सर्वप्रायश्चित्तं कर्तव्यम् ।

कालपुरुषप्रतिग्रहे ।

राज्ञः पीडानिवृत्त्यर्थं सोमसूर्यग्रहेऽपि वा ।
पुण्यकाले पुण्यतीर्थे द्विजो भोग परायणः ।
गृह्णीयात्कालपुरुषं यमस्य सदनं व्रजेत् ॥

पिशाचत्वमनुप्राप्य शून्यागारेषु वर्तते ।
तस्यैव निष्कृतिःदृष्टा गायत्र्या पञ्चलक्षकम् ॥

तिला यावन्ति सन्त्यत्र काले पुरुषसंज्ञिते ।
तावन्त्येतानि पापानि राज्ञः तस्य प्रतिग्रहे ॥

प्रायश्चित्तेन पूतात्मा शुद्धो भवति नान्यथा ।

**गजप्रतिग्रहे** ।

गज प्रतिगृहीता च विप्रः पुण्याहसङ्गमे ।
नित्यं नैमित्तिकं काम्यं इष्टापूर्तादिकं च यत् ॥

**तत्सर्वं** विफलं याति चक्री भवति भूतले । चक्री - कुलालः ।

निष्कृतिस्तस्यकथिता  कुर्यात् चान्द्रायण त्रयं ।
पुनः संस्कारश्च ।

**अथ कनकप्रतिग्रहे** ।

द्विजो यः पुण्यतीर्थेषु देवतायतनेषु च ।
राजतोह्यन्यतो वाऽपि लोभमोह परायण ॥

कनकं प्रतिगृह्णीयात् अणुमात्रमकिञ्चनः ।
स दरिद्रो भवेत्पापी नरकं प्राप्यभूतले ॥

पश्चात्तापसमायुक्त. चान्द्रायणचतुष्टयम् ।

**कनकप्रमाणं** स्तेयादिप्रकरणे द्रष्टव्यम् ॥ अथ तिलप्रतिग्रहे ।

मुखजो बाहुजात् राजन् पुण्यकालेषु पर्वसु ।
तिलप्रतिग्रह कृत्वा बीजरोगी स जायते ॥

ब्रह्माण्डे ।

मधुकैटभयोर्युद्धे मासमेकं निरन्तरम् ।
अत्यन्तग्लानिमापन्नो हरि. स्वेदधरस्तदा ।
स्वेदबिन्दुसमुत्पन्नास्तिलाराशीकृताबभु ॥

तिलानालोक्य हरिः । आह—

यस्मान्दत्वा तु विप्रेन्द्रः हुत्वा वा जनवल्लभः ।
सर्वपापविनिर्मुक्तः मामक लोकमश्नुते ॥
इत्युक्त्वा तान् गृहीत्वाऽऽदौ ददौ मुनिगणाय सः ।
तदारभ्य तिलास्त्वेते लोकेस्मिन् सञ्चरन्ति हि ॥

तिलप्रतिग्रहे । पश्चात्तापसमन्वितो विप्रः । प्रातःस्नात्वा नित्यकर्मसमाप्य उदये कण्ठदघ्नजलेवसन । तद्विष्णोरिरितिमन्त्र-मासाय जपेत् । तत. फलाहार सन् स्थण्डिलेशयान सदा ना-रायणं स्मरेत् । एवं मासकाले कृते स शुध्यति ।

सोपस्करगृहप्रतिग्रहे ।

सोपस्करं गृहं प्राज्ञः प्रतिगृह्य द्विजाधमः ।
सप्त जन्मसु राजेन्द्र दन्दशूको भवेत्तदा ॥
तद्दोष परिहारार्थं वर्षर्तौ वर्षपीडितः ।
मार्ताण्डोदयमारभ्य विलग्नवासा बहिः स्थले ।
जपन्वैवारुण सूक्तं स्वमूर्ध्नि न्यस्तबाहुकः ॥
माध्याह्निकं समाप्याथ नित्यं पूर्ववदाचरेत् ।
सायङ्काले फलाहारः वर्षमेकं समाचरेत् ॥

वारुणं सूक्तं – हिरण्यशृङ्गमित्यनुवाकः ।

**शय्याप्रतिग्रहे ।**

शय्यां सोपस्करां दिव्यां राज्ञो यदिह गृह्यते ।
ततः पिशाचतां याति त्रिषु जन्मसु गोखरः ॥
तस्यमृत्युभयं प्रोक्तं षण्मासाभ्यन्तरे यमात् ।

**अथ प्रायश्चित्तमाह ।**

वसन्तकाले प्रातःस्नात्वा अश्वत्थमूलं समुपगम्य हस्तमात्रं गोमयेन भूमिं शुद्धां कृत्वा नित्यकर्मसमाप्य मौनव्रतः सन् अस्तमयावधि त्र्यम्बकमन्त्रं जपेत मध्याह्ननित्यकर्माणि समाप्य पुनः जपेत् । सायं समाप्य फलाहारः स्थण्डिले शयीत । कृतं पापमनुस्मरन् एवं मासद्वयं कुर्वन् शुद्धिमाप्नोति ।

**कन्याप्रतिग्रहे**

ब्राह्मादिषु पञ्चसु कन्या स्वीकरणे न दोषः आसुर-राक्षस-पैशाचेषु तु दोषः ।

**कूर्मपुराणे ।**

मुखजोऽन्यत्र जातिभ्यः विवाहार्थं धनं वहन् ।
तेन व्रतेन वसता यदि कन्यां समुद्वहेत् ।
स विप्रः पतितो भूयात् तत्पुत्राः पतिताः स्मृताः ।
कलौ त्याज्यानि ।

स्वजातेरन्यजातेश्च द्विजः कन्यापरिग्रहम् ।
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।
समुद्रयानं दीर्घकालब्रह्मचर्यं च वर्जयेत् ।
अपत्यार्थं विवाहश्च यज्ञार्थं दुष्प्रतिग्रहः ।

मुखजः पुण्यकालेषु पुण्यदेशेषु पर्वसु ।
जातित्रयात् धनं हृत्वा दारार्थं सुखलिप्सया ।
तत्पत्नी तत्कुलोद्भूता सन्ततिश्च विनश्यति ।

कर्मयोग्यो न भवति ।

नारदः । गुरुरात्मवतां शास्ता राजा शास्ता पुरात्मनाम् ।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ।
तस्माद्विजः कुलेऽन्यत्र नाहरेद्दारसङ्ग्रहम् ।

कपिलाधेनुप्रतिग्रहे ।

कपिलां वत्ससहितां गृह्णीयात्पर्वसु द्विजः ।
न तस्य जन्मसाफल्यं विपिनस्थेव चन्द्रिका ।
यावन्ति पशुलोमानि तावन्नरकमश्नुते ।
न तस्य निष्कृतिरस्ति प्राजापत्यत्रयादृते ।

अथवा पूर्वोक्त सर्वप्रायश्चित्तं कुर्यात् ।

भूप्रतिग्रहे ।

पितृ-पत्नी-सुतानां चाग्निष्टोमादि कर्मणाम् ।
लोपे संरक्षणे राजन् न दोषःक्ष्मापरिग्रहे ।
विनाप्येतैः निमित्तैश्च पृथिवीसङ्ग्रहेरतः ।
सभार्यः पुत्रसहितो नरके वासमश्नुते ।
बीजानां प्रस्थमात्राणां समाप्तिः यावताक्षितौ ।
तस्याः परिग्रहे कार्यं मुनिभिः परिकीर्तितम् ।

द्रोणमात्रबीजावापपरिमाणे चान्द्रम् ।

दशभिः विंशत्यथवा द्रोणैः आवापोयावता तावत् प्रतिग्रहे शतचान्द्रायणम् । अतः परं न विद्यते निष्कृतिः । स विप्रः शूद्रतां याति, जीवनं यावता भवेत् तावत्प्रतिग्रहे न दोषः ।

**सप्ताचलप्रतिग्रहे ।**

तानि, कनक, रजत, धान्य, तिल, कार्पास, लवणाचला-[1]दीनि, तेषां प्रतिग्रहे प्राय–

नियुतं रुद्राध्यायजपंकृत्वा पुनः संस्कारं चरेत् । सपिण्डीकरणश्राद्धे निमित्तस्थानभोजने, उग्रप्रतिग्रहेच, नियुतं गायत्रीजपः पुनः संस्कारश्च । दशधेनुप्रतिग्रहे तत्पापविशुध्यर्थं रुद्रद्वयुतजपमनुतिष्ठेत् । सूर्योदयमारभ्य यावदस्तमनं जपेत् । पश्चात् फलाहारं कृत्वा देवसमीपे स्थण्डिले शयीत । एवं संख्यापूर्ति पर्यन्तं कुर्यात् ।

**अथ कृष्णाजिन प्रतिग्रहे ।**

आर्द्रकृष्णाजिनं राज्ञः प्रतिगृह्णाति यो द्विजः ।
नित्यनैमित्तिकेभ्यश्च कर्मभ्य. पतितो हि सः ।
यमलोकमुपागम्य स्त्रीत्वं सप्तसु जन्मसु ॥

निष्कृतिः । प्रातः स्नात्वा ब्राह्मणानुज्ञां प्राप्य तत्प्रकृच्छ्रशतं कृत्वा शुद्धिमाप्नोति मानवः । पञ्चगव्यं पिबेत्पश्चात् ।

तिलपर्वप्रतिग्रहे, षडब्दं कृच्छ्रमाचरेत् । पुनः संस्कारश्च रजतपर्वप्रतिग्रहे चान्द्रायणत्रयं, पञ्चगव्यप्राशनम् । रोगप्रतिकृतिप्रतिग्रहे ।

1. आकरे पङ्क्षेव दृश्यन्ते ।

स्कन्दपुराणे ।

क्षयः कासश्च गुल्मश्च शिरोवायुर्भगन्धरः ।
अर्शोरोगस्तथाशूलं दण्डमालश्च शिरोभ्रमः ॥

एते महापातकजन्याः ।

वातव्याध्यश्मरीकुष्ठी महोदर भगन्धराः ।
अर्शांसि गृहिणीगुल्मा महारोगाः प्रकीर्तिताः ॥

एते रोगा उपपातकजन्याः ।

प्रमेहो मधुमेहश्च ज्वरः शीतोष्ण सम्भवः ।
कम्पश्च पक्षवातश्चाऽऽन्त्रवृद्धिस्तथैव च ॥

एते रोगाः सङ्करीकरणजन्याः ।

अरुचिश्च तथा पित्तं बहुमूत्रं शिरोव्रणम् ।
सर्वाङ्गतापनं तद्वत् बधिरत्वमनस्थिता ॥

एते मलिनीकरणजन्याः ।

अक्षिशूलं कर्णशूलं पादशूलं तथाङ्गुलम् ।
कण्डूश्चदर्दुरोरोगः कामिला च तथा भ्रमः ।

एते अपात्रीकरणजन्याः ।

नक्तान्धत्वं गुदे शूलं नासारोगस्तु जृम्भिका ।
हिक्का क्षुतमजीर्णत्वं कर्णशोषणमेव च ।

एते जातिभ्रंशजन्याः ।

एताश्चान्याश्च बह्वयः स्युः व्याधयः पापसंभवाः ।
इह जन्मनि वा राजन् पूर्वजन्मनि वार्जिताः ।

व्याधयः पापमूलाः स्युः प्रत्यक्षनरकास्त्वमी ।
सर्वव्याध्युपशान्त्यर्थं कुर्युः प्रतिकृतिं बुधा ।
यस्य पापस्य यो रोगः तन्निरासार्थं प्रधानदेवताऽस्ति,
कर्मविपाके, तत्प्रतिकृतिश्च ।
तत्प्रतिग्रहात् विप्रस्य पापबाहुल्यं तत्प्रतिग्रहे दोषम्

प्रायश्चित्तं चाह । वामनपुराणे ।

द्विजः प्रतिकृतिं धृत्वा यागं वा निष्कृतिं तु वा ।
अकृत्वा द्रव्यलोभेन स स्त्री भवति सर्वदा ।

कूर्मपुराणे ।

रोगप्रतिकृति प्रतिग्रहे शुध्यर्थं चान्द्रायणं चरेत् ।
निरन्तरमहोरात्रं जपन् नारायणं प्रभुम् ।
स्वपेच्च देवतागारे कबलं भक्षयेत्तदा ।
एवं मासत्रये पूर्णे शुद्धोऽभूत् तत्प्रतिग्रहात् ।

आधानं वा ऋणनिर्मोचनं यदि कुर्यात् तदा लघुप्रायश्चित्तम् ।

कृष्णाजिन प्रतिकृति मेषीं चोभयतो मुखीम् ।
शकटं यस्तु गृह्णीयात् न भूयः पुरुषो भवेत् ।

एतदकृतयागादिकस्याकृतप्रायश्चित्तस्य । उभयोरेकस्य सम्भवे न स्त्रीत्वम् ।

मृतशय्याप्रतिग्रहे ।

नरस्य मरणे काले यमो दूतगणैः सह ।
भूतप्रेतपिशाचाद्याः मृतशय्या बहिःस्थिताः ।
केचिद्दृष्टिपथं याताः केचित्प्रेताः शपन्त्यलम् ।
द्वादशे दिवसे दद्यात् मृतः स्वर्गमवाप्नुयात् ।

विप्रो लोभपरीतात्मा मृततल्पप्रतिग्रहात् ।
नित्यं नैमित्तिकं काम्यं सद्यः क्षरति सर्वथा ।

नित्यनैमित्तिकाभावात् पतितः स्याद्द्विजस्तदा ।
गर्भाधानादि संस्काराः पुनः कुर्यात् द्विजातिभिः ।

ततः परं चरेत् कृच्छ्रं द्विशतं तप्तसंज्ञितम् ।
ततः पूतो भवत्येव कर्मार्हो लोकयोर्द्वयोः ॥
अन्यथा उलूको भवति । आधानयागादिकरणे तादृशदोषो नास्ति । गोचर्मप्रतिग्रहे ।

गोचर्मप्रमाणमुक्तं रजुराजीये ।
गोशतस्य सवत्सस्य सञ्चारः स्वेच्छया भवेत् ।

स तु द्वादशमानेन गोचर्मेति प्रकीर्तितम् ।
तं देशं विप्रवर्याय ह्यर्चिताय कुटुम्बिने ॥

यागासक्ताय यो दद्यात् स वै नारायणः स्मृतः ।
पुनः भुवमुपागम्य मण्डलाधिपतिः भवेत् ।
गोचर्म द्रव्यलोभेन यो विप्रः सम्प्रतिग्रहेत् ॥

पुण्यकालेषु देशेषु पतत्येव न संशयः ।
नित्यकर्मपरिभ्रंशात् सूकरत्वमवाप्नुयात् ।
तस्योपनयनं भूयः चान्द्रायणशतं स्मृतम् ।

शकटप्रतिग्रहे ।

माघमासे पूर्वपक्षे सप्तम्यां रविवासरे ।
अयनद्वितये चैव मन्वादिषु युगादिषु ॥

शकटं धान्यसम्मिश्रं युगरज्जुपरिष्कृतम् ।
चतुर्भिरनडुद्भिश्च युक्तं वस्त्राद्यलंकृतम् ॥
यो दद्यात् विप्रवार्याय न तस्य पुनरुद्भवः ।
मेरुमुल्लङ्घ्य सहसा विष्णुलोकं प्रपद्यते ॥
शकटं योऽनुगृह्णीयात् यागतीर्थपराङ्मुख. ।
एतत्पापविशुद्ध्यर्थं चरेत् चान्द्रायणाष्टकम् ।
यागादिकरणे न दोषः ।

प्रधानं परित्यज्य प्रायश्चित्तं समाचरेत् । परिषदुपस्थापन-
पूर्वकम् ।

उभयतोमुखीगोप्रतिग्रहे । स्कन्दपुराणे ।

सूयमानां यदा धेनुं परिक्रम्य प्रणम्य च ।
पितॄनुद्दिश्य वा राजन् उत विष्णुं हरं च वा ।
तत्तल्लोकमवाप्नोति पुनरावृत्ति वर्जितम्
लोभात्तां प्रतिगृह्णीयात् विप्रो मृत्युवशंगतः ।
नरकानुभवं लब्ध्वा नारीजन्म समश्नुते ।
यावन्ति पशुरोमाणि तावन्नरकमश्नुते ॥
स्त्रीत्वाच्च दोषबाहुल्यात् प्रायश्चित्तं समाचरेत् ।
लक्षत्रयेण गायत्र्याः शुद्धिमाप्नोति दैहिकीम् ।
पुनः संस्कारमापन्नः शुद्धो भवति सर्वदा ॥

उत्क्रान्तिनिमित्तगोप्रतिग्रहे । मार्क-पु-

विप्रस्तूत्क्रान्तिकाले तु ह्यविचार्य महद्भयम् ।
तां धेनुं प्रतिगृह्याशु महापातकमश्नुते ।

नरकाननुभूयाशु दरिद्रो भुवि जायते ।
अन्नवस्त्रपरिक्षीणः सदारो बहुलप्रजः ।
किं करोमि क्व गच्छामि कं वा शरणमाश्रये ।
इतीव वर्तयेन्नित्यमेतद्दारिद्रस्य लक्षणम् ।
दारिद्र्यं मरणात्कष्टं दरिद्रो न हि पूज्यते ।
दरिद्रस्य वृथा जन्म दरिद्रस्य वृथा वयः ।
दरिद्रस्य वृथा रूपं दरिद्रस्य वृथा गुणाः ।
तत्रापि बाल्यदारिद्र्यं क्षणमात्रं न सह्यते ।

प्रायश्चित्तं भविष्योत्तरे ।

उत्क्रान्तिधेनुमागृह्णन् प्रधानं सम्परित्यजेत् ।
लक्षद्वयेन गायत्र्याः शुद्धिमाप्नोत्यनुत्तमाम् ।

वैतरणीगोप्रतिग्रहे । कूर्मपुराणे ।

यमलोके महाघोरे सरिदङ्गाररूपिणी ।
षष्टियोजनविस्तीर्णा शतयोजनमायता ।
सा सरित् पापिनो दृष्ट्वा प्रज्वलत्यतिकोपवा ।
दृष्ट्वा पुण्यजनांश्चैव शान्तिमाप्नोति तत्क्षणात् ।
पापी नरकमाप्नोति पुण्यवान् पुण्यलोकभाक् ।
पुण्यं सुखार्थी कुर्वित दुःखार्थी पापमाचरेत् ।

उत्क्रान्ति वैतरण्योः त्याग एव पुण्यम् ।
द्रव्यस्याल्पत्वात् पापस्य बाहुल्यात् यागादिकरणाशक्यत्वात् च ।
दारिद्र्य स्थिरत्वामेति वैतरण्याः प्रतिग्रहे ।

सर्वेषामेव पापानां दारिद्र्यमधिकं विदुः ।
प्रतिगृह्य द्विजो धेनुमाशौचान्ते नराधिप ।
प्रधानं सम्परित्यज्य देव्या लक्षद्वयं जपेत् ।

मृत्युमहिषीप्रतिग्रहे । मार्कण्डेये ।

विप्रो यो महिषीं गृह्णन् साक्षान्मृत्युस्वरूपिणीम् ।
मृत्युनाशकरीं दातुः गृहीतुः मृत्युदायिनीम् ।
प्रतिगृह्य द्विजो मोहात्पश्चात्सूकरतां व्रजेत् ।
भानुः कुजो भृगुश्चैव शनीराहुर्ग्रहास्तथा ।
द्वादशाष्टमजन्मस्थाः कुर्युः प्राणस्य संशयम् ।
तदा मृत्युवशं याताः पीडितो ग्रहनायकैः
पीडाज्वरश्च शूलं च पित्तं श्लेष्मोल्बणं तथा ।
विषूचीगृहिणी पादहस्तशूलं महद्भयम् ।
ज्वरातिसारो विःशक्तिः मूर्ध्नि भ्रमणमेव च ।
कम्पो वा बहुमूत्रं वा रोगिणां सम्भवन्ति हि ।
सर्वरोगविनाशाय महिषीदानमुच्यते ।
मृत्युरूपाय विप्राय स भवेत् रोगमुक्तिभाक् ॥
गृह्णीयान्महिषीमेवां द्विजो द्रव्यातुरस्तदा ।
मृत्युमायाति सहसा सूकरत्वमवाप्नुयात् ॥
तदानीं वा परेद्युर्वा स्नात्वा तु कृतनित्यकः ।
गायत्र्याः नियुतं जप्त्वा शुद्धिमाप्नोति निश्चितम् ।
[1]चतुर्थकाल आयाते हविर्भोजनमाचरन् ॥
अपमृत्युमपक्षुधमिति वाक्यं जपन् सदा ।

---

1. कालयोर्भोजनमिति विहितत्वात् । अद्यमध्याह्ने भुक्त्वा - रात्रौ परेद्युः कालद्वये च भोजनमकृत्वा तृतीयदिने भोजनं चतुर्थकालभोजनम् ।

पक्षमात्रेण दशाहेन वा शुध्यति ।

महिषीप्रतिग्रहे प्रायश्चित्तमाह ।

कृष्णाङ्गारकचतुर्दश्याममायां भौम वासरे ।
महिषीं समलङ्कृत्य वस्त्रगन्धादिभूषणैः ॥
विप्रवर्याय यो दद्याद्यमपीडाविवृत्तये ।
स्वर्गं लोकमवाप्नोति पापादस्मात्प्रमुच्यते ॥
महिषीं प्रतिगृह्णन् यो विप्रः पातित्यमश्नुते ।
तस्योपनयनं भूयः कुर्यात् चान्द्रायणत्रयम् ॥

गोमुखजनन धेनुप्रतिग्रहे प्रायश्चित्तम् ।

अभुक्ते गण्डनक्षत्रे लग्नसन्धौ चतुर्दश्याम् ।
तथैव विषनाडीषु व्यतीपाते च वैधृतौ ॥
मातापित्रोस्तथाज्येष्ठ भ्रातुर्नक्षत्रके तथा ।
एतेषु पुत्रजननं कुलनाशकरं भवेत् ॥

अभुक्तसंज्ञामाह ज्योतिर्निदाने । आश्लेषा-मघनक्षत्रसन्धिः । रेवत्यश्विनीसन्धिः । एते ह्यभुक्ताः ।

कुलीर-सिंहयोः कीटचापयोः मीनमेषयोः गण्डान्तमन्तरालं लग्नसन्धिः । एतद्दोषशुध्यर्थं गोमुखे जननं कृत्वा पश्चाच्छान्तिं समाचरेत् ।

साधेनुर्विप्र भूलोके सर्वदुष्कृतकारिणी ।
स्वजातिप्रसवं त्यक्त्वा सूतेऽन्यप्रसवं यदा ।
तदा प्रभृत्यसौ धेनुः सर्वपापविवर्धिनी ।
तस्याः प्रतिग्रहे दुःखी पुत्रिन्देष्वभि जायते ।
ततश्चान्द्रायणत्रयं कृत्वा पुनः संस्कारं कुर्यात् ।

आलिङ्गनदानप्रतिग्रहे ।

धनार्थं यदि यो विप्रः महान्तं रोगिणं नरम् ।
आलिङ्ग्य सहसा भूमौ रोगी भवति निश्चयम् ।
पत्नीपुत्रवियुक्तोऽभूत् षण्मासाभ्यन्तरे नृप ।
मृत्युसूक्तं जपेत् नित्यं स्नात्वा शुचिरलङ्कृतः ।
मासं वा पक्षमेकं वा दीक्षामारभ्य वाग्यतः ।
हविष्याशी भवेन्नित्यं ह्ययुतं यदि पूर्यते ।
तदा विसृज्य नियमं ब्राह्मणान् भोजयेत् ततः ।
एवं यः कुरुते तस्य ह्यपमृत्युर्विनश्यति ।

सूक्तं मुञ्चामित्वेत्यादि ।

दुष्टनक्षत्रे प्रथमरजोदर्शनशान्तौ धेनुप्रतिग्रहे । मार्कण्डेयपुराणे ।

दुष्टभेविषनाडीषु व्यतीपाते च वैधृतौ ।
आमा कृष्ण चतुर्दश्यां यस्य पत्नी तु पुष्पिणी ।
पत्युर्वाऽप्यथवा स्वस्य ह्यवश्यं मृत्युराविशत् ।

भरणी, कृत्तिका, आर्द्रा, पुनर्वसू, आश्लेषा, मघा, पूर्वत्रयं ज्येष्ठा, एतानि दुष्ट नक्षत्राणि ।

प्रतिपत्, द्वितीया, चतुर्थी, अष्टमी, द्वादशी, अमा, एताः तिथयः । भानु-भौम-मन्दवासराः दुष्टाः । मेष-वृषभ-सिंहाः, दुष्टराशयः ।

रजोदर्शनलग्नात्तु सप्तमं लग्नं जामित्रम् । तत्र दुष्टग्रहाश्चेत् दोषः । एतेषु नार्याः प्रथमरजोदर्शने एकं द्वयं त्रयं वा निमित्तं

प्राप्तं तत्परिहारार्थं शान्तिः कर्त्तव्या, धेनुरपि दातव्या। तत्र आचार्यकरणे धेनुप्रतिग्रहे च प्रायश्चित्तं कुर्यात्। षडब्दं कृच्छ्रं, प्रायश्चित्तम्।

स्त्रीणां रजः समुद्भूतं पञ्चधा पापमीरितम्।
तत्राऽऽचार्यः प्राथमिकं द्वितीयं गौरुदीरितम्।
तृतीयं प्रतिमादानं चतुर्थं तत्र भोजनम्।

पञ्चममृत्विक्षु प्रविशति।

आचार्यत्वे षडब्दं स्यात् द्विगुणं धेनुसङ्ग्रहे।
षडब्दं पादहीनं स्यात्प्रतिमायाः प्रतिग्रहे।
तदर्धं भोजने प्रोक्तं तदर्धमृत्विजां स्मृतम्।

एवं प्रसङ्गतः धेनुदानप्रतिग्रहे प्रतिमाप्रतिग्रहस्य आचार्यस्य ऋत्विजां च प्रायश्चित्तमुक्तम्।

अद्भुतशान्तिषु प्रतिमाप्रतिग्रहे। देवीपुराणे।

अद्भुतेषु महत्स्वत्र द्रव्येषु पृथिवीपते।
आन्तरिक्षेषु भौमेषु शान्तिः सर्वत्र सर्वदा।

सूर्याचन्द्रमसोः परिवेषः। सूर्यमण्डलाकारवत् मेघकान्तेरुद्भवः स प्रतिसूर्यः। ध्वजवदाकाशे मेघविकारो दृश्यते। गन्धर्वनगरं क्रोशमात्रं वलयाकारवदाकाशे दृश्यते यत्तद्गन्धर्वनगरं। नक्षत्रेषु वालो दृश्यते। ग्रहाणां नक्षत्राणां विपरीतवद्दर्शनमिति द्रव्याद्भुताः। वायौ सरति सति रक्तं वर्षति दुर्गन्धयुक्तो वाति अकाले वृक्षाः सौधाश्चवायुना पतन्ति वसन्ततौ मेघाः सूर्यमावृत्य दिवद्वयं दिनत्रयं वा तिष्ठन्ति, आरामेषु

वृक्षेषुवा क्षीरं वृक्षमूले स्रवति । प्रतिमादयः कम्पन्ति निरग्नैः धूमोद्भवः देवालयादिषु धूमोद्भवः । आकस्मिको भूकम्पः । अकालवृष्टिः । वृष्टिं विना तटाकादिषु जलागमः । इति भौमाद्भुताः । अथ गृहाद्भुताः ।

सुजनस्य दुर्गुणाः दुर्जनस्य सुगुणाः । महिषीयमलप्रसूतिः नार्याः सदन्त शिशुजननम् । गृहे मधुपटलोद्भवः । उलूखस्थमुसले वायसारोहणम् । गृहे वायसप्रवेशः । उलूकगृध्रारोहणं गृहे । पुत्रदेहेषु अङ्गवैकल्यम् । नार्याः प्रसवसमये आदौ पादोत्पत्तिः । मार्जारमूषकादीनां वैपरीत्यजननम् ।
एतानि स्वगृहोद्भूतोत्पातानि ।

अथ देहोद्भुताः । मर्त्यस्य शिरोहीनमङ्गं दृश्यते । मेघावरणं विनाऽपि सप्तर्षिमण्डलं न दृश्यते । सदाभ्रमः । सहृदयस्थ गण्ड· शीघ्रं शुष्कायते । इति भौमान्तरिक्षद्रव्यदेहोद्भवा अद्भुताः । प्रजाक्षोभभयंकरा· । राजपुरुषैः कर्तव्या शान्तिः । इयमद्भुतशान्तिः षड्विंशब्राह्मणे विस्तरशः [1]विहिता ।

---

1. अथातोऽद्भुतानां कर्मणां शान्तिं व्याख्यास्यामः पालाशानां समिधां अष्ट-सहस्रं जुहुयात् । ऐन्द्र याम्य वारुण धानवाग्नेय वायव्य सौम्य वैष्णव्येत्यष्टौ । इत्यारभ्य "अतिस्पनमस्वप्नमतिभोजनभोजनं, वज्रवैडूर्याबिवियोजनं विदारणं, भूकम्पः भूज्वलनं, धूमदर्शनं, ध्वजपतनं, अशनिपातः, देवताप्रतिमा हसन्ति, नृत्यन्ति, स्फुटन्ति. कबन्धमादित्ये दृश्यते । हीनाङ्गानि वाऽपत्यानि जायन्ते, पर्वताः स्फुटन्ति निपतन्ति, अश्मानः प्लवन्ते एवमादीनि अरिष्टानि देशस्य क्षोभजनकानि इत्युक्त्वा तेषां प्रायश्चित्तानि तत्तद्दैवत्यानि स्थालीपालरूपाणि द्वादशभिः खण्डैः विहितानि ।।

सामवेदीय षड्विंशब्राह्मणे प्र-५-खण्ड-१-१२

तत्प्रतिमाप्रतिग्रहे प्रायश्चित्तम् ।

आचार्यत्वं यदा कुर्यात् शान्तिकर्मणि यो द्विजः ।
प्रतिमां प्रतिगृह्णीयात् घोरं नरकमश्नुते ।
नरकान्ते भवेद्भूमौ व्याघ्रो भवति स द्विजः ।

चान्द्रायणद्वय कुर्यात् । प्रधानपरित्यागे चान्द्रायणमेकं कुर्यात् । अत्यन्ताल्पत्वे प्राजापत्यम् ऋत्विजां गायत्रीमन्त्रपुरश्चरणेन शतसंख्याकेन शुद्धिः ।

छागप्रतिग्रहे ।

छागं यः प्रतिगृह्णीयात् विप्रो लोभपरायणः ।
सप्तजन्मसु नारीत्वं उष्ट्रो भवति निश्चयः ।
ऋतुद्वय गायत्र्या लक्षत्रयं जपेत ।
तत्र पर्वसु पञ्चैव कबलान् भुञ्जीयात् ।
दिनान्तरेषु हविष्याशी भवेत् ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।

अनडुत्प्रतिग्रहे ।

अनड्वाह द्विजो हृत्वा सूर्यचन्द्रग्रहे तथा ।
सप्तजन्मसु पोशाचं वामनो भुवि जायते ।

तस्य प्राय--

द्विजाननुज्ञाप्य पराकान विंशतिं चरेत् । तत. पञ्चगव्यं पिबेत् ।

तैलघटप्रतिग्रहे ।

शनिपीडाविमुक्त्यर्थं दत्तं तैलघटं यदा।
प्रतिगह्य द्विजो नित्यं नरक घोरमश्नुते ।

अनुभूयाथ मेदिन्यां तिलघाती प्रजायते ।
तत्पापपरिहारार्थं यावकं मण्डलं चरेत् ।

ततः पञ्चगव्यप्राशनम् । कनकाज्यप्रतिग्रहे कूर्मपुराणे ।

स्वस्व ग्रहपीडायां जन्मर्क्षे शनिकुजवारयोगे दुःखसम्भवः तच्छान्त्यर्थं कनकाज्यदानं कार्यम् ।

**लिङ्गपुराणे प्रायश्चित्तम्**

कनकाज्यं न गृह्णीयात् कारणैः बहुभिना ।
द्विजः शुद्धिमवाप्नोति यावकैः पञ्चभिः कृतैः ।

प्राच्याङ्गोदीच्याङ्गगोदानप्रतिग्रहे ।

प्राच्याङ्गधनदाता च सर्वपापविवर्जितः
स याति ब्रह्मणः स्थानं पुनरावृत्तिवर्जितम् ।
धेनुं तां योऽनुगृह्णीयात् द्विजो लोभपरायणः ।
कर्तुः सर्वाणि पापानि सोऽग्रमाप्नोति निश्चयः ।
ब्राह्मणैरभ्यनुज्ञातः चरेत चान्द्रायणत्रयम् ।
पञ्चगव्यं प्राशयेत् । एवमेवोदीच्याङ्गप्रतिग्रहे ।

**ग्रहमालिकाप्रतिग्रहे ।**

आदित्यादिग्रहाः सर्वे जन्मराशौस्थितायदि ।
अष्टमद्वादशस्थाः स्युः तस्य पुंसो महद्भयम् ।
पङ्क्तिशो मिलिता यस्य तस्य मृत्युभयं भवेत् ।
सर्वाभावे तु सप्तैव षड्वा संमेलयन्ति हि ।
पूर्ववद्दुःखमाप्नोति ग्रहचक्रं समाचरेत् ।
दुष्टग्रहा वा राजेन्द्र द्वादशाष्टमजन्मगाः ॥

प्रजावाधो भवेत्तत्र देहपीडा च जायते ।
ग्रहमाला प्रकर्त्तव्या तद्दोषविनिवृत्तये ॥

तत्प्रतिग्रहे दोषमाह ।

ग्रहमालां प्रगृह्णीयात् प्रायश्चित्तं समाचरेत् ।
अतिकृच्छ्रद्वयं कृत्वा पञ्चगव्यं पिबेत्ततः ।
अतिकृच्छ्रं कृच्छ्रप्रकरणे उक्तम् ।

अथ पञ्चग्रहमेलने ।

कालचक्रवशात् राजन् सर्वभद्रवशात्तुवा ।
पञ्चग्रहाः जन्मनि द्वादशेऽष्टमे चतुर्थे नवमे वा ।
धनहानिः यशोहानिः क्षेत्रापहरणं तथा ।
देहपीडा भवेत्तस्य मासार्धे मासतोऽपि वा ॥
तद्दोषपरिहारार्थं शान्तिकर्म समाचरेत् ।
मन्त्रमुच्चार्य मनसा स्वाहान्ते जुहुयाद्धविः ॥
अङ्गुष्ठानामिकाभ्यां च समिद्धव्यं प्रगृह्य च ।
आहुतिं जुहुयाद्वह्नौ तद्धोमफलसिद्धये ।
मार्जनं भोजनं होमं दानमुत्तानपाणिना ।
अर्चनं देवपूजासु प्रोक्षणं चार्घ्यमेव च ।
उत्तानपाणिना कार्यं नाऽधोरूपेण कारयेत् ॥
अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घने ।
द्विधाचित्तेन यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥
एवेषामुल्लङ्घने दोष आचार्यं प्रविशति ।
यथाचार्यो हुनेत्तत्र प्रायश्चित्तं समाचरेत् ॥

राशिचक्रं द्विजोलोभात् प्रगृह्यदुःखमाप्नुयात् ।
तत्पापपरिहारार्थं चान्द्रायण चतुष्टयम् ।

नवग्रहमखे प्राय- स्कन्दपुराणे ।

अथातः सम्प्रवक्ष्यामि प्रायश्चित्तं द्विजन्मनाम् ।
ग्रहयज्ञे प्रधानत्वं यः करोति द्विजोत्तमः ॥

ग्रहणात् देवतानां च तथात्वेक गृहस्य वा ।
देहान्ते नरकं याति इक्षुयन्त्रं महद्भयम् ॥

ब्राह्मणैरभ्यनुज्ञातः षडब्दं कृच्छ्रमाचरेत् ।
एतद्विप्रतिग्रहे । राज्ञश्चेद्विगुणम् । ऊरुजात् त्रिगुणम् ।

शूद्राच्चतुर्गुणम् । सङ्करजातिप्रतिग्रहे पञ्चगुणम् । चतुर्दशविधचण्डालप्रतिग्रहे पातित्यमेव । धर्मविक्रयिणः सकाशात् प्रतिग्रहे प्राय—

धर्मविक्रयिणः पुंसः नित्यकाम्ये यथाक्रमम् ।
प्रतिग्रहे द्विजस्यास्य प्रायश्चित्तं विशुद्धये ॥

नित्यं - मातापित्रोर्मृताहादिः । सन्ध्यादिश्च ।

काम्यं - व्रतादिकं, गङ्गास्नानादिकं च । आरामतटाकदेवालयनिर्माणादिश्च । एतेषां मध्ये यं कं वाऽपि विक्रयित्वा यो जीवेत् स धर्मविक्रयी । तस्य निष्कृतिः चान्द्रायणशतैरपि न दृष्टा । तस्मात्प्रतिगृहीतुः प्रायश्चित्तं पलाशसमिदाज्यान्नैः गृह्याग्नौ च पृथक् पृथक् सहस्रं हावयन्नित्यमच्युतायेति समित् अनन्तायेति चरुम् गोविन्दायेति घृतं । ततः पञ्चगव्यप्राशनम् । अथ नामविक्रयः । नामधेयादिविक्रयिणः प्रतिग्रहे प्राजापत्यम् ।

पञ्चगव्यप्राशनं च। नामादिविक्रयप्रायश्चित्तं तु निरूपित-मधस्तात्

**स्मृतिविक्रयिणः साकाशात् प्रतिग्रहे प्रायश्चित्तम्।**

स्मृतिकर्तारः, मनुः, पराशरः, याज्ञवल्क्यः, उशना, जाबालिः, अङ्गिराः, कण्वः, जातूकर्ण्यः गोभिलः, विश्वामित्रः, वसिष्ठः, अत्रिः, मरीचिः, कश्यपः, भृगुः, विष्णुः, पुलस्त्यः, गौतमः, एते अष्टादश।

पुराणानि, पाद्मं, ब्राह्मं, वैष्णवं, वाराहं, वामनं, भविष्यत्, नारदीय, शैवं, भागवतं, ब्रह्माण्डं, ब्रह्मवैवर्तं, लैङ्गं, स्कान्दं, मार्कण्डेयं, कौर्मं, आग्नेयं, गारुडं, मात्स्यमेते अष्टादश। एतेषां विक्रये प्रायश्चित्तं निरूपितं च प्राक्।

एतद्विक्रयिणः प्रतिग्रहे तप्तकृच्छ्रत्रयं पञ्चगव्यप्राशनं च।

**अथ सोमविक्रयिणः प्रायश्चित्तम्।**

सोमात्मको लताविशेषः। सोमाहुतिसाधनभूतः। तदेवाह, "दशभिः वत्सतरैः सोमं क्रीणाति, दशपेयो भवति" तद्विक्रेता पतितो भवति।

**वामनपुराणे।**

सोमं विक्रीय यो विप्रः मूल्याधिकतया नृप।
सद्यः पतति दुष्टात्मा प्रायश्चित्ती भवेत्ततः।
तप्तकृच्छ्रशतं कृत्वा वापयित्वा शिरोरुहान्॥

पुन संस्कारकृद्भूयात् अन्यथा पतितो भवेत्।
पनः संस्कारात् पूर्वं तस्मात् प्रतिग्रहे दोषमाह॥

श्राद्धे, दाने पुण्यकाले तेष्वन्नं स्वर्णमेव वा ।
विप्रस्त्वज्ञानतो धृत्वा कुर्यात् चान्द्रायणत्रयम् ।
ज्ञानाच्चेत् द्विगुणं ह्यत्रमात्रे शिरोरुहान् ।
वापयित्वा दिनं सम्यगुपोष्य प्रातरेव हि ।
पञ्चगव्यं ततः पीत्वा शुद्धिमाप्नोति पूर्वजः ।

सोमपानप्रायश्चित्तं-देवीपुराणे ।

सोमं पिबेद्द्विजो यस्तु ह्यज्ञात कुलनामभिः ।
साकं यज्ञेषु मोहात्मा स वृथा ब्राह्मणः स्मृतः ।

व्यर्थं नामधेयः वृधाब्राह्मणः ।

चान्द्रायणं सकृत्कृत्वा पुनः संस्कारमर्हति ।

स्वबन्धुभिः सह पीत्वा प्रायश्चित्तमेवं कुर्यात् ।

बन्धुभिः सह सङ्गम्य पीत्वा सोमं महाक्रतौ ।
स्वमन्त्रोच्चारणं कृत्वा त्रिवारं शुद्धिमाप्नुयात् ।

स्वमन्त्रोच्चारणं - सोमपायिभिः तैः तैः यज्ञे कर्मणि ये ये मन्त्रा, विनियुक्ताः ते च मन्त्राः त्रिवारं जप्तव्याः ।

स्वबान्धवाः - स्कान्दे ।

सकुल्यश्च सनाभिश्च सपिण्डश्च सगोत्रवान् ।
मातुलस्तस्यपुत्रश्च भावुको दुहितुः पतिः ।
श्वशुरस्तस्य पुत्रश्च भागिनेयस्तदात्मजः ।
मातुः पितुः स्वसुः पुत्राः मातुर्मातुः स्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ।

पितामहस्वसुः पुत्राः पितृमातुः स्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ।

सकुल्यः समानं कुलं यस्य स सकुल्यः । त्रिपुरुषादूर्ध्वम् ।
सनाभिः समाना नाभिः यस्य स सनाभिः । ज्येष्ठ कनिष्ठ भ्रात्रादिः ।

सपिण्डः समानः पिण्डो यस्य स सपिण्डः । ज्येष्ठकनिष्ठपितृव्याः तत्पुत्राश्च । सगोत्रः समानं गोत्रं यस्य स सगोत्रः । पञ्चमादूर्ध्वम् । एतैः सोमभक्षणे स्वमन्त्रं पुनः त्रिवारं जप्त्वा न दोषभाक् भवेत्, चान्द्रायणत्रयं कृत्वा पुनः संस्कार कुर्यात् ।

एतेभ्यः प्रतिग्रहे दोषमाह लिङ्गपुराणे ।

अज्ञातबन्धुभिः सार्धं यः कृत्वा सोमभक्षणम् ।
तस्मात् सुवर्णमन्नं वा प्रतिगृह्य द्विजोत्तमः ।
प्राजापत्यं चरेत्कृच्छ्रं शुद्धो भवति नान्यथा ।
उपोष्य रजनीमेकामन्नभुक् शुद्धिमाप्नुयात् ।

पञ्चगव्यप्राशनं च । पशुपुरोडाशभक्षणे प्राय-कूर्मपुराणे ।

स्वबन्धुकृतयज्ञेषु प्राप्तं यत्पशुभक्षणम् ।
वेदपारायणात् शुध्येदन्यत्र द्विगुणं भवेत् ।
अश्रोत्रिये तु त्रैगुण्यं शूद्रे पञ्चगुणं भवेत् ।

शूद्रे, शूद्रद्रव्येणकृतेषु यज्ञेषु पशुभक्षणे ।

पुनः संस्कारकृत्पूतः शुद्धो भवति सर्वदा ।

तत्सकाशात् प्रतिग्रहे दोषमाह ।

पशुं भक्षयतो यस्य विप्रस्याकृतविष्कृतेः ।
प्रतिगृह्य सुवर्णं वा ह्यन्नभुक् दोषभाक् भवेत् ।
अज्ञात्वा कृच्छ्रमात्रेण ज्ञात्वा तद्वयमाचरेत् ।
पञ्चगव्येन शुद्धिः स्यात् नात्रकार्या विचारणा ।
याजयेत् यजमानं यो योग्यं वृत्यर्थमादरात् ।
अन्यथा दोषमाप्नोति न कर्मार्हो भवेदिह ।

अयाज्ययाजने-प्रा देवलः ! याजने अनर्हाः कूर्मपुराणे ।

देवलश्चैव गणकः व्रात्यो दुःशीलवान् जनः ।
शूद्रापतिः कर्महीनः लोके कुत्सितवृत्तिमान् ।
महापातकिनो व्यङ्गाः क्षयरोगी भगन्धरः ।
दुश्चर्मा शूद्रसेवी च भिषक् शूद्रान्नभक्षकः ।
वृथा तुलादिसङ्ग्राही मर्यादाघातकस्तथा ।
ग्रामदाही ग्रामणिश्च तथा दुःसङ्गवान् जनः ।
एतेऽनर्हाः । याज्याः न भवन्ति इतियावत् ।

देवलः, जीवनार्थं ग्रामदेवताऽर्चकः । गणकः - ग्रामेषु राष्ट्रेषु धनधान्याऽऽयव्ययादिकं यो लिखति, स गणकः, व्रात्यः - गायत्रीजपनाशकः । नग्नः - वेदपरित्यागी । सन्ध्यादिनित्यकर्माणि त्यक्त्वा सदा वर्तयन्वा । शूद्रापतिः स्पष्टोऽयम् । कर्महीनः - विहितकर्म परित्यज्य व्यावहारिकं योऽनुवर्तते स तथोक्तः । महापातकिनः, तत्संयोगीच । अङ्गहीनः, शूद्रसेवी - सदाशूद्रसंसर्गी भिषक् - रसविक्रेता, शूद्रान्नभोजी - शूद्रद्रव्यकृतयज्ञेषु अन्न भोक्ता । वृथातुलादिसंसर्गी - तुलादीनि गृहीत्वा तत्प्रायश्चित्ते पुनःसंस्कारेच पराङ्मुखः । मर्यादाघातकः - पितरं ज्येष्ठभ्रा-

नरं वा त्यक्त्वा आन्दोलिकाद्यारोहणकृत्। दुःसङ्गवान् - दुर्जनैराततायिभिः संसर्गवान्। एते कर्मानर्हाः। एतेषां यज्ञे याजने प्राय - वामनपुराणे।

अनर्हकृतयज्ञेषु विप्रो याजयते सकृत्।
स प्रायश्चित्तहीनश्चेत् भुवि पाषण्डवान् भवेत्।
पाषण्डो नाम, मनुराह।
अनर्हाणां च व्रात्यानां भिषजामाततायिनाम्।
यज्ञेषु ये याजयन्ति ते पाषण्डा भवन्त्यहो।
एतेषां प्रायश्चित्तं षडब्दं कृच्छ्रमाचरेत्।
केशानां वपन कृत्वा पुन संस्कारमाचरेत्।
पञ्चगव्यं पिबेत्पश्चात् शुद्धोभवति नान्यथा।
एतेषां सविधे स्वर्णप्रतिग्रहे चान्द्रायणम्।

अन्नभोजने गायत्री शतम्। तप्तमुद्राधारिणां दोषमाह – नारदीये।

ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवमयी यतः।
सातु मन्तापिता येन किं पापं न कृतं भवेत्।
चक्राङ्कित तनुर्विप्रो राजन् लिङ्गाङ्कितोऽपि वा।
जपेच्च पौरुषं सूक्तमन्यथा रौरवं व्रजेत्॥

परिव्राट् षट्कृच्छ्रान् चरेत्।

लिङ्गचक्रादिधारिभ्यः सकाशात् प्रतिग्रहे। स्कान्दे।
द्विजो यदि स्वदेहेतु लिङ्गं धृत्वा तु कामतः।
स भुक्त्वा नरकान् घोरान् अन्ते मातङ्गतां व्रजेत्।

पद्मपुराणे ।

शृणु राम महाबाहो लिङ्गचक्रादि धारिणाम् ।
शूद्रधर्मरतानां च नरकान्नपुनर्भवः ।
पश्चात्तापसमायुक्तः प्रायश्चित्तमिदं चरेत् ।
आदौ कृत्वा पुनः कर्म षडब्दं कृच्छ्रमाचरेत् ।
तेभ्यः प्रतिग्रहं कृत्वा प्राजापत्यं समाचरेत् ॥

पुनः संस्कारकारयितुः प्रायश्चित्तम् । कूर्मपुराणे ।

न पिता न गुरुः भ्राता पितृव्यश्च पितामहः ।
न दद्यादादराद्देवीं पुनः संस्कारकर्मणि ।
ब्रह्मोपदेशं होमं च सर्वं तेन समभ्यसेत् ।
तुलाप्रतिगृहीतॄणां गायत्रीमुपदिशेद्द्विजः ।
गायत्र्याः त्वयुतं जप्त्वा शुद्धिमाप्नोत्यनुत्तमाम् ।

तत्रोपयुक्तमन्त्रजपसमनन्तरं गायत्र्याः जपं त्वयुतं कुर्यात् ।

परार्थ गायत्री जपकरणे प्राय॰ गरुडपुराणे ।

ब्राह्मणो धनलोभेन परार्थं वेदमातरम् ।
जप्त्वा नरकमाप्नोति दिवान्धो भुवि जायते ।
तस्यैव निष्कृतिःदृष्टा दशकृत् कृच्छ्रमाचरेत् ।
शतकृत् पराकं सहस्रकृत् चान्द्रम् ।
अयुतं नियुतं वाऽपि परार्थं धनसङ्ग्रही ।
जपतः तस्य कर्माणि सद्यः शीर्यन्ति देहतः ।
तस्योपनयनं भूयः चान्द्रायणचतुष्टयम् ।
औपासनाग्नेः सन्धानं केशानां वपनं तथा ।

परार्थजपसङ्ख्यायाः पुनः स्वार्थं जपेत्तदा ।
अन्यथा तस्य कर्माणि विफलानि भवन्ति हि ।

ग्रामप्रतिग्रहे । मार्कण्डेयपुराणे ।

मुखजः स्वात्मभोगार्थं राज्ञः ग्रामप्रतिग्रहे ।
नरकं कालसूत्राख्यं विड्वराहो भवेद्भुवि ।
नरकं गत्वेति शेषः ।

ग्रामलक्षणमाह ।

दशागारो जनपदः शतागारो जनाश्रयः ।
अत ऊर्ध्वं तु पल्लिः स्यात् सहस्रं ग्राममुच्यते ।
सहस्रागारसमन्वितं इत्यर्थः ।

अतः परं राजधानी सौधप्राकारशोभिता ।

जनपदादीनां प्रतिग्रहे प्रत्येकं प्रायश्चित्तम् । जनपदप्रतिग्रहे अब्दकृच्छ्रमन्यथा वृषलो भवति । जनालयप्रतिग्रहे षडब्दकृच्छ्रमन्यथा चण्डालो भवति । पल्लिप्रतिग्रहे चान्द्रमन्यथा खरत्वं याति, ग्रामप्रतिहे तप्तकृच्छ्रशतमन्यथा महादीर्घस्थूलसर्पोभवति, राज । धानीप्रतिग्रहे शतत्रयं तप्तकृच्छ्रमन्यथा चिरकालं नरकानुभवः प्रायश्चित्तमिदं वृत्ति याग दानाद्यभावे विशोधनम् । तेषामेकस्य सम्भवे पञ्चगव्यप्राशनं ब्राह्मणभोजनं च ।

कूश्माण्डप्रतिग्रहे लिंगपुराणे ।

एकं वा द्वितयं वापि कूश्माण्डं तिलमिश्रितम् ।
स्वर्णवस्त्रादि युक्तं च मकरस्य च सङ्क्रमे ।

कार्तिक्यां पूर्णिमायां वा दत्तं दक्षिणया सह ।
प्रतिगृह्य प्रधानं सः त्यक्त्वा स्नानं समाचरेत् ॥
स्नानं - सचेलस्नानम् ।
गायत्रीं च जपेत्पश्चात् सहस्रं पादपूरणम् ।
द्वयोः प्रतिग्रहे तद्वत् द्विसाहस्रं मुनीश्वराः ।
बाहुल्ये संख्यया तात तावत्संख्या जपेत्तदा ।

अथ दशदान प्रतिग्रहे कूर्मपुराणे ।

प्रायश्चित्ते व्रते शान्तौ प्रतिष्ठासु मुनीश्वराः ।
ग्रामारामतटाकानां तत्तत्पुण्यफलाप्तये ।
दशदानानि विप्रेभ्यः दद्यात्तत्फलमाप्नुयात् ।
गो,भू,तिल.हिरण्याऽऽज्य, वासो, धान्य, गुडानि च ।
रौप्यं. लवणमित्याहुः दशदानान्यनुक्रमात् ।

एतत्प्रतिगृहीतॄणां प्रायश्चित्तं लघुतरं तदङ्गत्वात् न दोषभाक् ।

धेनुप्रतिग्रहे भूमेः चान्द्रमेकं विशोधनम् ।
तिलप्रतिग्रहे तप्तं पराकं तु सुवर्णके ।
आज्यग्रहे तु कायं स्यात् वस्त्रे देवीसहस्रकम् ।
धान्यप्रतिग्रहे राजन् द्रोणादूर्ध्वं पराककम् ।
गुडस्य रजतस्यैव यावकं कृच्छ्रमीरितम् ।
लवणे पञ्चसाहस्रं जपेद्देवीमनुक्रमात् ।

एतत्प्रायश्चित्तं दानस्य यावत्परिमाणमुक्तं परिभाषायां तावत्पूर्णं चेत्, अल्पं चेत् स्नात्वा गायत्र्याः सहस्रं जपेत् ।

अत्रापि, प्रत्यक्षेण प्रतिग्रहे एतत्प्रायश्चित्तम् । मूर्तिप्रतिग्रहे, केशवादिचतुर्विंशतेः

मूर्तिदाने निमित्तमाह स्कन्दपुराणे ।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
विप्रद्रोहः प्रजाक्षोभः आचण्डाच्च धनार्जनम् ।
उपेक्षा पापिनां नृणां पुण्यकृत्स्वशुभेक्षणम् ।
चापल्यं परनारीषु परद्रव्येषु वा पुनः ।
स्वीजातिं संपरित्यज्यान्यजातेः परिग्रहः
उपवासदिने भुक्तिः ताम्बूलस्य च भक्षणम् ।
पाषण्डजनसंसर्गः देवब्राह्मण दूषणम् ।
तीर्थे देवालये वाऽपि ह्यविश्वासः सदा भवेत् ।
द्विजिह्ववार्ताश्रवणं प्रवृत्तिस्तत्र सर्वदा ।
हिंसा पशुमृगादीनां मातापित्रोश्च हिंसनम् ।
तथा दुर्जनसंसर्गः सज्जनत्याग एव च ।
गीतनर्तनचापल्यं सदा निष्ठुरभाषणम् ।
एवमादीनि पापानि राज्ञां पापरतात्मनाम् ।
विचार्यसहसा बुध्वा ब्रह्मा लोक पितामहः ।
कृपया परया तेषां लोकानां हितकाम्यया ।
चतुर्विंशति मूर्तीनां दानं पापापनुत्तये ।
कल्पयामास विश्वात्मा ददौ राज्ञां मुदा तदा ।
कुरुध्वं पुण्यकालेषु दानान्येतानि सर्वदा ।
उत्तिष्ठत महा पापात् नाशस्यं कर्तुमर्हथ ।
अतः कृत्वात्विदं सर्वं विमुक्ताः पापराशिभिः ।
कलौयुगे विशेषेण राजानो दानशीलिनः ।
वैश्यपु: तन्महद्भ्यश्च पापेभ्यो मुक्तिमाप्नुयुः ।

कूर्मपुराणे ।

चतुष्पलप्रमाणेन मूर्तिं केशवरूपिणीम् ।
सुवर्णेनैव यो दद्यात्सयाति परमां गतिम् ।
केशवं प्रतिगृह्णीयात् सौम्यं विप्रो धनातुरः ।
अकृत्वाऽऽधारमपि वा कुर्यात्स्वोदरपूरणम् ।
तस्यैव निष्कृतिः दृष्टा स्नात्वा नित्यं समाप्य च ।
रहःस्थानमुपाविश्य जपेन्नामद्वयं सुधीः ।
प्रत्यहं स्थण्डिले सुप्त्वा मासमात्रेण शुध्यति ।
यावकान्नो भवेन्नित्यं जप्त्वा लक्षं विशुध्यति ।

तटाकारामदेवलयाद्यर्थं प्रतिग्रहे न दोषः ।

अथ दशावतारप्रतिग्रहे ।

जयन्तीदिवसे वाऽपि ह्युत पुण्यागमेऽपि वा ।
शयनोत्थान द्वादश्योः मन्वादिषु युगादिषु ।
दशरूपाणि कृत्वैव सुवर्णेन विचक्षणः
पलद्वयसुवर्णेन प्रत्येकं प्रतिमास्मृता ।
दद्यादध्यात्मविदुषे तस्य पुण्यं निशामय ।
मातृतः पितृतश्चैव कुलकोटिसमन्वितः ।
वैकुण्ठे वसतिं कृत्वा ततो निर्वाणमश्नुते ।

इदं मत्स्यावतारदानं एवमन्यावताराण्यपि । उक्त पुण्यकालेषु देयानि । एतेषां प्रतिग्रहे ।

आधारं वा तटाकं वा अकृत्वा देव वञ्चकः ।
स याति नरकं घोरं कालसूत्रमवाङ्मुखः ।

अशनाच्छादने दक्षः तथा भोगपरायणः ।
प्रतिगृह्णाति यो विप्रः विशुद्ध्यै निष्कृतिं चरेत् ।

प्रातः स्नात्वा नित्यकर्मसमाप्य सालग्रामे प्रतिमायां वा पूजयित्वा विधावतः ।

पञ्चामृतैः पञ्चमन्त्रैः षष्ठ्ये मध्ये निवेदनम् ।
अभिषिच्य पुनः देवं पञ्चवारं दिने दिने ॥

चतुर्थकाले चर्वाशः स्वपेत् स्थण्डिलदेशतः ।
परेद्युः प्रातरुत्थाय पूर्ववत् शुद्धिमाप्नुयात् ॥

एवं मासं कृत्वा पञ्चगव्यं पिबेत् । गोदानं च कुर्यात् । एतत् मत्स्यादिषु प्रतिमासु एकैकस्य प्रतिग्रहे दिवसभिषेकः एवं द्वये त्रये वा दिनसंख्याक्रमेण विवेचनीया ।

रामलक्ष्मणौ स्वर्णनिर्मितौ, अर्चितौ, गन्धपुष्पाद्यैः लोभेन यदि प्रतिगृह्णीयात् पूर्वोक्ततटाकादिनिमित्तं विना प्रायश्चित्तं चरेत् । चैत्रशुद्धनवम्यां नित्यकर्माणि समाप्य अष्टसु यामेषु गन्धादिभिः पूजयेत् । परेद्युः प्रातरुत्थाय स्वीये गृह्याग्नौ तिलैः विरजाहोमं कुर्यात् । ब्राह्मणान् भोजयेत् पश्चात् । अल्पस्वर्णनिर्मितप्रतिमाप्रतिग्रहे नवम्यामेकवारं पूजयित्वा परेद्युर्विरजाहोमः । चक्रपाणिप्रतिग्रहे ।

चक्रपाणिं द्विजो यस्तु प्रतिगृह्य समर्चयेत् ।
तत्क्षेत्रं काशिकातुल्यं तद्गृहं द्वारकोपमम् ।
तत्तीर्थं गङ्गया तुल्यं तत्पीत्वा मनुजो भुवि ।
सर्वपापविनिर्मुक्तः स याति परमं पदम् ।

चक्रं गृह्य द्विजो मोहात् विक्रयन्मातृहा भवेत् ।
तथा कन्यां देवधेनुं द्विजो यदि हि विक्रयेत् ।
महत्पापमवाप्नोति नरकं चाधिगच्छति ।

श्रीमूर्तिदानप्रतिग्रहे, लिङ्गपुराणे ।

शालग्रामं तु यो विप्रः प्रतिगृह्य प्रयत्नतः ।
तदर्चनमकृत्वा तु विक्रयेद्यदि मूढधीः ।

स वै नरकभुक् पापी घुणस्तम्भे प्रजायते ।
तस्य पापविशुध्यर्थं पञ्चगव्यं पिबेत्तदा ।
पञ्चमन्त्रैः पञ्चरात्रं पृथक् पृथक् समीरितैः ।
गायत्र्याचैव गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्ण इति वै दधि ।
देवस्यत्वेति मन्त्रेण पिबेदाज्यमनुत्तमम् ।
तेन शुद्धिमवाप्नोति विक्रयित्वा शिलां हरेः ।

पञ्चगव्यप्रमाणम् । गोमूत्रं पलम् । गोमयं पलार्धम् । पयः अष्टपलम् । दधि त्रिपलम् । सर्पिः एकपलम् ।

शिवलिङ्गप्रतिग्रहे कूर्मपुराणे ।

मरकतं, स्फटिकलिङ्गं वा शिलारूपं तथापि वा ।
प्रतिगृह्य गृहे स्थाप्य पूजयित्वा दिने दिने ।
तस्य पुण्यं निगदितुं मया ब्रह्मन्न शक्यते ।
शिवरात्रि चतुर्दश्यां चातुर्मास्य व्रतादिषु ।
प्रतिगृह्य समर्थोऽपि विक्रयेत् यदि मोहतः ॥
तत्कुलं नाशमाप्नोति यमलोकमवाप्नुयात् ॥

मार्कण्डेयपुराणे निष्कृतिः ।

सोऽरण्यं विजनं गत्वा स्नात्वा प्रातः यथाविधि ।
लौकिकाग्निं प्रतिष्ठाप्य समिद्धेऽग्नौ हुनेद्धविः ॥
अयुतं प्रत्यहं वाऽपि चरुणाऽऽज्य तिलैः सह ।
त्र्यम्बकेन मन्त्रेण यावदस्तं समाचरेत् । (मयं द्विजः)
संख्यापूरण पर्यन्तं पलाहारं समाचरेत् ।
पञ्चगव्यं पिबेत्पश्चात् शुद्धो भवति नान्यथा ।

शंखप्रतिग्रहे ।

सलक्षणं साग्रं च शंखं पुण्यकालेषु प्रतिगृह्य मोहेन विक्रयेद्यदि तं पापमनुस्मृत्य शुचौ देशे विष्णोर्नाम सहस्रं, प्रातरारभ्य आसूर्योदयं जपेत् एकादशी दिने, द्वादश्यां पञ्चगव्यं पीत्वा पारणमाचरेत् । धूपदीपपात्र, स्नानपात्रघण्टादि प्रतिगृह्य विक्रयेद्यति । पलाशसमिद्भिः स्वगृह्याग्नौ, तद्विष्णोरिति मन्त्रेण शतं जुहुयात् । एवं चरुहोम आज्यहोमश्च ।

घण्टादिविक्रये तात प्रायश्चित्तमिदं स्मृतम् ।
न तस्मात्प्रतिगृह्णीयात् द्विजः पापभयात् नृप ।

ताम्रदाने - पुण्यकालेषु सङ्क्रान्तौ व्यतीपाते च वैधृतौ ।

ताम्रं द्विजो राजदत्त कूर्मदानमथापि वा ।
प्रतिगृह्य महद्दुःखं अवाप्य च भुवःस्थले ।

बृहद्दण्डो भवेत् तस्मात् चतुर्थांशं द्विजे त्यजेत् ।
पुण्यकालेषु यत्कांस्यं द्विजो लोभात् प्रगृह्य च ।

तदर्धं सन्त्यजेत् विप्रे पञ्चगव्यं पिबेत्ततः ।
निरीक्षिताज्यं यो धृत्वा कांस्यपात्रे स्थितं मुदा ।
तस्याऽलक्ष्मीः भवेन्नित्यं निर्भाग्यो जायते भुवि ।
प्रधानं सम्परित्यज्य सहस्रं जपमाचरेत् ।

एतदल्पाज्यप्रतिग्रह विषयम् । प्रभूताज्यप्रतिग्रहे अयुतंजपेत् ।
अर्धनारीश्वर प्रतिग्रहे ।

ऊनसंवत्सरे माघपौर्णिमायोगयुक् यदा ।
तत्रापि भगवान् शंभुरर्धनारीश्वरो यतः ।
पूजनीयो नृभिः पाप मोचने नान्यसाधनम् ।
तत्र दानं महत्पुण्यं दानं वा विप्रभोजनम् ।
पितृनिर्वापणं वाऽपि दीपो वा देवतालये ।
होमो वा तिलसंमिश्रः सर्वपापापनोदकः ।
पौर्णम्यां प्रतिमां कृत्वा परेद्युः पुनरर्चयेत् ।
यो दद्यात् विप्रवर्याय पूर्ववन्मुक्तिभाक् भवेत् ।
मनुष्यजन्मधिक् कष्टं मलमूत्रविगर्हितम् ।
सर्वपापालयं ज्ञेयं अस्थि त्वङ्मांसपूरितम् ।
मनुष्यजननात् राजन् पाषाणत्वं वरं सदा ।
अतः स्वार्जितवित्तेन धर्ममेनं समाचरेत् ।
स याति ब्रह्मणः स्थानं वरः कल्मष पूरितः ।
अत्र यो ब्राह्मणो लोभात् वृथा कृत्वा प्रतिग्रहम् ।
स एव नरकस्थायी यावदाभूत संप्लवम् ।
प्रायश्चित्तं ततः कुर्यात्तत्पापविशुद्धये ।

दुर्जनप्रतिग्रहे प्रायश्चित्तम् । तत्रादौ दुर्जनलक्षणम् लिङ्गपुराणे ।

वेदमार्गं परित्यज्य सदा वेश्यापरायणः ।
कर्महीनो वृथा द्वेषात् देवब्राह्मणनिन्दकः ।
सन्ध्यादि नित्यकर्माणि त्यक्त्वा ग्रामण्यमाचरन् ।
वृथाहिंसा मृगादीनां सन्तापो हृदि साधुषु ।
पत्नी, पुत्र, पितृ, भ्रातृ, देवताराधनं त्यजन् ।
परवित्तं परक्षेत्रं परदारापहारणम् ॥

वेदशास्त्रपुराणेषु कथासु महतीषु च ।
अविश्वासो हेतुवादः चार्वाकीयं पठं स्तथा ।
इदं पापमिदं पुण्यं इदं वै विप्र साधनम् ॥
अयं परोपकारश्च ह्ययं विष्णुरयं शिवः ।
उपवासव्रतादीनां जयन्तीवामनास्थवान् ।
(अनास्थावानित्यर्थः)

शुकं कपोतं गृध्रं वा धारयन् श्येनमेव वा ।
चण्डालादिषु संसर्गं ताम्बूलस्य च भक्षणम् ।
पर्वकाले पितृश्राद्धे सोमसूर्यग्रहेऽपि वा ।
द्विभुक्तिः पापमनसा कन्यानारीं पराङ्गनाम् ।
अवेक्षणं चामेध्यं च ह्यन्नाद्यं भक्षयेन्मुदा ।
पश्चाद्रं भोजनं त्यक्त्वा पित्रा मात्रा सुतैः सह ।
भोजनं कुरुते विप्रः पापमत्र न चिन्तयन् ।

अयं दुर्जनसंज्ञः स्यात् तं कदा नालपेन्मुदा ।
पुण्यकालेषु पुण्याहे दुर्जनस्य प्रतिग्रहे ।

स्नात्वा सचेलं सहसा प्राजापत्यं समाचरेत् ।
अन्नं वा सलिलं वाऽपि हिरण्यं वान्यमेव वा ।
महादोषमवाप्नोति तस्मादेतत्परित्यजेत् ।

आततायिप्रतिग्रहे लिङ्गपुराणे ।

अग्निदो गरदश्चैव शस्त्रपाणिः धनापहः ।
क्षेत्रदारहरौ चैव षडेते ह्याततायिनः ।

एतत्प्रतिग्रहं कृत्वा विप्रो नरकमाप्नुयात् ।
वृश्चिकं दुर्जनं सर्पं भिषजं चाततायिनम् ।

पापिष्ठं दुर्भगं व्रात्यं नग्नमुत्कृत्तनासिकम् ।
प्रातर्नपश्येदेतांस्तु दृष्ट्वा पश्येद्दिवाकरम् ।

चन्दनं रोचनं हेमं मृदङ्गं दर्पणं मणीन् ।
गुरुमग्निं तथा सूर्यं प्रातः पश्येत्प्रयत्नतः ।

अग्निचित् कपिला सत्री राजा भिक्षुः महोदधिः ।
दृष्टमात्राः पुनन्त्येते नाशयेयुश्च पातकम् ।

अथ कुण्ड-गोलकप्रतिग्रहे ।

जीवद्धवा पतिं त्यक्त्वा कुमारं सूयतेऽन्यतः ।
स पुत्रः कुण्डसंज्ञः स्यात् लोकद्वयबहिष्कृतः ॥

सामाता जारिणी नाम सर्वत्र पतिता भवेत् ।
मृते भर्तरि या नारी प्राप्तापुत्रं तथाऽन्यतः ॥

स शिशुः गोलको नाम सर्वकर्म बहिष्कृतः ।
न नामकरणं वाऽपि न मौञ्जीबन्धनं तयोः ॥

कुण्डगोलकनाम्नानो दर्शनात् पापवर्धकौ ।
कर्ममध्ये दर्शनं चेत् मार्ताण्डमवलोकयेत् ॥

एतयोः संस्कारे आचार्यत्वं वहन् विप्रः ।

पुनः संस्कारमर्हति । षडब्दं कृच्छ्रं चरेत् एतेभ्यः प्रतिग्रहे. स्वर्णं धान्यमन्नं जलं वा प्रतिगृह्णीयात् प्राजापत्यं समाचरेत् । अन्नमात्रे तदर्धं, जलमात्रे तत्पादम् ॥

पाषण्डप्रतिग्रहे ।

शूद्रधर्मरतो वापि श्वानमुद्राङ्कितः तथा ।
लिङ्गधारीतूभयतः शुष्कतर्कानुवादकः ॥
विष्णुं वेदं द्विजं गाञ्च यज्ञं शास्त्रं पतिव्रताम् ।
दानं वा नियमं वाऽपि कुर्वाणं द्वेष्टि यो नरः ।
उपोषणादिकं त्यक्त्वा ह्यात्मभोगपरायणः ॥
एते पाषण्डिनः प्रोक्ताः न ग्राह्यं किञ्चिदेव हि ।
गृह्णीयात् देहशुद्ध्यर्थं प्राजापत्यं समाचरेत् ॥

वेश्याप्रतिग्रहे ।

वेश्याप्रतिग्रहं कुर्वन् द्विजः चण्डालतां व्रजेत् ।
वेश्यासकाशात् हिरण्यप्रतिग्रहे षडब्दं कृच्छ्रम् ॥

तण्डुलप्रतिग्रहे प्राजापत्यम् । अन्ने जले वस्त्रे च प्राजापत्यम् तप्त तदर्धम् ॥ पुन.संस्कारः । एतदज्ञानविषयम् ज्ञाते सति द्विगुणम् ।

अभ्यासे त्रिगुणम् । वत्सरादूर्ध्वं सोऽपि तत्समः । चण्डालप्रतिग्रहे, चण्डालात् यो द्विजो मोहात् प्रतिगृह्य धनादिकम् तेन सत्कर्मकृत् सर्वं विफलं याति सर्वथा ।

चण्डालेन कृत वस्त्रं वर्जयेत् पुण्यकर्मसु ।
स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे ।
तस्य स्मरणमात्रेण तत्सर्वं निष्फल भवेत् ।

**तथाह्यापस्तम्बः ।**

चण्डालात्प्रतिगृह्णीयात् विप्रो धर्मपरायणः ।
न तस्य निष्कृतिर्दृष्टा चान्द्रायण चतुष्टयात् ।
सकृत्प्रतिग्रहे तात प्रायश्चित्त विशोधनम् ।
अभ्यास त्रिगुणं प्रोक्त वत्सरे तत्समो भवेत् ।

**परिवित्ति परिवेत्रोः प्रतिग्रहे मार्कण्डेयः ।**

अनूढे भ्रातरि ज्येष्ठे यवीयान् परिणयेद्यदि ।
पूर्वजः परिवित्तिः स्यात् परिवेत्ता द्वितीयजः ।
परिवित्रस्तु तत्पुत्रः द्वितीयः परिविन्दकः ।
ज्येष्ठो यद्यङ्गहीनः स्यात् मूकोऽपस्मारवान् यदि ।
तदनुज्ञामवाप्याथ स्नानादिव्रतमाचरेत् ।
कदल्या च विवाह्याथ द्वितीयः परिणयेत् क्रमात् ।
एवं सति न दोषःस्यात् अर्हो भवति सर्वतः । एवमकरणे ।
तयोः पुत्राः तयोः दाराः पतिताः स्युर्न संशयः ।
नित्ये काम्ये व्रते दाने न कर्मार्हा नृपोत्तम ।
तस्मादेते परित्याज्या दर्शनं भाषणं तथा ।
प्रतिग्रहः परित्याज्यः गृह्णीयाद्यदि लोभवान् ।
पराकत्रयमात्रेण स शुद्ध्येत् नान्यकर्मभिः ।
यागार्थं चेत्तप्तकृच्छ्रत्रयम् । पराकस्त्वल्पमात्रे स्यात् ।

पुस्तकप्रतिग्रहे स्कन्दपुराणे ।

यो दद्यात्पुण्यकालेषु द्विजायाध्यात्मवेदिने ।
शास्त्रं पुराणं काव्यं वा विद्यावान् जायते भुवि ।
पुराणं धर्मशास्त्रं च दद्यात् शास्त्रार्थतत्त्ववित् ।
प्रतिगृह्य धनार्तस्तु विक्रयेद्यदि मूढधीः ।
जीवनार्थं स पापात्मा प्राजापत्यत्रयं चरेत् ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्तदा ।
प्रतिगृह्य पठेद्वापि विद्यावान् जायते भुवि ।
व्रात्यादिभ्यः यज्ञोपवीतादिप्रतिग्रहे ।

ब्रह्माण्डपुराणे ।

अनध्याये कृतं सूत्रं यत्सूत्रं रण्डया कृतम् ।
यत्सूत्रं दारुसम्भूतं कृतं यद्ब्रह्मसूत्रकम् ।
व्रात्यादिभिर्यदा दत्तं तत्सूत्रं परिवर्जयेत् ।
सपुच्छग्रन्थिसंयुक्तं स्थूलं सूक्ष्मं सबर्बरम् ।
प्रमाणहीनमाधिक्यं परित्याज्यं द्विजातिभिः ।
नाभेरूर्ध्वमनायुष्यमधस्तात्तु तपःक्षयः ।
तस्मान्नाभिसमं कुर्यात् उपवीतं विचक्षणः ।
एकं वृतं गार्हपत्यं द्वितीयं दक्षिणानलः ।
तृतीयमाहवनीयं स्यात् वेदिः देवमयी शुभा ।
ग्रन्थिस्तस्य परं ब्रह्म तद्धृत्वा विप्रपुङ्गवः ।
नित्यनैमित्तिकादीनि कर्माणीह समाचरेत् ।
दिनेदिने क्रतुफलं सम्प्राप्नोति न संशयः ।

एतद्दुर्मार्गवर्तिभ्यः प्रतिगृह्य द्विजातयः ।
यद्यत्कर्म यदाकुर्युः तत्तदाप्नोति निष्फलम्
तद्दोषोपशमायालं प्राजापत्यं समाचरेत् ।

**नट-विट-सकाशात् प्रतिग्रहे ।**

नटश्च विटवृत्तिश्च गायकः परिहासकः ।
चारुवाकश्च पञ्चैते न कर्मार्हाः कलौ युगे ।

देवागारे राजगृहे वृत्तिं प्राप्य दिनेदिने ।
कुमारीं भगिनीं वाऽपि नर्तयेद्यः स वै नटः ।

वेदशास्त्रं परित्यज्य नित्यं नैमित्तिकं तथा ।
विसृज्य परनारीं यः सेवते स विटः स्मृतः ।

हरीश्वरकथां त्यक्त्वा प्रबन्धान् पुरुषेरितान् ।
पठन् यो वर्त्तयेन्नित्यं स गायक इतीरितः ।

मातरं भगिनीं श्वश्रूं श्वशुरं पितरं गुरुम् ।
देवं वह्निं तथा धनं यः सदा परिहासयेत् ।

तं सदा वर्जयन्तीह साधवः साधुवत्सलाः ।
परिहासजनः सोऽपि तं कदा नावलोकयेत् ।

अवाच्यं वा सुवाच्यं वा सदा दुर्भाषणं वदन् ।
सर्वान् साधून् समालोक्य चारुवाक्यैः विहासयन् ।

सर्वधर्मपरित्यागी चारुवाक इतीरितः ।
एतेभ्यः प्रतिगृह्णीयात् प्राजापत्यं विशुद्धये ।

उपोष्य रजनीमेकां पञ्चगव्यं पिबेत्ततः ।
प्रायश्चित्तमिदं प्रोक्तं सर्वपापप्रणाशनम् ।

आभीरधप्रतिग्रहे ।

भाषान्तरं न जानन्ति नवदेयुश्च भाषणे ।
अयं विप्र त्वयं धर्मः इदं पापमिदं फलम् ॥
कुटीरे वर्तुलाकरे ह्यज धेनुप्रपोषकाः ।
तत्क्षीरादीनि विक्रीय जीवन्ति च सदा भुवि ॥
आभीरच इति ख्याताः सर्वधर्मबहिष्कृताः ।
तस्मात धनं वा धान्यं वा प्रतिगृह्य द्विजाधमः ।
नरकं समवाप्नोति प्राजापत्यद्वयं चरेत् ।

चातुर्मास्यव्रतादिषु प्रतिग्रहे । मार्कण्डेयपुराणे ।

शाकं जीरकताम्बूलं गोधूलिस्नानमेव च ।
गोश्रृङ्गोदकसंस्नानं सन्ध्यायां मौनमेव च ।
विप्रपादोदकस्नानं विप्रवन्दनमेव च ।
शिवविष्णोश्च स्मरणं पुराणपठनं तथा ।
पुराणश्रवणं शास्त्रपठनं तुलसी दळै ।
विष्णुपूजां तथा शम्भोः बिल्वपत्रैश्च नामभिः ।
अध शय्या पत्रभुक्तिः ब्रह्मसूत्रं च चन्दनम् ।
तुलसीदलदानं च भानुवन्दनमेव च ॥
श्रीमूर्तिदानं द्वादश्यां सूर्यार्घ्यं प्रत्यहं तथा ।
सहस्रनाम पठनं विष्णोर्वा शङ्करस्य वा ।
श्रावणे वर्जयेत् शाकं दधि भाद्रपदे त्यजेत् ।
आश्विने वर्जयेत् क्षीरं कार्तिके द्विदलं त्यजेत् ।
त्वक्मूलं पल्लवं पुष्पं फलकोशं च जीरकम् ।
शुष्कं बीजं च निर्यासं दशधाशाकमुच्यते ।

धात्रीफलं सदा ग्राह्यं विष्णुप्रियकरं महत् ।
क्षीराब्धि पूजा राजेन्द्र दिवानिद्राविवर्जनम् ।
पञ्चगव्यप्राशनं च द्वादशीद्वादशीदिने ।
तथा तैः स्नापनं शम्भोः हरेर्वा प्रत्यहं तथा ।
रङ्गवल्लीव्रतं तद्वत् गोष्ठी बृन्दावनेऽपि वा ।
प्रतिमासं चतुर्थ्यां तु गणनायक पूजनम् ।
प्रतिपक्ष तृतीयायां गौरीपूजामहाव्रतम ।

एतानि चातुर्मास्य व्रतानि ।

एतेषां च व्रतानां तु महत्सूद्यापनेषु च ।
प्रतिगृह्य द्विजो लोभात् यमलोकमवाप्नुयात् ।
एतत्पापविशुद्ध्यर्थं प्राजापत्यं समाचरेत् ।
गवां प्रतिग्रहे चान्द्रं सुवर्णे तप्तमेव च ।
पञ्चगव्यं पिबेत्पश्चात् शुद्धो भवति नान्यथा ।
एतेषां बाहुल्ये पूर्णप्रायश्चित्तम् । अल्पे त्वल्पम्

कार्तिकमासव्रतोद्यापने प्रतिग्रहे । स्कन्दपुराणे

लक्षपुष्पार्चनं सम्यक विष्णोर्वा शङ्करस्य वा ।
तत्पूर्णिमाय वृषभत्यागो नक्तव्रतं ततः ।
सर्वशाकपरित्यागः दम्पतिभोजनं तथा ।
द्वारेषु दीपविन्यासः शिखरे दीपमेव च ।
अखण्डदीपं कार्तिक्यां धात्रीपूजनमेव च ।
प्रात स्नानं मासपूर्णं शिवविष्णवोः प्रपूजनम् ।
ताम्बूलदानं कार्तिक्यां फलदानं महत्फलम् ।
पुराणपठनं चैव पुराणश्रवणं तथा ।

वेदपारायणं चैव धर्मशास्त्रं तथैव च ।
प्रत्यहं सायमाकाशदर्शनं पापनाशनम् ।
पञ्चगव्येन स्नपनं पञ्चगव्यस्य भक्षणम् ।
स्मरणं कीर्त्तनं शम्भो हरेर्नामसहस्रकम् ।
प्रत्यहं शाकदानं च कार्त्तिके तु विशेषतः ।
पाषण्डजनसंसर्गं वर्जयेत् सर्वदा द्विजः ।
एवं नियमयुक्तः स्यात् चान्द्रायणफलं लभेत् ।
अव्रतेन क्षपेद्यस्तु मासं दामोदरप्रियम् ।
पुमान् मोहपरीतात्मा सूकरेष्वपि जायते ।
न कार्त्तिकसमो मासः न देवः केशवात्परः ।
एतानि कार्त्तिकव्रतानि एतेषूद्यापनेषु च ।
प्रतिगृह्य द्विजो यस्तु वर्त्तयेदात्मपोषणम् ।
यमलोके सदा वासः प्रायश्चित्तमिदं चरेत् ।
दीपप्रतिग्रहे चान्द्रं पराकं स्वर्णसङ्ग्रहे ।
वस्त्रे ताम्रे तथा कांस्ये प्राजापत्यं विशोधनम् ।
अन्ने जले च तस्यार्धं प्रायश्चित्तं प्रकीर्तितम् ।

माघमासव्रतोद्यापनप्रतिग्रहे । लिङ्गपुराणे ।

तिलहोमश्च तद्दानं तिलस्नानं च तर्पणम् ।
तद्भुक्तिश्च तदुद्वर्तः षड्विधं पापनाशनम् ।
मार्त्तण्डोदयवेलायां स्नानं सर्वाघनाशनम् ।
बदरीफलदानं च तिलपिण्टं महाफलम् ।
सालग्रामशिलातीर्थं प्रत्यहं धारयेन्मुदा ।
सूर्यार्घ्यं वन्दनं चैव सालग्रामस्य भोजनम् ।

तद्दानं चैव विप्रेभ्यो माघमासे फलाधिकः ।
एवं नानादानान्युक्तानि । इति माघव्रतानि ।

व्रतेष्वेतेषु विप्रो यः प्रतिगृह्णीत लोभतः ।
स गच्छेद्यमसान्निध्य प्रायश्चित्तमतश्चरेत् ।

धेनुप्रतिग्रहे तप्तं स्वर्णप्रतिग्रहे प्राजापत्यद्वयम् ताम्रकांस्यतिलाना प्रतिग्रहे कृच्छ्रम्, एतेषां व्रतोद्यापनेषु प्रतिग्रहे प्रधानद्रव्यत्यागः ।
तदा नैतत्प्रायश्चित्तम् । वैशाखमासव्रतोद्यापनप्रतिग्रहे । मार्क-पु.

प्रवालशय्यापुष्पाणामुशीराणां सुरेश्वर ।
छत्रं गन्धं च दध्यन्नं पथ्यं च गुडादनम् ।
हिमाम्बुदानं जम्बीरयुक्तं शर्करादानकम् ।
वसन्तमाधवप्रीत्यै ह्युक्तानि पार्थिव ।
एतेषां दानमात्रेण नरा ध.न्तेन्द्रसम्पदम् ।
ततस्तु भुवमागत्य मण्डलाधिपतिः भवेत् ।

उद्यापनेषु वैशाखे यः कुर्यात् तत्प्रतिग्रहम् ।
स सर्वान् नरकान् भुक्त्वा हीनजातिर्विजायते ।

धेनुप्रतिग्रहे प्रधानं परित्यज्य चान्द्रायणम् ।

शय्यायाः द्विगुणं स्वर्णरजतदानेषु पूर्ववत् ।
प्रायश्चित्तमकृत्वातु न शुद्धः पूर्वजोऽन्यतः ।
तस्मात् परिग्रहः त्याज्यः सात्विकेषु व्रतेष्वपि ।

नानाविधफल प्रतिग्रहे । मार्कण्डेयपुराणे ।

कदलीमातुलङ्गं च नारिकेलफलं तथा ।
खर्जूरं पनसं चैव द्राक्षाफलमनुत्तमम् ।

आम्रं कपित्थं जम्बीरं जम्बूदाडिममेव च ।
फलानि यानि लोकेऽस्मिन् दद्यात्तत्फलमाप्नुयात् ।

सर्वाणि फलानि राशीकृत्यवस्त्रेणावेष्टय दक्षिणाभिः हेमन्ते शिशिरेवाऽपि ब्रह्महत्यादि पापानं विशुद्धये दद्यात् । एतानिप्रतिगृह्य तत्पापविशुध्यर्थं, आधानतटाकादिषु उपयोगे न दोषः अन्यथा प्रायश्चित्तम् । प्राजापत्यादिकं चरेत् । राशिप्रतिग्रहे पुनःसंस्कारमपि केचिदिच्छन्ति । तस्य दातुः पापानि अशेषाणि ब्राह्मणमाविशन्ति ।

भर्तृघ्नीसकाशात्प्रतिग्रहे, कूर्मपुराणे ।

भर्तारं हन्ति या नारी कर्षणादि निपीडनैः ।
परप्रेषणया वाऽपि सा नारी भर्तृघातिनी ।
यमदूताः सदाबध्वा क्रोशयन्ति निपीडनैः ।
भर्तृघ्नीब्रह्महन्ता च ह्युभयं याति रौरवम् ।
ततः प्रतिग्रहं कृत्वा महान्तं नरकं व्रजेत् ।
तस्य पापविशुध्यर्थं तप्तकृच्छ्रं समाचरेत् ।
स्वल्पे तदर्धं पादं च यथाक्रमम् ।

एतदज्ञानविषयम् । ज्ञाते द्विगुणम् । अभ्यासे त्रिगुणम् । मकरसङ्क्रान्तौ प्रतिग्रहे । मार्कण्डेयः ।

मुद्गदीपतिलावां च धान्य माषक दीपकम् ।
तथा लवण दीपं च महाद्वीपमनन्तरम् ।
एतेष्वन्ते उद्यापनमाचरेत् ।
मोक्षदीपं तथा पुण्यं नरकोत्तारणं पुमान् ।

उद्यापने यदा मोहात्प्रतिगृह्य द्विजाधमः ।
तत्पात्रं सम्परित्यज्य प्रायश्चित्तं समाचरेत् ।
गोधूलिरजसा स्नानं तप्तकृच्छ्रचतुष्टयम् ।

मुद्गतिलदीपे तप्तम् । माषदीपे पराकम् । लवणे चान्द्रम् । ततः पञ्चगव्यप्राशनम् । कारणं विना स्वदारपरित्यागे ।

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे तथा ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ।

अप्रियवादः - साक्षाद्व्यभिचारः । स साक्षात् दृष्टश्चेत् सा त्याज्या । न तु वार्ताश्रवणमात्रेण । अप्रियाणि बहूनि, प्रतिवार्ता, निष्ठुरभाषणम्, अभ्युत्थानपादप्रक्षालनाद्याचरणम्, सर्वदा दरिद्रागमने निन्दा, मनस्यपूर्णे भर्तरि न प्रीतिः, एवमादीन्यप्रियाणि । एतेषु सत्सु न सा त्याज्या, कलियुगत्वात् । व्यभिचारः साक्षात् दृष्टश्चेत् सा त्याज्यैव । न लोकवार्ताश्रवणेन । तदाहापस्तम्बः ।

दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् सा वृत्तिः षण्मासान्" इति । स्त्रियास्तु भर्तृव्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासं तावन्तं कालं [1]चरेत् ।

संन्यासिनः प्रतिग्रहे ।

सर्वसङ्गविहीनस्य धर्मार्थं त्यागिनो यतेः ।
परब्रह्मणि सक्तस्य निस्पृहस्यैव वस्तुषु ॥

1. आपस्तम्बधर्मसूत्रम् प्र-१ पट-१ ख-१८ ।

तस्य प्रतिग्रहं यस्तु द्विजो लोभपरायणः ।
कृत्वा तस्मात् यदा जीवेत् स वृथा ब्राह्मणः स्मृतः ॥

महाभारते ।

अन्नं वा शाकमामं वा रूप्यकं वस्त्रमेव वा ।
कर्मन्दिनो द्विजो यस्तु प्रगृह्य नरकं व्रजेत् ॥
तस्य दोषविनाशार्थं प्राजापत्यं समाचरेत् ॥

अन्नमात्रे उपोषणं परेद्युः पञ्चगव्यप्राशनं च । पतितस्य यतेः प्रतिग्रहे —

दण्डादीन् सम्परित्यज्य पट्टणे वर्तयेद्यदि ।
नानागृहेषु भिक्षान्नं व्यवहारेषु वत्सलः ॥
ग्रामार्थं शिष्यरक्षार्थं धनार्जन परायणः ।
पतितः स्यात् स कर्मन्दी न तं संभाषयेत् क्वचित् ॥
नमस्कारं न कुर्वीत यदि कुर्यात् स पातकी ।
प्रणवं सम्परित्यज्य छत्रोपानहयुग्यतिः ॥
स विप्रैर्न नमस्कार्यः न भिक्षादान पात्रवान् ।
मायावी स तु कर्मन्दी नटवेषं यदा यतिः ॥
अग्रदानं गृहस्थाय ताम्बूलं ब्रह्मचारिणे ।
यतये काञ्चनं दत्वा दाता तु नरकं व्रजेत् ॥
एतेभ्यो ब्राह्मणो यस्तु प्रतिगृह्य धनादिकम् ।
जीवेद्यदिह पापात्मा चान्द्रं तस्य विशुद्धये ॥

द्रव्यप्रतिग्रहे चान्द्रम् । अन्नसङ्ग्रहे कायम् । क्षेत्रप्रतिग्रहे महाचान्द्रम् । वस्त्रादिसङ्ग्रहे विप्रः महासान्तपनं चरेत् । इति यतिपतेः प्रतिग्रहे एवम् ।

अथ मठाधिपतेः । मार्कण्डेयः ।

यतिर्यस्तु महाराज सर्वसङ्गपरिग्रहः ।
भोगासक्तो यदा लोके माठापत्यं करोति यः ॥

तस्य वै निष्कृतिर्नास्ति यमलोकात्सुदारुणात् ।
तदन्ते भुवमासाद्य दिवाकीर्ती भवेन्महान् ॥

न च 'अथवा योगिनामेव कुले भवतिधीमताम्' इति गीता-वाक्यस्य विरोध इति वाच्यम् । 'कुले महति धीमतामिति' योगभ्रष्टस्योक्तत्वात् । भोगासक्तस्य मठाधिपतेः चण्डालजन्मैव ।

तस्मात् यतेः द्विजो यस्तु प्रतिग्रहपरायणः ।
तस्यैव निष्कृतिरियं षडब्दं विधिपूर्वकम् ॥
कृत्वा शुद्धिमवाप्नोति नान्यथा शुद्धिरस्ति हि ।

पापपुरुषप्रतिग्रहे । देवलः

मनुजानां नाभिरन्ध्रादधोभागे षडङ्गुले ।
आश्रित्य तत्र पापीयान् पुरुषो वर्तते सदा ॥
पापानि वर्धयेन्नित्यं भक्षयेत्सर्वमङ्गलम् ।
तस्यैव नाशकरणं दानं कुर्यात्सुखाप्तये ॥
तद्दानं ब्राह्मणो धृत्वा पिशाचो जायते भुवि ।
तद्दोष परिहारार्थं प्रातः स्नानं यथाविधि ॥

नाभिदघ्नजलेस्थित्वा पिधायार्द्रेण वाससा ।
पुरुषसूक्तं जपेत्पश्चात् यदा मन्दायते रविः ।
क्षीराहारं तदा कुर्यात् फलाहारमथापि वा ।
स्वपेद्देवसमीपे तु नारायणमनुस्मरन् ॥

परेद्युः पूर्ववत्कृत्वा मासमात्रेण शुद्ध्यति ।
अयुतं जपसंख्या स्यात् पुनः संस्कारतः शुचिः ।
पञ्चगव्यं पिबेत्पश्चात् पापादस्मात् प्रमुच्यते ॥

पतितप्रायश्चित्तम् ।

पतितस्तु द्विधा प्रोक्तः महापातकसङ्गवान् ।
नित्यकर्म परित्यागी द्वितीयः सद्भिरुच्यते ।

पूर्वस्य प्रायश्चित्तमुक्तम् । द्वितीयस्य विशेषमाह देवलः ।

नित्यकर्मपरित्यागात् नानायोनि निषेवणात् ।
गीतवाद्यानुरागाच्च कुण्डगोलक सङ्गमात् ।
द्यूतासक्तः सदा कामी हास्यवीणादिवादनात् ।
गन्धताम्बूलवस्त्राद्यैः देवादीनामनर्पितैः ।
विटयागेनसंयुक्तः पतितो यो द्वितीयकः । गाने ॥
महापातकि संसर्गात् महापतित उच्यते ।

तस्य मरणान्ता निष्कृतिः ।

तस्य कर्मभ्रष्टस्य प्रायश्चित्तमाह मरीचिः । एकदिने प्राजापत्यम् । त्रिदिने पराकम् । पक्षे तप्तम् । मासे चान्द्रम् । ततः पश्चात् न निष्कृतिः । कर्मभ्रष्टस्य नास्तीह वर्षादूर्ध्वं सतां गतिः ।

यत्र यत्र धर्मशास्त्रेषु पतितप्रायश्चित्तमुक्तं तत्र तत्र एवमेव योजनीयम् ।

रहस्यकृतमहापातकप्रायश्चित्तम् ।

अरण्ये स्वगृहे राजन् मत्सरात् द्रव्यलोभतः ।
यो विप्रो हन्ति यं विप्रं रज्जु दण्डादिपीडनैः ॥

मनुः । आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति रहस्यमुक्तम् ॥

शातातप-प्रा. । रहः पापं न कुर्वीत कर्मणा मनसा गिरा ।
यदि कुर्यात् द्विजो मोहात् प्रकाशाद्द्विगुणं भवेत् ॥

विप्रहत्यां रहः कृत्वा पश्चात्तापपरायणः ।
स्नात्वार्द्रवाससाऽऽच्छाद्य सहस्रशीर्षकं जपेत् ॥
मध्याह्नपर्यन्तमेवम् । रात्रौ देवसमीपे स्वपेत् ।
एवं ऋतुत्रयं कृत्वा पुनः संस्कारमर्हति ॥
यो हृत्वा रहसि स्वर्णं पारक्यं मुखजः सकृत् ।
तस्येह निष्कृतिर्नास्ति कुम्भीपाकाद्भयंकरात् ॥
स्वर्णप्रमाणं स्वर्णस्तेयप्रकरणेऽभिहितम् ।
कथञ्चित् निष्कृतिर्दृष्टा मुनिभिः धर्मवत्सलैः ॥
अरण्यं निर्जनं गत्वा प्रतिष्ठाप्य हुताशनम् ।
साक्षिं कृत्वोर्ध्वमुखः जपेत् द्वादशमक्षरम् ॥
यावन्मध्यन्दिनं चैवं स्वपेद्देवसमीपके ।
एवं मासद्वयं कृत्वा नवलक्षं जपेत्तदा ॥
पटगर्भविधानेन पुनः संस्कारमर्हति ।
पञ्चगव्यं पिबेत्पश्चात् नान्यथा शुद्धिमर्हति ।
गङ्गासेतुः प्रयागश्च गङ्गासागरसङ्गमः ॥
गौतमी कृष्णवेणी च कावेरी च महानदी ।
दर्शनात् स्वर्गदा नृणां स्नानात् मोक्षप्रदायिनी ॥
ता नद्योऽपि रहः पापकृतं विप्रमनिष्कृतिम् ।
न पुनन्तीह राजेन्द्र सुराभाण्डमिवापगाः ॥

रहस्यकृतगुरुतल्पगमने देवलः ।

यो रह्यो जननीं गत्वा तत्सपत्नीमथापि वा ।
प्रजावतीं गुरोर्दारान् विप्रः कामातुरो यदि ॥

स्वमुष्कं स्वेन हस्तेन छित्वा तु दक्षिणामुखः ।
गच्छेत् यावद्गतासुः स्यात् तावताशुद्धिमाप्नुयात् ॥

गौतमः । पक्त्वा घटे यवागूं वै यवैरञ्जलिपूरितैः ।

तद्यवागूं बृहत्पात्रे निधायाग्निसमीपतः ॥

यवागू राजन्यस्य व्रतं क्रूरेववै यवागूः क्रूरइव ।
इत्यन्तेन मन्त्रेण द्विसहस्रं प्रत्यहं जुहुयात् ॥

अवशिष्टां यवागूं स्वयं पिबेत् । परेद्यु. प्रातरुत्थाय पूर्ववत्सर्वमाचरेत् । एवं मासद्वयं कृत्वा शुद्धिमाप्नोति पौर्विकीम् ।

इदं रहस्यकृत प्रायश्चित्तम् ।

अथ चान्द्रायणादीनां लक्षणमाह ।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
तत्संयोगश्च पञ्चैते महापातकसंज्ञकाः ॥

एतेषां पञ्चानां मरणान्तं प्रायश्चित्तम् । न तु कृच्छ्रादिकम् ।
गोवधो गुर्वधिक्षेप· भृतकाध्यापनादिकम् ॥

एतान्युपपातकानि कृच्छ्रचान्द्रायणादिभिः शुध्यति ।
तिलानां धान्यराशीनां विक्रयस्त्वन्यवस्तुनाम् ॥

एतानि सङ्कुलीकरणानि कृच्छ्रैः शुध्यन्ति ।
कन्यापहरणं चैव धेनु-भूहरणादिकम् ॥

मलिनीकरणसंज्ञं स्यात् कृच्छ्रसाध्यं प्रयत्नतः ।
चण्डालीगमनादीनि ह्यपात्रीकरणानि च ॥

कृच्छ्रैर्विशोधनीयानि विप्रैः शुद्धिमभीप्सुभिः ।
दुरन्नभोजनं चैव दुष्टभाषणमेव च ॥

दुष्टसङ्गादिकं चैव जातिभ्रंशकरं महत् ।
एतदपि कृच्छ्रसाध्यम् ।

दुर्मरणादिकं प्रकीर्णकम् तदपि कृच्छ्रसाध्यम् ।
गर्भाधानादिकर्मणां तत्तत्कालातिक्रमे कृच्छ्रैः शुद्धिः ॥

तुलादि प्रतिग्रहीतॄणां ब्रह्मराक्षसत्वं कृच्छ्रैरेव निवार्यते । तेषां कृच्छ्राणां लक्षणमाह मार्कण्डेयः ।

यवमध्यं, पिपीलिकामध्यं, यतिव, शिशोः, महाचान्द्र विधि, चान्द्रायणं पञ्चविधम् ।

प्राजापत्यं, तप्तकृच्छ्रम्, यावकं, पराकं तथा ।
ततः सान्तपनं कृच्छ्रं महासान्तपनं तथा ॥

औदुम्बराह्वं पर्णं च फलकृच्छ्रमतः परम् ।
कृच्छ्रम् माहेश्वरं चैव ब्रह्मकूर्चं तथैव च ॥

मान्यं स्वर्णमयं चैव दशधा कृच्छ्रमीरितम् ।
तेषां स्वरूपमाह ।
शुक्लप्रतिपदारभ्य व्रती नियमपूर्वकम् ।
प्रातः स्नात्वा यथापूर्वं नित्यकर्म समाप्य च ॥

जपेत्तावत् महामौनी यदामन्दायते रविः ।
तदा हरिं समभ्यर्च्य मयूराण्डप्रमाणतः ॥

एकं ग्रासं भक्षयेच्च देवं नत्वाऽथ संविशेत् ।
पाषण्डादीन् न पश्येच्च न भाषेत कदाचन ॥

सायं सन्ध्यामुपासित्वा सायं होममथाचरेत् ।
स्वपेच्च स्थण्डिले देवसमीपे नियतो व्रती ॥

तत प्रातः समुत्थाय पूर्ववन्नियमं चरेत् ।
पुनः ग्रासमेकवृद्ध्या भक्षयेत् पूर्णिमावधि ॥

दशपञ्चैव कवलान् पूर्णिमायां विशेषतः ।
एकैकं कवलं कृष्णपक्षे ह्रासयेद्व्रती ॥

व्रतान्ते गौः प्रदातव्या व्रतस्य परिपूर्तये ।
एतदाचरणेनैव ब्रह्महत्या व्यपोहति ।
इतराणि च पापानि नश्यन्तीति क्रियदद्भुतम् ॥

तस्य प्रमाणमाह ।
अल्पमात्र तृतीयांशैः तण्डुलैः पाचयेद्धविः ।
तावदन्नं मयूराण्डमिति सन्तो वदन्ति हि ॥

इदं यवमध्य चान्द्रायणम् । अत्र सर्वत्र ग्रासभक्षणानन्तरं पाद् प्रक्षालनाचमनादिकं कृत्वा भुक्तिस्थलं स्वयमेव गोमयेन शोधयेत् ।

पिपीलिकामध्य चान्द्रायणमाह ।

पूर्ववत् कृष्णपक्षस्य प्रतिपद्दिवसे व्रती ।
प्रातः स्नानादिकं कृत्वा नित्यकर्म समाप्य च ।

पठेदुपनिषद्वाक्यं नारायणमथापि वा ।
सहस्रनामविष्णोश्च गजेन्द्रस्य च मोक्षणम् ।

पठेद्वा देवतापूजां कृत्वा नियममास्थितः ।
गृहीत्वा पञ्चदशग्रासान् निवेद्य परमात्मने ॥

भक्षयित्वाऽथ विप्रेन्द्रः पूर्ववन्नियमं चरेत् ।
ततः प्रातः समुत्थाय भक्षयेदेकग्रासतः ॥
अमायां कबलैकाशी पूर्ववन्नियतो व्रती ।
परेद्युः ग्रासमेकं तु द्वितीयायां द्वयं भवेत् ।
एकवृद्ध्या ह्येवमेव पूर्णिमान्तमथाचरेत् ।
भुक्त्वा पञ्चदश ग्रासान् ततः शुद्धिमवाप्नुयात् ॥
अत्रापि ग्रासपरिमाणं मयूराण्डवत् ।
इदं पिपीलिकामध्यचान्द्रायणम् ॥

व्रतोपक्रमकाले महतामनुज्ञां स्वीकृत्य पुण्याहं वाचयेत् । सङ्कल्पकाले मन्त्रमुदीरयेत् मन्त्रमाह देवलः ।

गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् ।
तदा भवतु सम्पूर्णं त्वत्प्रसादाज्जगद्गुरो ॥
इति । इत्युक्त्वा प्रारभेत ।

अथ यतिचान्द्रायणम् ।

यतिचान्द्रायणं वक्ष्ये सर्वपापप्रणाशनम् ।
मासादौ प्रतिपद्दिवसे प्रातर्विप्रो यथाविधि ॥
सङ्कल्पमेवं कुर्वीत पूर्ववृत्तमनुस्मरन् ।
तावद्ध्यायन् महाविष्णुं यावन्मन्दायते रविः ॥
कुक्कुटाण्डप्रमाणेन पञ्चैव कबलान् ग्रसेत् ।
स्थलशुद्धिं गोमयेन द्विराचम्य विशुध्यति ॥
एवं परेद्युरारभ्य नित्यकर्माणि चाचरेत् ।
तावत्तोपोषणं कुर्यात् यावच्छुक्लाष्टमी भवेत्॥

तत्रैव पूर्ववत्पिण्डान् भक्षयेत् पञ्चसंख्यया ।
पूर्णिमायां बहुलाष्टम्याममायां च यथाक्रमम् ॥
पञ्च पञ्चैव कवलान् भक्षयेत् नियमपूर्वकम् ।
मासान्ते गौः प्रदातव्या व्रतस्य परिपूर्तये ॥

ततः पञ्चगव्यं पिबेत् ।
एवं यतिचान्द्रायणे कृते सर्वपापैः प्रमुच्यते ।
शिशुचान्द्रायणम् ।

शिशुचान्द्रायणं नाम सर्वर्षिगणसेवितम् ।
पुरातूद्दालको नाम मातुः गर्भविनिर्गतः ॥

नाभिनालमुपादाय स्वाञ्जलौ पर्यटन् महीम् ।
गर्भाष्टमे समायाते सगोत्रेण व्रतं चरन् ॥

तदाप्रभृत्यसौ योगी सायाह्ने भैक्षमाचरन् ।
श्रोत्रियाणां द्विजातीनां त्रिषु वेश्मसु सञ्चरन् ॥

कवलत्रयमानीय प्रक्षाल्य शुचिभिर्जलैः ।
भागत्रयं तदा कृत्वा भागमेकं हरेर्ददौ ॥

द्वितीयमग्नौ निक्षिप्य तृतीयं चात्मनि न्यसन् ।
एवं वै प्रत्यहं कुर्वन् यावत्पुत्रसमागमः ।
नाचिकेतोत्पत्तिपर्यन्तमित्यर्थः ।

तदाप्रभृति लोकेऽस्मिन् शिशुचान्द्रायणं स्मृतम् ।
कलौयुगे विशेषेण महापापकनाशनम् ॥

एवमेव गौतमोऽपि । अन्ते गौर्देया पञ्चगव्यं पिबेत् ।
एवं कृत्वा नरो यस्तु सर्वपापैः प्रमुच्यते ॥

अथ महाचान्द्रायणम् । देवलः ।

> शृणु राम प्रवक्ष्यामि महाचान्द्रायणं परम् ।
> ब्रह्महत्यादि पापानां शोधनं सर्वमङ्गलम् ॥
> गुरुद्रोहे च यत्पापं यत्पापं परवञ्चने ।
> यत्पापं पुत्रहत्यायां यत्पापं पशुमारणे ॥
> चण्डाली गमने पापं यत्पापं विप्रवागमे ।
> यत्पापं शिवनिन्दायां यत्पापं शूलधारणे ॥
> पुरोहितस्य यत्पापं यत्पापं परदारके ।
> पित्रोरब्द परित्यागे यत्पापं विप्रनिन्दने ॥
> एवमादीनि पापानि गुरूणि च लघूनि च ।
> आर्द्राणि चैव शुष्काणि सर्वेषां नाशकं परम् ॥

अत्र प्रकारमेवाह गौतमः ।

> शुक्लप्रतिपदि स्नात्वा पूर्ववत शुद्धतोयतः ।
> पूर्ववन्नियमं कृत्वा चतुर्थे काल आगते ॥
> सङ्कल्प्य पूर्ववन्मन्त्रमुच्चरन् उपवसेत्तदा ।
> ततः प्रभात उत्थाय नित्यकर्माणि चाचरेत् ॥
> चतुर्थकाल आयाते पूर्ववद्देवमर्चयन् ।
> तत्रैव भक्षयेत् पञ्चदश ग्रासान् व्रताप्तये ॥
> उपोषणं प्रकर्तव्यमेवं दर्शसमाप्तितः ।

चतुर्थकालभोजनं नाम, व्रतारम्भदिने, मध्याह्ने, रात्रौ, परेद्युः मध्याह्ने च, भोजनं त्यक्त्वा तद्दिने रात्रौ, भोजनं - चतुर्थकालभोजनम् । एवं शुक्लप्रतिपदमारभ्यामापर्यन्तं व्रतं चरन् परेद्युः गोमूत्रं, पञ्चगव्यं च पिबेत् ।

एतन्माहाचान्द्रमुदीरितम् ।

कृते चर्माश्रिताः प्राणाः त्रेतायां कीकसाश्रिताः ।
द्वापरे रक्तगाः प्राणाः, कलावन्नादिषु स्थिताः ॥

अथ पञ्चविधचान्द्रायणप्रत्याम्नायमाह । देवलः ।

अथ वक्ष्यामि राजेन्द्र महापातकनाशनम्
प्रत्याम्नायं हि चैतेषां विष्णुलोकप्रदायकम् ।
अशक्तत्वात् दुर्बलत्वात् तथायुर्नाशहेतुतः ।।
भक्तिश्रद्धाविहीनत्वात् आलस्यान्नास्तिकादपि ।
चान्द्रायणेऽप्यशक्तश्चेत् प्रत्याम्नायं समाचरेत् ।
शुक्लप्रतिपदि स्नात्वा सङ्कल्प्य विधिपूर्वकम् ।
गावो देयाः प्रयत्नेन पञ्चाशत् स्वर्णभूषणैः ।।
सवत्साः बहुक्षीरिण्यः विप्रेभ्यो जलपूर्वकम् ।
अनेन कृतवान् चान्द्रं शास्त्रमार्गेण धेनुदः ।

महाचान्द्रायणस्य प्रत्याम्नायस्तु शतगोदानम् । अथ प्राजापत्यम् ।

त्रिदिनं तु दिवाश्नीयात् त्रिदिनं रात्रिभोजनम् ।
अयाचितं स्यात् त्रिदिनं निराहारो दिनत्रयम् ।।
कृच्छ्रमेतत् विजानीयात् प्राजापत्यमितीरितम् ।

एतत्प्रत्याम्नायमाह देवलः ।

प्राजापत्ये तु गौरेका द्वादशब्राह्मणार्चनम् ।
समुद्रगानदीस्नानं संहितापाठमुच्यते ।।
वेदपारायणमिति शेषः ।
प्राणायामाश्च द्विशतं गायत्र्या अयुतं जपः ।
तिलहोमः सहस्रं स्यात् प्रत्याम्नायस्तु कृच्छ्रकाः ।

प्राजापत्यस्य कृच्छ्रस्य साक्षात्कर्तुमशक्तिमान् ।
प्रत्याम्नायमहं कुर्यां भवन्तः क्षन्तुमर्हथ ॥
इत्युक्त्वा गां सवत्सां च पूजयित्वा विधानतः ।
हे गौः त्वं सर्वलोकानां मातेति परिकीर्तिता ।
अतस्त्वां पूजयिष्यामि सर्वपापापनुत्तये ॥

इति सर्वकृच्छ्रप्रत्याम्नायगोदानेषु पूजामन्त्रः ।

वेदाध्यायिन् सदा पूज्य दानेष्वेतेषु पावना ।
अत आराधयाम्यद्य पापादस्माद्विमोचय ॥

इति विप्रपूजामन्त्रः ।

प्रत्याम्नायेषु होम स्नान प्रभृतिषु ।

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात् तस्मात् शिवं मे स्यादतः शान्तिं प्रयच्छ मे ॥
यज्ञसाधनभूता या विश्वस्याघप्राणाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

इति सर्वत्र गो-दानेषु मन्त्रः ।

तत्रापि दक्षिणा देया यथा वित्तानुसारतः ।
एवं कृत्वा नरो यस्तु प्रत्याम्नायमनुत्तमम् ॥
सम्पूर्णफलमाप्नोति प्राजापत्यस्य कृच्छ्रतः ।

कृच्छ्रस्येत्यर्थः । गोरभावे मूल्यमाह देवलः ।

गवामभावे निष्कं स्यात् तदर्धं पादमेव वा ।
दरिद्रः कुरुते पादं धनिकः पूर्णमाचरेत् ॥
अन्यथा तत्फलं नास्ति प्राजापत्यं न सिध्यति ।
वराटः, [illegible], निष्कशब्दः द्विविधः ॥

प्रभूणामुत्तमः पक्षः मध्यमानां कराहकः ।
अकिञ्चनानां सर्वेषां वराहार्धमुदीरितम् ॥
ततो हीनं न कर्तव्यं गोमूल्येषु हि सर्वदा ।
अधिकारानुसारेण दद्यादुत्तममध्यतः ॥
तत्तत्फलमवाप्नोति नान्यथा फलमस्ति हि ।
अत स्वशक्ति पुरस्सरतया प्रत्याम्नायं कुर्यात् ॥
अन्यथा निष्फलत्वमवाप्नोतीत्यर्थः ।

समुद्रगानदीस्नानरूपप्रत्याम्नम्नायमाह देवलः ।

भागीरथी च यमुना-नर्मदा च सरस्वती ।
गोदावरी कृष्णवेणी - तुङ्गभद्रा, पिनाकिनी ॥
मलापहा, भीमरथी-वञ्जुला भवनाशिनी ।
अखण्डा चैव कावेरी - ताम्रपर्णी, महानदी ॥
धनुष्कोटिः प्रयागश्च गङ्गासागरसङ्गमः ।
दर्शनात् मोक्षदा नृणां स्नाने मुक्ति-प्रदाः स्मृताः ॥
विंशद्योजनगा महानदी समुद्रगा च ।

प्राजापत्यकृच्छ्राचरणे असमर्थस्य तत्प्रत्याम्नायः गोदानम्, तदा-
प्यसमर्थस्य नदीस्नानमेव ।

कलौयुगे समीचीनम् इदमेवं वयं ब्रूमः ।

'गंगायां मौसलस्नानं प्राजापत्यसमं' इति भविष्योत्तरे उक्तम् ।

पञ्चविधा गंगाः ।

स्कन्दपुराणे ।

भागीरथी गौतमी च कृष्णवेणी पिनाकिनी ।
अखण्डा चैव कावेरी पञ्चगङ्गाः प्रकीर्तिताः ॥

अन्याः समुद्रगा-नद्यः नृणां पापहराः स्मृताः ।
एतासां स्नानार्थं यात्रा पृथक्पृथगुच्यते ।

गौतमेन ।

स्वग्रामस्य च या सिन्धूः, यावद्योजनमात्रगाः ।
तामुद्दिश्य यदा गन्तुं स्नानार्थं दर्शनाय वा ॥
यावन्ति योजनानीह तावत्कृच्छ्रफलं लभेत् ।
परार्थं योऽनुगच्छेद्वा स्नानमात्रफलं लभेत् ॥
भृतिं गृहीत्वा यो गच्छेत् न तस्योभयमस्ति हि ।
विष्णुपादोद्भवा गङ्गा दशकृच्छ्रफलप्रदा ।
गौतमी कृष्णवेणी च नवकृच्छ्रफलप्रदा ॥
तुङ्गभद्रा भीमरथी सप्तकृच्छ्रफलप्रदा ।
मञ्जुला भवनाशी च ऋतुकृच्छ्रफलप्रदा ॥
फाल्गुनी ताम्रपर्णी च नवकृच्छ्रफलप्रदा ।
पिनाकिनी च कावेरी त्वष्टकृच्छ्रफलप्रदा ॥
चापाग्रस्नानमात्रेण ह्यब्दकृच्छ्रफलं लभेत् ।
श्रीशैलसङ्गमे चैव गङ्गासागरसङ्गमे ॥
विंशत्कृच्छ्रप्रदा स्नानात् अतो नद्यश्च पावनाः ।

प्राजापत्यकृच्छ्रप्रत्याम्नायरूपनदीस्नानविधानमाह गौतमः ।

पूर्ववत् पुण्याहवाचनादिकं सङ्कल्पादिकं कृत्वा ऋत्विजो वृत्वा नदीस्नानाभिमुखो भूयात् । नदीं गत्वा कर्तृपूर्वं स्नातान् गन्ध-पुष्पाक्षतैरभ्यर्च्य यथा परिषत्सन्निधौ सङ्कल्पितस्य सर्वप्राय-श्चित्तस्य समग्रफलावाप्त्यर्थं परिषन्निर्णीतं प्राजापत्यकृच्छ्रप्रत्या-

मब्दायरूपमब्दं द्व्यब्दं, त्र्यब्दं, चतुरब्दं, पञ्चाब्दं, षडब्दं, षड्-गुणितषडब्दं वेषाऽऽवर्तितं येन केन प्रकारेण सङ्कल्पितं तत्त-त्संख्याकमहं वा ब्राह्मणैर्वा महानदीस्नानरूपमाचरिष्ये इति सङ्कल्प्य ब्राह्मणान् प्रेषयेत् । ऋत्विजस्तु यजमान-गोत्र-नक्षत्र-राशि-शाखा-नामधेयानि समुच्चार्य एतेन यजमानेनामुकगोत्रेण अमुकनक्षत्रेऽमुकराशौ जातेनामुकशाखाध्यायिनामुकनामधेयेन परिषत्सन्निधौ सङ्कल्पितस्य सर्वप्रायश्चित्तस्य परिषन्निर्णीत-प्राजापत्यकृच्छ्रप्रत्याम्नाय परिकल्पितमहानदीस्नानं मौसल-वदाचरिष्याम इति ऋत्विक्सङ्कल्पः ॥ महानद्यां प्रवाहाभि-मुखः सन् मन्त्रवर्जं मुसलमज्जनवत् स्नानं कृत्वा तटमागत्य द्विराचम्य धौतवस्त्रं परिधाय, तदभावे द्वादशसंख्यया वस्त्राव-धूननं कृत्वाऽऽच्छाद्य द्विराचम्य पूर्ववत् स्नायात् ॥

एवं यथासङ्कल्पिताब्दादिसंख्या पूर्णा भवति तथा कुर्यात् । यजमानः स्नानकर्तृभ्यो ऋत्विग्भ्यः निष्कं वा तदर्धं वा पादं वा स्नानफलस्वीकरणार्थं दद्यात्। निष्कशब्दः देवमानेन वराहद्वयम् । ऋषिमानेन तदर्धम् । मानुषमानेनापि तदेव ग्राह्यम् ।

गङ्गायां मौसलं स्नानं प्राजापत्यसमं विदुः । इति एतत् पञ्चगङ्गाविषयम् । इतरासु नदीषु स्नानसङ्कल्पः पृथक्, कुल्या तटाकपुष्करिण्यादिषु पृथक्सङ्कल्पः खण्डावृत्तवाक्यपठनं च सूर्या-भिमुखः सन् मज्जनं कुर्यात् । तटं गत्वा धौतवस्त्रधारणं पूर्ववत् अष्टोत्तरशतगायत्रीं जपित्वा प्राजापत्यकृच्छ्रात्मकं भवति । ऋत्विग्भ्यः पूर्ववद्दक्षिणा देया ।

प्राजापत्यकृच्छ्रप्रत्याम्नाय द्वादशब्राह्मणभोजनविधिमाह देवलः ।

पूर्ववत्सङ्कल्पादिकं कृत्वा ब्राह्मणान्निमन्त्रयेत् ।

पराशरः । प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायो द्विजार्चनम् ।
कृत्वा शुद्धिमवाप्नोति प्राजापत्यफलं लभेत् ॥

विप्रान् शान्तान् सपत्नीकान् वेदशीलपरिष्कृतान् ।
सदाचारान् शुचीन्नित्यं कृच्छ्रार्थं तान्नियोजयेत् ॥

तथाहाऽऽपस्तम्बः ।

शुचीन्मन्त्रवतो विप्रान्सर्वकृत्येषु भोजयेत् ।
देशतः शौचतः तत्स्यात् प्रतिग्रह पराङ्मुखान् ।

एवं विप्रान् निमन्त्र्याथ भोजयेत् बहुविस्तरैः ।
तेभ्यश्च दक्षिणा देया यथावित्तानुसारतः ।
एवं यः कुरुते सम्यक् प्राजापत्यफलं लभेत् ॥

तत्प्रत्याम्नायरूप वेदपारायणप्रकारमाह देवलः ।

प्रत्याम्नायं प्रशंसन्ति शाखामात्रं सहाऽऽरणम् ।
पारायणेन भगवान् सम्यक्प्रीतो भवेत्तदा ॥

फलं सम्पूर्णकृच्छ्रस्य प्रददाति न संशयः ।
प्रात.काले शुचिर्भूत्वा नित्यकर्म समाप्य च ॥

स्वगृहे देवतागारे नद्यां वा पुण्यदायके ।
प्राङ्मुखोदङ्मुखो वाऽपि सङ्कल्पं पूर्ववच्चरेत् ॥
पारायणादौ प्रणवं कृत्वा पारायणं पठेत् ।
दिशश्चानवलोक्यैव ह्यसम्भाष्यैव पापिनः ॥

मौनव्रतं समागम्य पठेद्वेदं शनैः शनैः ।
शीघ्रपाठी शिरःकम्पी तथा लिखितपाठकः ॥
गद्गदःस्वरहीनश्च पञ्चैते पाठकाधमाः ।
ततः शनैः शनैः विद्यामभ्यसेदात्मशुद्धये ॥
यावत्समाप्तिर्भवति तावत्कृच्छ्रफलं लभेत् ।
स्वयमेवं पठेद्वेदमुत्तमं परिकीर्तितम् ॥
प्रत्याम्नायो मध्यमः स्यात् भृतके निष्फलं भवेत् ।

अथायुतगायत्रीजपरूप प्रत्याम्नायमाह ।

अयुतं वेदमातुश्च प्रत्याम्नायं जपं चरेत् ।
प्रातःस्नात्वा यथाचारं दन्तधावनपूर्वकम् ॥
अग्निहोत्रालये देवगृहे वाऽपि नदीतटे ।
गोष्ठे वृन्दावने देशे जपेदयुतसंख्यया ॥
पर्वभिः जपमालाभिः कुशग्रन्थिभिरेव वा ।
स्वयं मौनमुपाश्रित्य दिशश्चानवलोकयन् ॥
जपेन्महापापजालदहनार्थं दिने दिने ।
अव्यग्रचित्तः प्रजपेत् अन्यथा दोषमाप्नुयात् ।
सन्दिग्धस्तु हतो मन्त्रः व्यग्रचित्तो हतो द्विजः ॥
अब्रह्मण्यं हतं क्षात्रमनाचारं हतं कुलम् ।
अतो मनसि जप्तव्यं मानसं कोटिरुच्यते ॥
अयुतमात्रजपे पूर्णप्राजापत्यफलं भवेत् ।
अङ्गुल्यग्रेण यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥
हस्तस्यानामिकामध्यपर्वादारभ्य नित्यशः ।
तत् द्वितीयं कनिष्ठायाः पर्वत्रयमधः क्रमात् ।
अनामिकोर्ध्वपर्वादि मध्यमायाश्च तर्जनी ॥

पर्वत्रयं तथा कृत्वा तथैवावृत्ति पूर्ववत् ।
मध्यमस्य पर्वद्वितयं मेरुः तं नातिलङ्घयेत् ॥

पर्वभिर्गणयेद्यस्तु गायत्रीं वाऽन्यमेव वा ।
एकैकस्य शतं प्रोक्तं गणनं मुनिभिः परैः ॥

अयुतजपेन प्राजापत्यफलं लभेत् ।
'जपतो नास्ति पातक'मिति स्मरणाच्च ॥

तिलाहुति सहस्ररूपप्रत्याम्नायमाह—

प्राजापत्यस्य कृच्छ्रस्य प्रत्याम्नायो विधीयते ।
होमः तिलैरकोटैश्च सहस्रं पापनाशकृत् ॥

मृत्युञ्जयेन मन्त्रेण न्यास ध्यान पुरःसरम् ।
मन्त्रान्तेषु हुनेद्वह्नौ आहुतीःसघृतैस्तिलैः ॥

सहस्रहोमकात्पापी पूतो भवति तत्क्षणात् ।
स्वयं वा ऋत्विगेको वा तिलहोमसहस्रकम् ॥

तप्तकृच्छ्रस्वरूपमाह देवलः ।

वार्युष्णं त्रिदिनं विप्रः पयउष्णं दिनत्रयम् ।
त्रिदिनं घृतमुष्णं च पीत्वा शुद्धिमवाप्नुयात् ॥

वायुभक्षस्त्रिदिनं द्वादशदिनपूर्त्यर्थं कर्तव्यम् । तदाह बृहस्पतिः ।

मुनिभिः कृच्छ्रमित्युक्तं शास्त्रेषु द्विजवल्लभ ।
तत्कृच्छ्रं द्वादशाहोभिः साध्यं देहविशुद्धिदम् ॥

यत्र यत्र अब्दमित्युक्तं कृच्छ्रेषु तत्र तत्र त्रिंशद्दिनसंख्यायाख्यं विद्यात् ।

तप्तकृच्छ्रप्रत्याम्नायमाह मरीचिः ।

पापनाशस्य कृच्छ्रस्य तप्तस्य ब्रह्मरूपिणः ।

दद्यात् द्विजातये सम्यक् गवां विंशतिमादरात् ।

द्विजातये - द्विजातिभ्यः । तुलादिप्रतिग्रहीतॄणामयमेवाचारः तत्तत्प्रायश्चित्ताकरणे वेदितव्यः ।

अथ पराककृच्छ्रस्य लक्षणमाह गौतमः ।

प्रत्यहं घृतमात्रं स्यात् द्वादशाहं गवोद्भवम् ।

पीत्वा पलं द्विजः शुध्येत् पराक इति विश्रुतः ॥

सर्वपापप्रशमनः, सर्वलोकप्रदायकः ।

तप्तैव गोघृतेन पलमानेन द्वादशरात्रं चतुर्थे काले नियमानन्तरं पीत्वा द्विजः शुद्धिमवाप्नोति । अयमेव पराकः ।

अस्य प्रत्याम्नायमाह ।

प्रत्याम्नायं गवां दद्यात् दशपञ्च सवत्सकम् ।

तस्याचरणमात्रेण पराकस्य फलं लभेत् ॥

अथ यावककृच्छ्रलक्षणमाह ।

अवघ्नातान् यवान् पक्त्वा स्वगृह्याग्नौ व्रती शुचिः ।

तद्यवाग्रं समादाय ब्रह्मपत्रपुटे वशी ॥

यवाभावे व्रीहयो वा श्यामाकाः तत्प्रमाणतः ।

तदन्नं व्रतिने दत्त्वा यवाग्रं विष्णवेऽर्पयेत् ॥

नित्यकर्मादिकं कृत्वा यावन्मन्दायते रविः ।

तावत्पठेद्विश्वरूपं पठेन्नारायणं स्मरन् ॥ गीता अ-११

यवाग्रं सम्पिबेत्पश्चात् द्विराचम्य विशुध्यति ।

अजस्रं धारयेदग्निं यावत्कृच्छ्रं समाप्यते ॥

परेद्युरेवं कुर्वीत द्वादशाहोभिरीरितः ।
तदन्ते गौः प्रदातव्या पञ्चगव्यं पिबेत्ततः ॥
एवं कृत्वा द्विजो यस्तु सद्यः पापाद्विमुच्यते ।

चान्द्रप्रत्याम्नायमाह देवलः ।

गावो दश प्रदातव्याः प्रत्याम्नाये प्रकल्पिताः ।
सवत्सा दुग्धसम्पन्नाः सुशीलाः समलङ्कृताः ।
पृथक् प्रदेया विप्रेभ्यः पञ्चगव्यं ततः पिबेत् ॥

अथ सान्तपनकृच्छ्रस्य लक्षणम् ।

काशीक्षेत्र, गया, प्रयाग, रामेश्वरेत्याद्यदर्शनेन यो जीवः षष्टिः वत्सरान् जीवति, स गार्दभं जन्म प्राप्नोति ।

तदाह बृहस्पतिः ।

पुण्यालयान् पुण्यनदीं व पश्येत् षष्टिवर्षतः ।
महान्तं नरकं गत्वा पश्चाद्रासभतां व्रजेत् ॥
तस्य दोषस्य शान्त्यर्थं कृच्छ्रं सान्तपन चरेत् ।

तस्य लक्षणाह प्राजापतिः ।

पूर्ववत्प्रातरारभ्य स्नानं सङ्कल्पमेव च ।
नित्यकर्म तथा कृत्वा यावन्मन्दायते रविः ॥
गोदुग्धं माषमग्नं तु गृहीत्वा विष्णुसन्निधौ ।
विविवेद्य स्वयं पीत्वा गन्धताम्बूलवर्जितः ॥
द्वादशाहोभिरेवं चेत् शुद्धो भवति पूर्वजः ।

तस्य प्रत्याम्नायमाह पराशरः ।

सान्तपस्यास्य कृच्छ्रस्य प्रत्याम्नायो गवां दश ।
सर्वालङ्कारसंयुक्ताः सक्षीराः साधुवृत्तयः ॥

महासान्तपनलक्षणमाह देवलः ।

द्विदिनं समुपोष्यैव द्विदिनं पूर्ववत्पयः ।
पूर्ववन्नियमं कृत्वा द्वादशाहेन शुध्यति ॥
पूर्ववत् माषमश्नम् । माषमात्रमिति पाठान्तरम् ।

सान्तपनस्य प्रत्याम्नायमाह ।

प्रत्याम्नायं प्रकुर्वीत तत्कृच्छ्रस्य फलाप्तये ।
गावो देयाः प्रयत्नेन विप्रेभ्यः षोडशामलाः ॥
अलङ्कृताश्च वस्त्राद्यैः पयस्विन्योऽघनाशिनीः ।

अथ कायकृच्छ्रलक्षणमाह मरीचिः ।

चत्वार्यहानि ग्रासाः स्युः एकैकं प्रतिवासरम् ।
निराहारस्तथा तेषु चतुर्ष्वेतेषु भोजनम् ॥

प्रथमं चतुर्ष्वहस्सु प्रत्यहमेकैकं ग्रासम् ।
ततश्चतुर्षु उपवासः, ततश्चतुर्षु पूर्ववत् ग्रासभक्षणम् ॥

तदन्ते व्रतिभिर्देया गौरेका गव्यभक्षणम् ।
गव्यभक्षणं पञ्चगव्यभक्षणम् ।

कायकृच्छ्रप्रत्याम्नायमाह देवलः ।

दश गावः प्रदातव्याः सवत्साः भूषिता नृभिः ।
कायकृच्छ्रप्रतिविधिः सर्वपापनिवृत्तये ॥

अथातिकृच्छ्रलक्षणमाह गालवः ।

अतिकृच्छ्रस्य महतः प्रकारमधुनोच्यते ।
प्रस्थमात्रान् यवान् शुभ्रान् श्यामाकान् तण्डुलांस्तथा ।

काय-प्राजापत्येर्थः ।

एकद्रव्यं समादाय व्रतादौ पूर्ववच्चरेत् ।

पूर्ववत्स्नानसङ्कल्पादिः ।

भागत्रयं तथा कृत्वा तण्डुलान् पूर्वमानतः ।

व्रतादौ मध्यदिवसे व्रतान्ते वा दिनत्रयम् ॥

भक्षयेदिति शेषः । पूर्ववत् द्वादशसु दिनेषु प्रथमे दिन-चतुष्टये तत्रापि प्रारम्भदिने एकं भागमश्नीयात् । मध्यचतुष्टये मध्यदिने एकं भागम् । अन्त्यचतुष्टये अन्त्यदिने एकं भागम् । अन्ते गौरेका प्रदेया । ब्रह्मकूर्चं च पिबेत् ।

अस्य प्रत्याम्नायं मनुः ।

अतिकृच्छ्रस्य महतः प्रत्याम्नायं शृणुष्व मे ।

विप्रेभ्यो दश गावस्ताः पूर्ववत्पूजिताः शुभाः ।

अलङ्कृताः प्रदातव्याः विप्रेभ्यश्च पृथक् पृथक् ॥

औदुम्बरकृच्छ्रलक्षणम् । पराशरः ।

प्रस्थद्वयं तण्डुलान्वा श्यामाकान्वा यवानपि ।

विभज्य च द्वादशधा प्रत्यहं पाचयेद्व्रती ॥

औदुम्बरैः पत्रपुष्पैः पचेत्पत्रपुटे मुदा ।

तत्र निक्षिप्य तं ग्रासं विष्णवे पूर्वमादिशेत् ॥

चतुर्थकाल आयाते भक्षयेन्मौनमाचरन् ।

ततः प्रभाते विमले द्वितीयं पूर्ववत् चरेत् ॥

एवं ग्रासान् द्वादशैव द्वादशाहस्सु भक्षयेत् ।

व्रतान्ते गौः प्रदातव्या पञ्चगव्यं ततः पिबेत् ॥

अस्य प्रत्याम्नायमाह चतुर्विंशतिमते ।

औदुम्बरस्य कृच्छ्रस्य प्रत्याम्नायं सलक्षणम् ॥

अष्ट गावः प्रदातव्याः द्विजेभ्यो लक्षणान्विताः
सर्वपापविनिर्मुक्तः सम्पूर्णं फलमश्नुते ॥

पर्णकृच्छ्रलक्षणं - पराशरः ।

पर्णकृच्छ्रस्य पर्णानि मध्यमानि द्विजोत्तमः ।
त्रिभिः पत्रैः ब्रह्मभूतैः कृत्वा चैव पुटत्रयम् ॥

त्रिषु वेश्मसु विप्राणां वेदाध्ययनशीलिनाम् ।
भिक्षात्रयं समानीय त्रिषुपत्रपुटेष्विह ॥

एकं पुटस्थं देवाय विप्रायैकं समर्पयेत् ।
अवशिष्टं तथाश्नीयात् हरिनामपरायणः ॥

ततः प्रभातवेलायां पूर्ववन्सकलं चरेत् ।
एवं द्वादश दिनानि कृत्वा एका गौर्देया। पञ्चगव्यं पिबेत्

एवं द्वादशाहानि । अस्य प्रत्याम्नायमाह—

पञ्च गावः प्रदातव्याः सालङ्काराः सवत्सकाः ।
साधुशीला युवत्यश्च विप्रेभ्यश्च पृथक् पृथक् ॥
पर्णकृच्छ्रस्य विप्रर्षे प्रत्याम्नायो महत्तरः ।

फलकृच्छ्रलक्षणमाह देवलः ।

प्रातः स्नात्वा शुचिर्भूत्वा नित्यकर्म समापयेत् ।
कदलीफलमेकं च विष्णवे तन्निवेदयेत् ॥

तदेव भक्षयेत्पूर्वं स व्रती मौनपूर्वकम् ।
एकैकं बीजसम्पूर्णं भक्षयित्वा फलत्रयम् ॥

चूतफलं विना ग्राह्याणि अन्यानि फलानि ।
एवं द्वादश रात्राणि चरेन्नारायणाव्रतः ॥

गौर्देया विप्रवर्याय ब्रह्मकूर्चं पिबेत्ततः ।
फलकृच्छ्रमिदं सर्वं कथितं ब्रह्मणोदितम् ॥
अस्य प्रत्याम्नायम् ।
गोत्रयं वत्ससंयुक्तं धूपदीपनिवेदनैः ।
सम्पूज्य विप्रवर्याय प्रदद्यात् तत्फलाप्तये ॥

अथ महेश्वरकृच्छ्रलक्षणमाह—

पुरा मन्मथो हतो रुद्रेण । तद्दोषपरिहारार्थं ब्रह्माणं पप्रच्छ । ब्रह्मा प्राह ।

प्रातः स्नात्वा यथाऽऽचारं नित्यकर्म समाप्य च ।
यदा मन्दायते भानुः तदा कपालमुद्वहन् ॥

श्रोत्रियाणां त्रिषु गृहेषु शाकं भैक्षं फलं वा समानीय देवाय विधिपूर्वकं समर्प्य तानि सर्वाणि भक्षयेत् ।

सायं काले स्वपेत् देवसमीपे नियतो व्रती ।
एवं द्वादशाह कृत्वा शुद्धिमाप्नोति वै नरः ॥

अन्ते गौर्देया, पञ्चगव्यमप्यश्नीयात् ।

एवं श्रुत्वा तदा देवः महेशानस्तथाऽकरोत् ।
एतस्याचरणेनैव द्विजः पापाद्विमुच्यते ॥

अस्य प्रत्याम्नायमाह—

गावो देयाः द्विजातिभ्यः ह्यर्चिता वस्त्रभूषणैः ।
रुद्रसंख्याः सवत्साश्च पयस्विन्यः पृथक् पृथक् ॥

अथ ब्रह्मकृच्छ्रलक्षणमाह मार्कण्डेयः ।

प्रातः स्नात्वा यथाकालं नित्यकर्म समाप्य च ।
देवागारे तथा गोष्ठे पञ्चगव्यं पिबेद्यदि ॥

गोमूत्रं माषकानष्टौ गोमयस्य तु षोडश ।
क्षीरं माषाष्टकं ज्ञेयं दधिमाषत्रयं तथा ॥
घृतं माषत्रयं प्रोक्तं तथा कुशजलं मुने ।
तत्तन्मन्त्रेण संयोज्य तत्तन्मन्त्रेण हावयेत् ।
होमशेषं पिबेत्पश्चात् रवौ मध्यगते सति ॥
आचम्य मनसा विष्णुं स्मरेत्सर्वेश्वरं हरिम् ।
स्वपेद्देवसमीपे तु गन्धताम्बूलवर्जितः ॥
ततः प्रातः समुत्थाय पूर्ववद्व्रतमाचरेत् ।
एवं द्वादशरात्राणि चरेद्व्रतमनुत्तमम् ॥
महापापं चोपपापं यच्चान्यत्तद्विनश्यति ।

**अस्य प्रत्याम्नायमाह—**

अष्ट गावः प्रदातव्याः क्षीरवत्यः स्वलङ्कृताः ।
विप्रेभ्यो वेदविद्भ्यश्च ब्रह्मकृच्छ्रफलाप्तये ॥

**अथ धान्यकृच्छ्रम् ।**

तप्तादिसर्वकृच्छ्राणामशक्तौ धान्यकृच्छ्रमाह—

**मार्कण्डेयः । धान्यकृच्छ्रम् ।**

खारिधान्यस्य महतः पञ्चधा भागमाचरेत् ।
कृच्छ्रस्यैकस्य यो भागः स कृच्छ्रं धान्यमीरितम् ॥
तद्धान्यं भागशो दद्यात् सम्पूर्णफलमश्नुते ।

धान्यशब्देन व्रीहयः उच्यन्ते । केचित् श्यामाकमिति, केचिन्नीवारमिति च वदन्ति । स्वर्णकृच्छ्रलक्षणम् ।

महाप्रभोः वराहःस्यात् तदर्धं मध्यमस्य हि ।
तदर्धमितरेषां च ततो न्यूनं न कारयेत् ।।
ततो न्यूनं स्वर्णं न दद्यात् ।

वराहादि प्रमाणमाह मार्कण्डेयः ।

गवाक्षान्तर्गतरजः वायुना सम्प्रदर्श्यते ।

तत्त्रसरेणुः,तस्य द्वयं लिक्षा,तत्त्रयं यवं, तत्त्रयं गुञ्जम् ।

पञ्चगुञ्जात्मकोमाषः रूपकं तदुदाहृदम् ।
रूपकाणां नवानां तु वराह इति कथ्यते ।।
स्वर्णकृच्छ्रं वराहःस्यात् ततो न्यूनं न कृच्छ्रकम् ।

कदलीविवाहः ।

पतितं क्लीबमुन्मत्तं कुब्जं काणं रुजार्दितम् ।
अपस्मारं परित्यज्य विवाहे न च दोषभाक् ।।

एषां कदलीविवाहं कृत्वा अनुज्ञाप्य अनुजः उद्वहेत् ।

तत्प्रकारमाह—

कार्तिके मार्गशीर्षे वा माघे वा फाल्गुनेऽपि वा ।
वैशाखे ज्येष्ठमासे वा विवाहो रम्भया सह ।।
प्रशंसन्ति मुनिश्रेष्ठाः चन्द्रताराबलान्विते ।
क्लीबादिः ज्येष्ठः प्रातरभ्यज्य स्नायात् ।
गत्वा च कदलीमूलं पुण्याहं वाचयेत्ततः ।।
नान्द्याह्वानं तदा कुर्यात् यथावर्णं यथाविधि ।
कदल्याः कङ्कणं बद्ध्वा विश्वेत्तातेति मन्त्रतः ।।
विश्वेत्तातेति पुंसः बृहत्सामेति कदल्याः ।
परित्वा गिर्वण मन्त्रेण कदल्या वस्त्रबन्धनम् ।

आशासानेति योक्त्रं बद्ध्वा, माङ्गल्यतन्तुनेति स्वर्णमयं ताम्रमयं वा माङ्गल्यं बद्ध्वा कांस्यमयं पात्रं तण्डुलैः पूरितं स्वहस्ताभ्यां धृत्वा वृक्षस्योपरि न्यसेत् । एवं विवाहं कुर्यात् । लौकिकाग्निं प्रतिष्ठाप्य आज्यभागान्तं कृत्वा वनस्पतिभ्य इति अनुवाकोक्तान् स्वाहाकारान् आज्येन हुत्वा ब्रह्मविसर्जनान्ते वरस्त्वग्निं परिक्रम्य औपासनमाचरेत् ॥

ततः कदलीं तां परित्यजेत् ।

स गृहस्थो न सन्देहः । परिवेत्तादिदोषो नात्र भवेत् । यज्ञं वा विवाहं वा राज्यं वा परिपालयेत् ।

उभयोः स्यात् विधिः सम्यक् परिवेतृत्वहानये ।
अन्यथा दोषमाप्नोति नरकं चाधिगच्छति ।

नारायणबलिमाह देवलः ।

विषाग्निजलपाषाणैः दुर्मृतानां प्रमादतः ।
कर्मादौ देहशुद्ध्यर्थं नारायणबलिं चरेत् ।
कर्मादौ पूर्वदिवसे मृतस्यैव द्विजन्मनः ।
प्रायश्चित्तं तथाकृत्वा धर्मशास्त्रोक्तमार्गतः ॥

विप्रानाहूय । करिष्येऽहं मृतस्यास्य बलिं नारायणात्मकम् ।
इति सङ्कल्प्य मनसा उपवेश्य सुखासने ॥
लौकिकाग्निं प्रतिष्ठाप्य परिस्तीर्य विधानतः ।
स्रुवेणाज्यं समादाय व्याहृतीभिः पृथक् पृथक् ॥
व्याहृतीनां त्रयं कृत्वा ह्यष्टोत्तरशतं हुनेत् ।
ब्राह्मणान् समलङ्कृत्य पूर्वोक्तेन विधानतः ॥
चतुर्विंशतिनामानि केशवादीनि वै क्रमात् ॥

द्वादशब्राह्मणपक्षे एकैकस्य नामद्वयम् । षट्पक्षे नामत्रयम् । तदभावे सर्वाणि नामान्येकत्र ।

तण्डुलाश्चैव मुद्गाश्च माषाः शाक घृतं दधि ।
ताम्बूलं दक्षिणाश्चैव विप्रेभ्यः परिकल्पयेत् ॥
वाक्येन तोषयेद्विप्रान् अधिकारो न विद्यते ।

सपिण्डीकरणं यावत् तावदन्नं न गृह्णीयात् । यद्यन्नं भुञ्जीयात् तदा पुनः संस्कारः । ततः दुर्मृतानां पारलौकिकं कर्माचरेत् ।

अथ वैष्णवश्राद्धम् । पराशरः ।

प्रायश्चित्तेषु दानेषु तुलादिषु महत्स्वपि ।
यः कुर्याद्वैष्णवश्राद्धं तत्तत्कर्मफलं लभेत् ॥
सर्वत्र व्यापको विष्णुः कर्मादावर्चयेत्ततः ।
यः कुर्याद्वैष्णवश्राद्धं तदानन्त्याय कल्पते ॥

यद्यामं दद्यात् तदा द्विगुणं; हिरण्यं त्रिगुणम् । तत्र केशवाद्यो देवताः ।

नान्दीश्राद्धमाह ।

प्रायश्चित्तेषु दानेषु विवाहादिषु कर्मसु ।
नान्दीश्राद्धं तदा कुर्यात् सर्वकर्मप्रवृद्धये ॥
पूर्वेद्युर्वा तदानीं वा अन्नेन वा आमेन हिरण्येन वा ।

पितृनुद्दिश्य कुर्यात् । तत्र देवताः गरुडपुराणे ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥

मातामहाः सपत्नीकाः देवाः सत्यवसुसंज्ञकाः ।
ततः परममूर्त्तास्तु नागच्छन्तीह कर्मसु ॥

तदाह गालवः ।

पित्रादि पितरो मूर्त्ताः ह्यमूर्त्तास्तु ततः परम् ॥

द्वादश एवमूर्त्ताः श्राद्धेषु भोक्तारः ।
ततः परं अमूर्त्ताः श्राद्धेषु, न भुञ्जते ॥

रामलक्ष्मणप्रतिमादानम् ।

इदमन्यत्प्रवक्ष्यामि सर्वपापहरं परम् ।
सर्वसम्पत्करं नृणां पुत्रदं पुत्रकामिनाम् ॥

पूर्णिमादि पुण्यकाले प्रातरुत्थाय नित्यकर्माणि समाप्य, तण्डुलपूरिते स्थण्डिले अष्टदलपद्मं विलिख्य वस्त्रेण संवेष्टय, तत्र रामलक्ष्मणप्रतिमां न्यसेत्, षोडशोपचारैः सम्पूज्य स्वयं प्राङ्मुखः उदङ्मुखाय विप्राय दद्यात् ।

मन्त्रः । अयोध्याधिपते वीर, श्रीराम करुणानिधे ।
पूर्वजन्मसमुद्भूतमिहजन्मनि सम्भवम् ॥
तत्सर्वं नाशयाभ्यद्य त्वत्प्रसादाज्जगद्गुरो ।

अर्चयित्वा त्वहं राम सर्वपापापनुत्तये ।
दास्यामि विप्रवर्याय त्वदीयां प्रतिमामिह ॥
पुत्रं देहि यशो देहि राज्यं देहि जनार्दन ॥

अनेन दानमन्त्रेण पापं संहर्तुमर्हसि ।
सर्वपापहरो यस्मात् अतः शान्तिं प्रयच्छ मे ॥

देयद्रव्यतृतीयांशो दक्षिणा मुनिभिरीरिता ।
ब्राह्मणान् भोजयेत्पश्चात् यथाविभवपूर्वकम् ॥
इदं च सर्वरोगघ्नं सर्वकामप्रदं नृणाम् ।

अथ स्मृतिप्रामाण्यमाह मनुः ।

श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम् ।
तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवि ॥

योऽवमन्येत ह्युभयं हेतुशास्त्राश्रयान्नरः ।
स साधुभिर्बहिष्कार्यः नास्तिको वेदनिन्दकः ॥

मानवं धर्मशास्त्रं च साङ्गो वेदः चिकित्सकम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥
यस्तानि हेतुभिः हन्यात् सोऽन्धे तमसि मज्जति ।

प्रायश्चित्तस्याशास्त्रीयस्य विधाने दोषो विहितो व्यासेन ।

ज्योतिषं व्यवहारं च प्रायश्चित्तं चिकित्सकम् ।
विना शास्त्रेण यो ब्रूयात् तमाहुर्ब्रह्मघातुकम् ॥

प्रायश्चित्ताधिकारिणमाह मनुः ।

अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ।

नरग्रहणं प्रतिलोमजातीनामपि प्रायश्चित्तप्राप्त्यर्थम् ।

प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः ।
अपश्चात्तापिनः कष्टान् नरकान् यान्ति दारुणान् ॥
पापतारतम्यात् फलतारतम्यं दर्शितम् ॥

विष्णुधर्मोत्तरे ।

अष्टाविंशतिकोट्यस्तु नरका दारुणा भृशम् ।
महापातकिनश्चापि उपपातकिनः तथा ॥

तथाऽन्ये पापिनश्चापि पच्यन्तेऽत्र सुदारुणे ।
पातके तु सहस्र स्यात् महति द्विगुणं तथा ॥
उपपातके तुरीय स्यात् नरके वर्षसंख्यया ।

भविष्योत्तरे ।

अधोऽधः पातनात् पुंसो पातकं परिकीर्तितम् ।
नरकादिषु घोरेषु पातनात्पापमुच्यते ।

याज्ञवल्क्यः ।

तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये ।
एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥

अङ्गिराः ।

प्रायो नाम तपः प्रोक्त चित्त निर्णय उच्यते ।
तपोनिश्चयसंयुक्त प्रायश्चित्तं तदुच्यते ।

कलौ पापबाहुल्यस्य अवर्जनीयतया पापसंभवात् प्रतिनिमित्तं प्रायश्चित्तं कर्तुमशक्यत्वात् शरीरस्याऽस्थिरत्वात् पापफलानुभवे चिरकालिक-घोर-तीव्रवेदनायाः सोढुमशक्यत्वात् पापभीरुणा पश्चात्तापिना पुरुषेणेह सर्वपापापनोदकं सर्वप्रायश्चित्तं सर्वथाऽऽचरणीयम् ।

यथाकाले । श्रौतकर्मसु औपासनादिकर्मसु तुलापुरुषदानादिकर्मसु च अधिकारसिद्ध्यर्थं च कार्यमेव ।

तदुक्तं मनुना—शुद्धेन कर्म कुर्वीत इति ।

अङ्गिराः ।

श्रौतं स्मार्तं च कर्तव्यं कृत्वा पावनमात्मनः ।

जपं तपश्च होमं च दानं चार्चनमेव च ॥

जपः - वेदपारायणादिः । तपः - कृच्छ्रचान्द्रायणादिः । होमः - कूश्माण्डादिः । दानम् - गवादेः । अर्चनम् - विष्णवादीनाम् । आतुरस्य शुद्धिकालप्रतीक्षा नैव कार्या । आशौचादि दोषे रात्रावपि च सद्य एव कार्या ॥

तदाह वराहपुराणे ।

व्यतीपातोऽथ सङ्क्रान्तिस्तथैव ग्रहणं रवेः ॥

पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः ।

तदा गां हिरण्यादि दत्त्वाक्षयतामियात् ।

कलौ युगे महापातकसंसर्गिणः न महापातकत्वम् । तदुक्तं पराशरेण ।

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।

द्वापरे कुलमेकं तु कर्तारं च कलौ युगे ॥

कलौ पतति कर्मणा इति च ।

एवं बहुस्मृतिपर्यालोचनया संसर्गिणः दोषाभावकथनं पातित्याभावपरम् । संसर्गप्रायश्चित्तं तु पादोनद्वादशवार्षिकं कर्तव्यमेव । तस्मात् संसर्गिणः कलियुगेऽपि पातकित्वमेवेति सुष्ठूक्तम् । अस्य महापातकित्वं नास्तीत्याशयः ।

ब्रह्मघातुकानाह स्मृत्यन्तरे ।

अनुमन्तोपदेष्टा च तथा सम्प्रतिपादकः ।

प्रोत्साहक. सहायश्च तथा मार्गोपदेशकः ।
आश्रयः शस्त्रदाता च शक्तो मत्यामुपेक्षकः ।
अकार्यकारिणा तेषा प्रायश्चित्त विधीयते ॥

एवं सुरापानस्वर्णस्तयगुर्वङ्गनागमनेषु यथायोग्यं अनुग्रहकारिणः बोद्धव्याः ॥

स्त्रीणां विषये याज्ञवल्क्यः ।

नीचाभिगमनं भर्तृघातन गर्भनाशनम् ।
विशेषपतनीयानि स्त्रीगामेतान्यपि ध्रुवम् ॥

देवद्विजगवा भूमि पूर्वदत्ता हरेत य ।
प्रणष्टामपि कालेन तमाहु ब्रह्मघातुकम् ॥

निक्षेपहरणं, रजत, भूमि, वस्त्र, मणीनां च हरणं, स्त्री, धेनु, ब्राह्मणक्षेत्रापहरण, स्वर्णस्तेयसमम । अन्त्यजातिस्त्री रजकादि-षोडशग्रामान्त्यजानां स्त्री, ितृष्वसा, मातुलानी, मातृष्वसा, राजपत्नी, सखी, सगोत्रा, निक्षेपिकागमनानि गुरुदारगमनस-मानानि ॥

उपपातकानि मनुः ।

गोवधः अयाज्ययाजनम्, बान्धवत्याग, । भृतकाध्यापनाध्ययने, गुरुमातृपितृत्याग इत्यादीनि उपपातकानि उक्तानि ॥

खरोष्ट्रमृगमार्जारमीनमहिषादिविक्रयणं सङ्कुलीकरणम् । मलि-नीकरणम्-क्रिमि, कीट, वध , मद्यानुगतभोजनं, इत्यादीनि ।

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् ।
अपात्रीकरणं ज्ञेयं असत्यस्य च भाषणम् ॥

असभ्यभाषणं, जैह्म्यं पशुगमनम् अयोनिनिषेवणं च जातिभ्रंशकरम् ।

**अघमर्षणम् पराशरः ।**

कृत्वादौ च तिलादाने प्रायश्चित्तेषु कर्मसु ।
चण्डालादि स्पर्शेषु स्वदारेषु दिवागमम् ॥
दुरन्ने दुष्परिग्राहे अघमर्षणमीरितम् ।
एकोद्दिष्टेषु श्राद्धेषु सपिण्डीकरणेषु च ॥

पूर्वभोक्ता द्विजः कुर्यात् अघमर्षणमादरात् ।
यानि यानीह निन्द्यानि कर्माणि प्रवदन्ति च ।
तान्याचरन् यदा विप्र तदा स्यादघमर्षणम् ॥

**अघमर्षणप्रकारः ।**

नदीं तटाकं वा गत्वा द्विराचम्य शुचिर्भूत्वा प्रायश्चित्तं समाचरेत् ।

सङ्कल्प्य विधिपूर्वं तु नाभिदघ्ने जले स्थितः ।
सूर्यस्याभिमुखो भूत्वा मार्जयेन्मन्त्रमुच्चरन् ॥
मन्त्रान्ते मार्जयेद्दर्भैः विप्रो देहविशुद्धये ।

पवमानः सुवर्जनः, हिरण्यशृङ्गं, सर्वेषु वा एषु लोकेषु, इत्यनुवाकं, प्रजापते रक्षस्व गतं इत्यनुवाकं, देवस्यत्वेति मार्जनं देवर्षिपितृतर्पणं कृत्वा द्विराचम्य धौतवस्त्रं परिधाय शुचिर्भवति । आर्द्रवस्त्रं निष्पीड्य वामप्रकोष्ठे निक्षिप्य द्विराचामेत् । सर्वप्रायश्चित्ते एवमघमर्षणं कृत्वा प्रायश्चित्तार्थमागतां परिषदं गच्छेत् इति ।

**सर्वेषां कर्मणामादौ महासङ्कल्पमाह – देवलः ।**

महादानेषु यज्ञादौ प्रायश्चित्तेषु कर्मसु ।
कन्यादाने नदीस्नाने महासङ्कल्पमाचरेत् ॥

**महासङ्कल्पः ।**

महासङ्कल्पमुच्चार्य कृतं कर्मानन्त्याय कल्पते ।

अस्य श्रीमदादिनारायणस्य अचिन्त्यापरिमितशक्त्या भ्रियमाणस्य महाजलौघस्य मध्ये परिभ्रममाणानां अनेककोटि-ब्रह्माण्डानामेकतमेऽव्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यै-रावरणैरावृतेऽस्मिन्महति ब्रह्माण्डे आधारशक्तिकूर्मानन्तादि अष्टदिग्गजोपरि प्रतिष्ठितस्य सप्तपातालाख्यलोकोपरि मध्यभागे महानागायमानशेषस्य सहस्रफणामणिमण्डिते दिग्दन्तिशुण्डादण्डोत्तम्भिते लोकालोकाचलेन वलयिते लवणेक्षुसुरासर्पिर्दधि-क्षीरोदकार्णवैश्च परिवृते जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाक-पुष्कराख्यद्वीपपरिवृते इन्द्रद्वीपकशेरुताम्रगभस्तिनागसौम्यगा-न्धर्ववारुणभारतेति नवखण्डमण्डिते सुमेरुनिषधहेमकूटहिमवत् विन्ध्याचलानां हरिवर्षकिंपुरुषवर्षयोर्जगतिस्तृते मलया-द्युत्तरे स्वर्णप्लक्षेन्द्रशुद्धरमणगन्धर्वाहलालखण्डिते भारतवर्षे भरतखण्डे प्रजापतिक्षेत्रे कर्मभूमौ ब्रह्मावर्तान्त कुरुक्षेत्रादि सुमध्यरेखाया पूर्वदिग्भागे मेरोः दक्षिणदिग्भागे श्रीशैलस्योत्तर-दिग्भागे कावेरीगोदावर्यो मध्यप्रदेशे भास्करक्षेत्रे भगवतो महापुरुषस्य विष्णोः आज्ञया प्रवर्तमानस्य तन्नाभिसरोरु-हात् उत्पन्नस्य सकलजगत्स्रष्टः परार्धद्वयजीविनो ब्रह्मणः प्रथमपरार्धे पञ्चाशदतीते एकपञ्चाशद्वर्षे प्रथमे मासे प्रथमे पक्षे

प्रथमे दिवसे तस्मिन्द्वितीये यामे तृतीये मुहूर्ते स्वायंभुव स्वारोचिषोत्तमतामसरैवतचक्षुषाख्येषु मनुषु व्यतीतेषु सप्तमे वैवस्वतमन्वन्तरे कलियुगे प्रथमे पादे बुद्धावतारे शालिवाहनके शकाब्दे चान्द्रमासन-सौरादिमानैः व्यवहृते प्रभवादीनां षष्ट्याः संवत्सराणां मध्ये-वर्षे-अयने-ऋतौ-मासे-पक्षे-अमुकपुण्यकाले मम जन्माभ्यासात् जन्मप्रभृत्येतत्क्षणपर्यन्तं बाल्य-यौवन-कौमार-वृद्धत्वेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायेन्द्रियव्यापारैः रहसि [illegible] वा ज्ञानतोऽज्ञानतश्च मया कृतानां प्रकाशकृतमहापातक [illegible] व्यतिरिक्तानां प्रकाशकृतानां महापातकातिदिष्टरूपातिपातकानां महापानकसमरूपानूपातकानामुपपातकानां सङ्करीकरणानां मलिनीकरणानामपात्रीकरणानां जातिभ्रंशकराणां [illegible] कीर्णानां प्रकीर्णानां रहस्यकृतानां, महापातकानां ज्ञानतः सकृत्कृतानामज्ञानतोऽभ्यस्तानामज्ञानतो ज्ञानतश्चात्यन्ताभ्यस्तानामज्ञानतो ज्ञानतश्च निरन्तराभ्यस्तानामज्ञानतो ज्ञानतश्च चिरकालाभ्यस्तानां बहूनां बहुविधानां सर्वेषां पापानामपनोदनार्थे—

सर्वप्रायश्चित्तप्रयोगः पूर्वमभिहितः । नवविधपातकानि

महापातक, आतिदेशिकपातक (अतिपातक), समपातक, उपपातक, सङ्करीकरण, मलिनीकरण, अपात्रीकरण, जातिभ्रंशकरण, प्रकीर्णकानि ॥

प्रायश्चित्ताङ्गं वपनं सर्वत्र कार्यम् । सुवासिनीनां नास्ति वपनम् ।

वपनप्रकारः - जङ्घोरुवक्षः कक्षेषु रोमाणिभुजयोस्तथा ।

गुह्यदेशं शिखावर्जं श्मश्रुकेशांश्च वापयेत् ।
क्रमेण पाणि पादस्य नखानि च निकृन्तयेत् ॥

केशानां वपनं नास्ति नारीणां व्रतसत्रयोः ।
महापातेषु सर्वेषु छेदयेदङ्गुलिद्वयम् ॥
पादयोश्चैव पाण्योश्च कुर्यान्नखनिकृन्तनम् ।

**वपनमन्त्रः ।**

यानि कानि च घोराणि ब्रह्महत्यायुतानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

आत्मनः शुद्धिकामो वा प्रविष्टः पर एव वा ।
वपनं कारयिष्यामीत्येवं मन्त्रमुदीरयन् ॥

“अग्निरिति भस्म” इति मन्त्रेण भस्मस्नानम् ।
पञ्चगव्यमन्त्रैः पञ्चगव्यस्नानम् ।

व्रतद्विगुणमाचरेत्केशं न रक्षति चेद्व्रती ।
तथापि लोमवपनं कारयेन्नखकृन्तनम् ॥

राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशानां वपनं हित्वा प्रायश्चित्तं समाचरेत् ॥

केशानां रक्षणार्थाय द्विगुणं व्रतमाचरेत् ।
द्विगुणे व्रत आदिष्टे दक्षिणाद्विगुणाभवेत् ॥

**एतन्महापातकव्यतिरिक्तविषयम् । तत्र प्रमाणम् ।**

विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः ॥

सर्वप्रायश्चित्तमनन्तरं उत्तरांगगोदानं कुर्यात् । मया आचरित परिषन्निर्णीत प्रायश्चित्तोत्तरांगभूतं उदीच्यांगगोदानं करिष्य इति संकल्प्य, हिरण्यगर्भगर्भस्थं - वज्रमध्यनभूता या, विश्वरया घौघनाशिनी । विश्वरूपा वरादेवः प्रीयतामनया गवा ॥ इमां गां प्रायश्चित्तौ तत्रांग भूतां श्रीमहाविष्णुप्रीतिद्वारा सर्वप्रायश्चित्तस्यादगुण्य कामयमानः तुभ्यमहं संप्रददे । न मम इति दद्यात् ।

अनन्तरं मया आचरितसर्वप्रायश्चित्त साद्गुण्यार्थं न्यूनातिरिक्तदोषपरिहारार्थं च दशदानानि करिष्ये इति सकल्प्य दशदानानि ।

'गोभूतिलहिरण्याज्य वासोधान्य गुडानि च ।
रौप्यं लवणमित्येत्र दशदानं प्रकीर्तितम्' ॥

इत्युक्तप्रकारेण दद्यात् । ततः परं मयाऽऽचरित सर्व प्रायश्चित्त साद्गुण्यार्थं भूरिदानं करिष्य इति संकल्प्य हिरण्यगर्भ-च्छमे, इमां भूरिदक्षिणां दीनान्धकृपणेभ्यः संप्रददे-इति दद्यात् ।

अथ अलक्ष्मीपरिहारार्थं आयुष्याभिवृद्ध्यर्थं निरीक्षिताज्यदानं करिष्य इति सकल्प्य आज्यपूर्णं कांस्यपात्र पुरतः विधाय' रूपं रूपं प्रतिरूपो बभूव इतिमन्त्रेण मुखमवलोक्य ।

याऽलक्ष्मीर्यच्चमेदौस्थ्यं सर्वांगेषु व्यवस्थितम् । तत्सर्वं शमयाज्यत्वं श्रियं पुष्टिं च वर्धय । इदं कांस्यपात्रपूरितं निरीक्षिताज्यं सदक्षिणाकं मम अलक्ष्मी परिहारार्थं आयुष्याभिवृद्ध्यर्थं च कामयमानस्तुभ्यमहं संप्रददे, न मम इति दद्यात् ।

अनन्तरं मयाचीर्ण सर्वप्रायश्चित्तसाद्‌गुण्यार्थं ब्राह्मणान् भोजयिष्ये, इति संकल्प्य-यथाशक्ति द्वादशावरान् ब्राह्मणान् भोजयेत्। ततः यस्य स्मृत्या च नामोक्त्या "प्रायश्चित्तान्य शेषाणि" इतिद्वयं नामत्रयं च जप्त्वा - मया आचरितं सर्व-प्रायश्चित्ताख्यं कर्म ब्रह्मार्पणं भवतु। इति सर्वप्रायश्चित्तप्रयोगः। अयं दिनत्रयेण कर्तव्यः। अशक्तानां बालानां रोगिणां सांगोपांगं एकस्मिन दिने कारयेत्।

सर्वप्रायश्चित्ते विधवानां सङ्कल्पः - अस्नानभोजनद्विवार-भोजन पर्युषितान्नभोजन कांस्यपात्रभोजन मादकद्रव्यभक्षण ताम्बूलचर्वण कुसुम्भरक्त चित्रवस्त्रादिधारण पुष्पधारण भर्तृ-स्मरणतर्पणादिराहित्य भर्तृनिन्दाश्रवणादिप्रकीर्णकानां इत्यादि यथायथ निवेशनीयः। तासां शिरोमात्रवपनं नान्दी वैष्णव-श्राद्धादिकमस्त्येव। शालाहोमं ब्राह्मणमुखेन कारयेत्।

इति सर्वतन्त्रस्वतन्त्र, महादेवनृपति सचिव, हेमाद्रिसूरि-विरचिते चतुर्वर्गचिन्तामणौ प्रायश्चित्तप्रकरणं सम्पूर्णम्॥

॥ श्री विश्वेश्वरो जयति॥

# शुद्धाशुद्धपाठपट्टिका

| पृष्ठं | पङ्क्ति | अशुद्धम | शुद्धम् |
|---|---|---|---|
| 2 | 4 | घवा | वाघ |
| 5 | 10 | ऐ | ए |
| 10 | 9 | ड़ु | षु |
| 12 | 2 | मर्ध | धर्म |
| 13 | 14 | भव | भ |
| 15 | 16 | भा | भार |
| 20 | 20 | तद्विन्द्या-प्रिये | तं विद्या-पित्र्ये |
| 25 | 3 | चौन | चण |
| 50 | 13 | दत्तं | न दत्तं |
| 52 | 15 | मम् | मान् |
| 69 | 15 | नि | पि |
| 80 | 5 | ता | वा |
| 71 | 6 | ह | य |
| 81 | 11 | श | ब |
| 87 | 5 | दा | वया |
| 95 | 2 | क्ष | क्रम |
| 99 | 21 | च्चा | च्चया |
| 101 | 6 | वश | वच |
| 103 | 1 | ना-प | ज्ञा-न् |
| 105 | 21 | श्वि | श्व |
| 124 | 14 | य | त |
| 128 | 14 | म | प |
| 130 | 8 | म | मत |
| 136 | 19 | र: | रं |
| 160 | 22 | देवतो न | स्वरूपतो |
| 165 | 8 | ट्य | य |
| 167 | 6 | ग | म |
| 194 | 20 | हे | हो |
| 200 | 1 | य | र |
| 207 | 3 | त्य | त्यय |

